# भट्टिकाव्यम् ।

जयमङ्गलरचितजयमङ्गलया

भरतमल्लिककृतमुग्धबोधिन्या टीकया च समलङ्कृतम् ।

( तृतीयखण्डम् । )

दशमावधिद्वाविंशसर्गपर्य्यन्तम् ।


पण्डितकुलपतिना, बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृत्य प्रकाशितम् ।



चतुर्थसंस्करणम् ।

कलिकातानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितम् ।

प्रिण्टर, :—बि, बि, मुखार्ज्जी ।

२ नं०, रमानाथ मजुमदार ष्ट्रीट ।

१९१३ ।

# भट्टिकाव्यम् ।

---

## दशमः सर्गः ।

अथ स वल्कदुकूलकुथादिभिः परिगतो ज्वलदुद्धतवालधिः ।
उदपतद्दिवमाकुललोचनैर्नृरिपुभिः सभयैरभिवीक्षितः ॥ १ ॥

अनुप्रासवत् ।

शब्दलक्षणमुक्तमपि लक्षयन् काव्यलक्षणार्थं प्रसन्नकाण्डमुच्यते काव्यस्यात्र प्रसन्नत्वात् प्रथमश्चेदं लक्षणं यत्र प्रसन्नता नाम अविद्वदङ्गनाबालप्रतीतार्थं प्रसन्नवदिति शब्दलक्षणं पुनः प्रकीर्णमिव द्रष्टव्यम। तत्रास्मिन् काण्डे चत्वारः परिच्छेदाः, अलङ्कारमाधुर्य्यप्रदर्शनदोषाः भाषासमावेशश्चेति। तत्रालङ्कारो द्विविधः शब्दालङ्कारोऽर्थालङ्कारश्चेति। तत्र पूर्वो द्विविधः, अनुप्रासो यमकश्चेति। तत्र अनुप्रासं दर्शयन्नाह।

अथेति। अथ दाहादेशानन्तरं स वानरो वियदाकाशमुदपतत् उत्पतितवान्। वल्कम् अंशुकं शुल्कवल्कोल्का इति निपातनम्। आदिशब्दादन्यैरपि कुशादिभिः परिगतः परिवेष्टितः ज्वलदुद्धतः ज्वलन् दीप्यमानः ऊर्द्धीकृतो वालधिः पुच्छं यस्य सः। नृरिपुभिः राक्षसैः सभयैराकुललोचनैरभिवीक्षितः किमयमनुष्ठास्यतीति। अनुप्रासवदिति अनुप्रासो यस्मिन् विद्यते इति तस्य च लक्षणम्। "सरूपवर्णविन्यासमनुप्रासं प्रचक्षते" इति ॥ १ ॥ ज० म०

अथ प्रकीर्णकशब्दलक्षणमुक्तं काव्यं लक्षयन् प्रसन्नकाण्डमारभते। काव्यस्यात्र प्रसन्नत्वात्। प्रसादः शब्दार्थयोर्गुणविशेषः। तत्रास्मिन् काण्डे चत्वारः परिच्छेदाः, अलङ्कारस्य माधुर्य्यादिगुणस्य भाविकस्य भाषासमावेशस्य च दर्शनात्। काव्यशोभाजनकोऽलङ्कारः। स च द्विविधः। शब्दालङ्कारोऽर्थालङ्कारश्च। तत्र पूर्वो द्विविधः, अनुप्रासो यमकश्च। तत्र प्रथममनुप्रासशब्दालङ्कारं प्रदर्शयति।

अथेत्यादि। अथ दाहादेशानन्तरं स वानरो वियदाकाशम् उदपतत् उड्डीनवान्। कीदृशः, वल्कैस्तरुविशेषत्वग्भिर्दुकूलैः क्षौमैः कुथैश्चित्रकम्बलैः आदिशब्दात् कुशादिभिश्च

रणपण्डितोऽग्र्यविबुधारिपुरे कलहं स राममहितः कृतवान् ।
ज्वलदग्नि रावणगृहञ्च बलात् कलहंसराममहितः कृतवान् ॥२॥
युक्पादयमकम् ।

---

परिगतो वेष्टितः ज्वलन् उन्नत ऊर्द्धीकृतो बालधिः पुच्छं यस्य सः तथा नृरिपुभिः राक्षसैरभिवीक्षित आभिमुख्येन भालितः। कीदृशैः किमयं करिष्यतीति समये-त्रासयुक्तैः अतएव आकुललोचनैः आकुलानि इतस्ततः परिक्षिप्तानि लोचनानि येषां "वल्कं वल्कलमस्त्रियाम्" इत्यमरः। "कार्पासं बादरं प्रोक्तं दुकूलाद्यञ्च वल्कलम्" इत्यमरमाला। कुथपदस्थाने कुशपदं केचित् पठन्ति। "बालहस्तस्तु बालधिः" इत्यमरः। द्रुतविलम्बितनामवृत्तमिदं तल्लक्षणं यथा। द्रुतविलम्बितमाह नभौ भरा-विति। अनुप्रासवदिति अनुप्रासो विद्यतेऽस्मिन्निति मोक्ष्मभ्रूपादत्वरिति वतुः। वर्णावृत्तिरनुप्रासः तथा च "वर्णानामनुवृत्तिर्या नातिदूरान्तरश्रुतः। अनुप्रासः स तेनैव सनाथा काव्यपद्धतिः" इति। "सरूपवर्णविन्यासमनुप्रासं प्रचक्षते" इति च। अनुप्रासो द्विविध उत्कटानुप्रासश्छेकानुप्रासश्च अनेकस्य वर्णस्य सकृत्साम्यं छेकानुप्रासः स एवोत्कटत्वादिह प्रदर्शितः ॥ १ ॥ भ०

यमकस्यापि लक्षणम्। "तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम्। वर्णानां यः पुनर्वादो यमकं तन्निरूप्यते ॥" इति तदनेकविधं दर्शयन्नाह।

रणेति। स कपिः वियदुत्पतितो राममहितो रामपूजितः रणपण्डितो युद्धकुशलः अग्र्यविबुधारिपुरे अग्र्यो यो विबुधः इन्द्रः तस्य यो रिपुर्दशाननस्तस्य पुरे लङ्कायां कलहं कृतवान् कलहंसान् रमयतीति कलहंसरामं रमेर्ण्यन्तात् कर्म्मण्यण्। तादृशं रावणगृहं बलाद्धार्य्यमाणोऽपि ज्वलदग्नि दीप्यमानपावकम् कृतवान्। कृतं विद्यते यस्येति कृतापेक्षौत्यर्थः। अहितः शत्रुः। युक्पादयमकमिति युजोर्द्वितीय-चतुर्थयोः पादयोर्यमितत्वात् ॥ २ ॥ ज० म०

अथ यमकान्युच्यन्ते। "तल्लक्षणं यथा। तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम्। वर्णानां यः पुनर्वादो यमकं तन्निरूप्यते।" इति। अस्य भेदा बहवः काव्यप्रकाशादौ दर्शिताः केचनात्र दर्शिताः। तत्र प्रथमं युक्पादयमकं दर्शयति।

रणेत्यादि। अग्र्यस्य श्रेष्ठस्य विबुधस्य इन्द्रस्य योऽरिः शत्रुः दशाननः तस्य पुरे लङ्कायां स कपिः कलहम् युद्धम् कृतवान्। रावणस्य गृहम् ज्वलदग्नि दीप्यमानपावकम् बलाद्धार्य्यमाणोऽपि कृतवान् चकार। रावणगृहम् कीदृशं

**निखिलाभवन्न सहसा सहसा ज्वलनेन पूः प्रभवता भवता।**
**वनिताजनेन वियता वियता त्रिपुरापदं नगमिता गमिता॥ ३॥**

**पादान्तयमकम्।**

कलहंसरामं कलहंसेन कादम्बेन राममभिरामं कलहंसान् रमते रमयतीति अन्तर्भूतण्यर्थाद्रमेः ढातर्षाणति घण्। वा कलहंसा रमन्तेऽत्रेत्याधारे घञ् वा। यद्वा बलेन रूपेण भर्ता भर्तन्यो गच्छन्त्यः कलहंसरामा राजपत्नी यत्र गृहे तत्तया। स कीदृशः रणपण्डितः युद्धकुशलः राममहितः रामेण महितः पूजितः महपूजे मार्त्तिकार्थेन्यादिना वर्त्तमानविहितः क्तो भूतकालस्य बाधक इति केचित्। वस्तुतस्तु भूते कर्मणि क्तः। आनुबन्धादिभ्यो वर्त्तमानक्तेनातीतकालस्य बाधेन प्रमाण-मिति कातन्त्रटीकाकृताप्युक्तम्। अहितः शत्रुः अर्थाद्राक्षसानाम्, यस्य विष्णोः राम-रूपस्य हित इति वा क्रतवान् क्रती कार्य्यज्ञः हिंसावान् वा "बलं गन्धे रसे रूपे स्थामनि स्थौल्यसैन्ययोः" इति रभसः। "कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे" इति। "क्रतं युगेऽपि हिंसायाम् पर्य्याप्ते विहिते कुले" इति विश्वः। युक्पादयमकमिति युजोर्द्वितीयचतुर्थयोः पादयोर्यमकितत्वात्। तथा च। "द्वितीये च चतुर्थे च यमकम् यत्र दृश्यते। युक्पादयमकं तत्तु विज्ञेयं कविपुङ्गवैः" इति॥ २॥

निखिलेत्यादि। ज्वलनेनाग्निना प्रभवता वृद्धिं गच्छता भवता समुत्पद्यमानेन सहसा तत्क्षणं पूः पुरी निखिला सर्वा न सहसा अभवत् सानन्दा न जाता हासस्या-नन्दकार्य्यत्वात् एतत्सुक्तं स्वनहसोर्वेत्यपि रूपम्। वनिताजनेन वियता नभसा वियता भयादितस्ततो गच्छता त्रिपुरापदं गमिता प्रापिता। पूः त्रिपुरेष्वपि दह्यमानेषु भयादि-तस्ततो जनो गतः। नगं त्रिकूटपर्वतं इता सती। पादान्तयमकमिति पादान्तेषु यमितत्वात्॥ ३॥ ज० म०

निखिलेत्यादि। ज्वलनेनाग्निना सहसा तत्क्षणात् निखिला सकला पूर्लङ्का सहसा हास्यसहिता नाभवत् किन्तु सशोकाभवत् हासस्यानन्दकार्य्यत्वात्। ज्वलनेन कीदृशेन प्रभवता वृद्धिं गच्छता भवता उत्पद्यमानेन। पूः कीदृशी वनिताजनेन त्रिपुरा-पदं त्रिपुरसम्बन्धिनीमापदं विपत्तिं गमिता प्रापिता स्त्रीजनेन कीदृशेन वियता गगनपथेन वियता गच्छता भयात् पलायमानेन यथा हरशराग्निना सन्दह्यमानेषु त्रिपुरेषु भयाद्वनिता इतस्ततो गच्छन्ति तथा अत्रापीति भावः। ज्वलनेन त्रिपुरापदं गमिता वनिता जनेनोप-

सरसां सरसां परिमुच्य तनुं पततां पततां ककुभो बहुशः ।
सकलैः सकलैः परितः करुणैरुदितैरुदितैरिव खं निचितम् ॥४॥

पादादियमकम् ।

न च काञ्चन काञ्चनसद्मचितिं न कपिः शिखिना शिखिना समयौत् ।

प्रमितेति केचित् । पुनः कीदृशो नगं त्रिकूटपर्वतम् स्रुता प्राप्ता नगेन मिता परिच्छिन्नेति वा । इरितेत्ति इतः विपूर्वादिणः मतः वौल ईडवदित्यस्मादा ईल कान्तिगतिव्याप्तिक्षेपप्रजन खादनेषु इति । प्रमिताक्षरानाम वृत्तं तल्लक्षणं यथा । "प्रमिताक्षरा सजससैः कथिता" इति । पादान्तयमकमिति पादचतुष्टयान्ते यमकितत्वात् ॥ ३ ॥ भ०

सरसामित्यादि । सरसाम् तोयाशयानाम् तनुं शरीरं सरसाम् सार्द्रां परिमुच्य त्रासात् त्यक्त्वा पतताम् पक्षिणाम् बहुशः बहून् वारान् ककुभो दिशः पततां गच्छताम् उदितैः शब्दितैः वदेर्यजादित्वात् सम्प्रसारणम् । सकलैः समस्तैः सकलैः माधुर्यवद्भिः कलशब्दस्य गुणमात्रवृत्तित्वाच्च तद्वति वर्तते ततश्च सहशब्देन समासो भवति । करुणैः कारुण्यजनकैः रुदितैरिव क्रन्दितैरिव परितः समन्तात् खमाकाशम् विततम् व्याप्तम् । पादादियमकमिति पादानामादौ यमितत्वात् ॥ ४ ॥ ज० म०

सरसामित्यादि । सरसां जलाशयानां सरसाम् आर्द्रां स्निग्धां तनुं शरीरं जलाशयमध्यं परिमुच्य भयात् त्यक्त्वा बहुशो बहून् वारान् ककुभो दिशः पतताम् गच्छताम् पक्षिणाम् उदितैः शब्दितैः खमाकाशम् परितः सर्वतो निचितम् व्याप्तं रुदितैरिव क्रन्दितैरिव सकलैः सम्पूर्णैः सकलैः अव्यक्तमधुरैः कलशब्दोऽत्र धर्मिवचनः किं वा सर्वैरुदितैर्ध्वनैः अव्यक्तमधुरध्वनियुक्तैरित्यर्थः वाक्यसमुदायस्यावयवयोगात् करुणैः कारुण्यजनकैः । केचित् सरसाम् सम्बन्धिनाम् पतताम् सरसाम् तनुं परिमुच्य भयात् परिशोष्येत्याहुः । वदेः क्तो यजस्वपादीगिति जिः । तोटकनामवृत्तं तल्लक्षणं यथा । "वद तोटकमब्धिसकारयुतम् ।" पादादियमकमिति चतुर्णां पादानामादौ यमकितत्वात् ॥ ४ ॥ भ०

न चेत्यादि । काञ्चनसद्मचितिं सौवर्णगृहसंहतिम् काञ्चन काञ्चिदपि शिखिना अग्निना शिखिना ज्वालावता न कपिर्न च समयौत् न च न मिश्रितवान् अपि तु संश्लेषं नीतवान् । यौतेर्लुङि उतो वृद्धिर्लुकि हलीति वृद्धिः । कञ्च कपिनाम हिमवानकृता हिनवानस्य हिमापचयस्य कर्त्ता शिखिना अक्षातेर्भातेः

नच न द्रवता द्रवता परितो हिमहानकृता न कृता क्वचन ॥ ५ ॥

पादमध्ययमकम् ।

अवसितं हसितं प्रसितं मुदा
विलसितं ह्रसितं स्मरभासितम् ।
न समदाः प्रमदा हतसम्मदाः
पुरहितं विहितं न समीहितम् ॥ ६ ॥

चक्रवालयमकम् ।

---

ल्युट् न च न द्रवता न च न विसर्पता अपि तु इतस्ततो गच्छता द्रवता द्रवभावः परितः न न कृता किन्तु कृतैव काञ्चनसञ्चितेरित्यर्थात् । पादमध्ययमकमिति पदानां मध्ये यमितत्वात् ॥ ५ ॥ ज० म०

न चेत्यादि । कपिर्हनूमान् काञ्चन काञ्चनसञ्चितिं सौवर्णगृहसंहतिम् शिखिना अतिशयितशिखायुक्तेन जाज्वल्यमानेन शिखिना वह्निना न समयौत् इति न अवश्यमेव समयौत् मिश्रितवान् । युञ् मिश्रणे चौः अपिङ्स्तोऽद्वेर्त्रिरिति त्रिः । अभिधानात् विभक्त्यन्तात् किमश्चिन्नाविष्यते । हिमहानकृता वह्निना परितः सर्वतो न च न द्रवता अपि तु गच्छता सता क्वचन कुत्रापि काञ्चनसञ्चितेर्द्रवता द्रवत्वम् न कृता अपि तु कृतैव । द्रुगतौ शतृः, द्रवस्य भाव इति तः, हिमस्य हानम् नाशम् करोतीति क्विप् हानमिति जहातेरनटि रूपम् । पादमध्ययमकमिति चतुर्णां पादानां मध्ये यमकितत्वात् ॥ ६ ॥ भ०

अवेत्यादि । हसितं यत् प्रसितं सन्ततप्रवृत्तं नित्यप्रमुदितत्वात्तदवयजनस्य तदग्निसङ्गमादवसितम् अपगतं षोऽन्तकर्मणीत्यस्य यतिस्यतीतोत्वं मुदा हर्षेण यद्विलसितं शृङ्गारविचेष्टितं लसितं श्लिष्टमनुबद्धमिति यावत् स्मरभासितं मन्मथदीपितम् ह्रसितम् अल्पीकृतं प्रमदाश्च स्त्रियः न समदाः सदर्पा न जाताः हतसम्मदाः ध्वस्तहर्षाः प्रमदसम्मदौ हर्षे इति निपातनम् । यच्च पुरहितं पुरानुकूलं समीहितं कर्तुमीप्सितं तन्न विहितं नानुष्ठितमित्यर्थः । चक्रवालयमकमिति मण्डलाकारेण यमितत्वात् तथा हि । द्वयोर्द्वयोः पदयोरन्त्यवर्णानां नेमिवदवस्थितत्वात् मध्यस्य वर्णस्याविसदृशस्य नेमिवदिति । तथा चास्य लक्षणं "पादानामवसाने तु वाक्ये स्यात् स्यवधर्ता । प्रतिपादं भवेदेक चक्रवालं तदुच्यते" इति ॥ ६ ॥ ज० म०

समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा।
समिद्धशरणादीप्ता देहे लङ्कामतेश्वरा॥ ७॥

समुद्गयमकम्।

---

अवेत्यादि। मुदा हर्षेण यद्धसितं हास्यं प्रसितम् अत्यन्तप्रवृत्तमासीत् तदवसितं विनष्टम् तवत्यलोकानामप्रमुदितत्वात्। षोऽन्तकर्मणि अकर्मकत्वात् गत्यर्था-कर्मकेत्यादिना कर्त्तरि क्तः, दीप्यतेरेस्थामिति क्तिः, प्रसितमिति षिञ्‌ बन्धे इत्यस्य रूपम्। किञ्च मुदा यत् विलसितं विलासः शृङ्गारचेष्टितं स्वरेण कामेन भासितम् उद्दीपितं लसितं संश्लिष्टमासीत् तदप्यवसितमिति सम्बन्धः। लसश्लेषणक्रीडनयोः हसित-मिति पाठे विलसितमन्वीभूतम्। प्रमदाश्च स्त्रियो न समदाः न सदर्पाः यतो हतसम्पदा नष्टहर्षा जाताः। चकलनट इति मदेरल्। यच्च पुरहितं नगरानुकूलं समीहितं कर्त्तुमिष्टं तन्न विहितं नानुष्ठितम्। चक्रवालयमकमिति मण्डला-कारेण यमकितत्वात्तथा हि सर्वेषां पादानाम् अन्त्यवर्णानां सदृशतया नेमिवदव-स्थितत्वात् मध्यस्य वर्णस्य च विसदृशस्य नाभिवदवस्थितत्वात् मण्डलाकारता। लक्षणं यथा। पादानामवसाने तु सर्वेषां तुल्यरूपता। प्रतिपादं भवेद्यत्र चक्रवालं तदुच्यते" इति॥ ६॥ भ०

समिद्धेत्यादि। देहे अभ्यन्तरभागे समिद्धशरणा उज्ज्वलगृहा तत एव दीप्ता शोभावती लङ्का पुरी मतेश्वरा ज्ञातमहादेवा तत्रान्यदेवस्य नामापि न गृह्यते। समिधो दधति धृतवन्तो येन समिद्धा ऋषयः पूर्वस्मादातोऽनुपसर्गे क इति कः। द्वितीयस्मादन्येष्वपि दृश्यत इति डः, अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात् धात्व-न्तरादपि भवति। शृणाति हिंसत्यस्मादिति पूर्वमवर्णः तान् शृणवन्ति हिंसन्तीति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट्। समिद्धशरणा राक्षसास्तान् दासमानाभ्यामादीपयति प्रोत्साहयतीति क्विप् समिद्धशरणादीप् तेन रावणेन ताय्यते पाल्यत इति तायतेः कर्मणि कार्ये विवक्षिते सम्पदादिदर्शनात् क्विप्, वेरपृक्तस्येति लोपात् पूर्वं लोपो व्योर्वलीति लोपः। समिद्धशरणा दीप्ता रावणस्य पालनीया समिद्धशरणा दीप्ता लङ्का देहे दग्धा अलङ्कामोऽस्थित्यलङ्कामः तद्भावः अलङ्कामता तस्यामलङ्कामतायां पर्य्याप्तकामायाम् ईश्वरा लङ्का सर्वकामसम्पादनात्। समुद्गयमकमिति समुद्गाकारेण यमितत्वात् पादद्वयोरर्द्ध-द्वयोश्च सम्पुटवत् सादृश्यात्॥ ७॥ ज० म०

समिद्धेत्यादि। लङ्का देहे दग्धा भर्यात् हनूमता कर्मणि ठौ। कीदृशी देहे

पिशिताशिनामनुदिशं स्फुटताम्
स्फुटतां जगाम परिविह्वलता।
ह्वलता जनेन बहुधाचरितम्
चरितं महत्त्वरहितं महता॥ ८॥

काञ्चीयमकम्।

अभ्यन्तरभागे समिद्धशरणा उज्ज्वलगृहा "शरणं गृहरक्षित्रोः" इत्यमरः। अतएव दीप्ता शोभावती मतेश्वरा मतो ज्ञात ईश्वरो महादेवो यस्यां तत्रान्यदेवस्य नामापि न ज्ञायते इति भावः। मतः पूजित इति वा, पुनः कीदृशी समिद्धशरणादीप्ता समिधो दधातीति आदन्तत्वात् हनशनादिति डः, किं वा समिधो जुहोतीति तेनैव समादित्वात् डः। समिद्धो मुनिः तं शृणन्ति हिंसन्तीति समिद्धशरणा राक्षसाः शकृगिहिंसने कभावेऽसौ इति कर्त्तर्यनट् नन्द्यादित्वात् वा। तान् मानदानाभ्यामादीपयतीति कर्त्तरि क्विप्। समिद्धशरणादीप् रावणः तेन ताय्यते पाल्यते इति कर्मणि क्विप्। तायृङ् पालनसन्तत्योः लोपो व्योर्वलि इति यलोपः। समिद्धशरणादीपो रावणस्य पालनीयेत्यर्थः। किं वा समिद्धानां दीप्तिमतां देवादीनां शरणेन हिंसनेन अदीपं दीप्त्यभावं तायते पालयति सन्तनुते वेति भावे क्विप्। दीपनं दीविति भावे क्विप् पश्चान्नञ्समासः। अलङ्कामतेश्वरा अलङ्कामतायां यथेष्टेच्छायाम् ईश्वरा सर्वेच्छायाः सम्पादयित्रीत्यर्थः। अलमत्यर्थः कामोऽस्य अलङ्कामः तस्य भावोऽलङ्कामता तस्यामीश्वरेति सप्तमीसमासः। वरप्रत्ययान्तादीश्वरशब्दात् स्त्रियामत आबित्याप् भवत्येव। औणादिकवरट्प्रत्ययान्तात्तु ईप्प्रत्यय इति बोध्यं श्रीपतिस्वरसात्। नद्यादावीश्वरशब्दं विभाषया पठन्त्यन्ये। औणादिरयमित्यपरे। यद्वा लङ्काभिः कुलटाभिर्मतः पूजित ईश्वरो यत्र। यद्वा अलमत्यर्थं कामत ईप्सत ईश्वरो यत्र कोरीषदर्थे इति कुशब्दस्य कादेशः। "लङ्का रक्षःपुरीशाखाडाकिनीकुलटासु च" इति विश्वः। समुद्गयमकमिति द्वयोरर्द्धयोः सम्पुटाकारेण यमकितत्वात्। तथा च रुद्रभट्टः "अर्द्धं पुनरावृत्तं जनयति यमकं समुद्गकं नाम" इति "अर्द्धाभ्यासः समुद्गः स्यात्" इति दण्डी॥ ७॥ भ०

पिशिताशिनामित्यादि। पिशिताशिनां मांसाशिनां राक्षसानामनुदिशं दिशि दिशि अव्ययीभावे शरत्प्रभृतिभ्य इति टच् स्फुटतां पलायमानानां परिविह्वलता स्फुटतां स्पष्टतां जगाम। जनेन चेतरेण ह्वलता चलता महता शौर्यादिगुणयुक्तेनापि

**न गजा नगजा दयिता दयिता विगतं विगतं ललितं ललितम्।**
**प्रमदा प्रमदा महता महता मरणं मरणं समयात् समयात् ॥९॥**

**यमकावली।**

सता यच्चरितं चेष्टितं बहुधा बहुप्रकारं तन्महत्त्वरहितं महता विकलमाचरितं अनुष्ठितं भयात्। काञ्चीयमकमिति रसनाकारेण यमितत्वात् तदाद्यपादस्यान्ते अपरस्यादौ च सदृशो विन्यासः ॥ ८ ॥ ज० म०

पिशितेत्यादि। पिशिताशिनां राक्षसानां परिविह्वलता व्याकुलता स्फुटतां स्पष्टतां जगाम। किङ्कुर्वताम् अनुदिशं दिशि दिशि स्फुटतां पलायनेन विकाशं गच्छतां स्फुटशि विकाशे अनुशब्देन वीप्सायामव्ययीभावे शरद्विपाडच इति अप्रत्ययः। महता शौर्य्यादिगुणयुक्तेनाप्यपरेण जनेन ह्वलता चलता महत्त्वरहितं माहात्म्यविवर्जितं चरितं चेष्टितं बहुधा बहुप्रकारैः आचरितं कृतं भयात्। ह्वलह्मल चाले। काञ्चीयमकमिति रसनाकारेण यमकितत्वात् तथा च। "एकस्यान्तेऽपरस्यादौ सदृशं दृश्यते यदि। तत्काञ्चीयमकं नाम व्याहृतं कविपुङ्गवैः।" इति। एतदेव दण्डिना सन्दष्टयमकम् उक्तम् तथाहि। "सन्दष्टयमकस्थानमन्तादी पादयोर्द्वयो रिति" ॥ ८ ॥ भ०

न गजेत्यादि। गजा हस्तिनः नगजाः पर्वतजाताः अतएव दयिता इष्टा न दयिताः न रक्षिताः दयतिरत्र रक्षणार्थः। विगतं वीनां पक्षिणां गतं गमनमपि विगतं नष्टम्। ललितं यदीप्सितं वस्तु तल्ललितं पीडितम्। प्रमदा योषित् प्रमदा प्रगतो मदो यस्या इति प्रमदा हर्षशून्येत्यर्थः। आमहता रोगपीड़ितेव आमोरोग इवशब्दलोपोऽत्र द्रष्टव्यः। अमेन पीड़िता पलायनहता वा अमो गत्यादिषु। महतां शूराणाम् मरणम् अविद्यमानयुद्धं मरणं विनाशनं समयात् सम्प्राप्तं यातेर्लङि रूपं समयात् कालेन। यमकावलीति यमकमाला ॥ ९ ॥ ज० म०

न गजेत्यादि। गजा हस्तिनो न दयिता न रक्षिताः। *अिदयङ् रक्षणे गतौ वधे दानेऽदने। कीदृशाः नगजाः पर्वतजाः तेनोत्कृष्टा अतएव दयिता इष्टाः। परञ्च विगतं वीनां पक्षिणां गतं गमनं विगतं विनष्टम् अग्निदग्धपक्षत्वात्। ललितमीप्सितं वस्तु हारभेदो वा ललितं चलितं भयाकुलजनसंसर्गादन्यत्र गतमित्यर्थः। "ललितं हारभेदे स्यादीप्सिते चलितेऽपि च" इति विश्वः। प्रमदा नारी अप्रमदा प्रमदरहिता हर्षशून्या इत्यर्थः प्रगतमदा वा। आमहता रोगपीड़ितेव इवशब्दार्थोऽत्र गम्यते। अमक रोगे यद्वा अज् अमेन गमनेन हता पीड़िता यद्वा अमेन दाहेन हाहा-

न वानरैः पराक्रान्तां महद्भिर्भीमविक्रमैः ।
नवा नरैः पराक्रान्तां ददाह नगरीं कपिः ॥ १० ॥

अयुक्पादयमकम् ।

द्रुतं द्रुतं वह्निसमागतं गतं महीमहीनद्युतिरोचितं चितम् ।
समं समन्तादपगोपुरं पुरं परैः परैरप्यनिराकृतं कृतम् ॥ ११ ॥

पादाद्यन्तयमकम् ।

---

कारशब्देन वह्निशब्देन वा हता व्याकुला अमगती शब्दे । महतां शूराणाम् अरणं युद्धरहितं मरणं समयात् कालवशात् समयात् सम्प्राप्तम् । यानेर्घी । यद्वा महतां अभानाम् अह खेदेऽद्भुते निश्चये वा तां प्रमदां समया समीपे समयात् कालेन युद्धरहितं मरणम् आत् आगतम् अत सातत्यगमने इत्यस्मात् आङ्पूर्वात् क्विप् । स्त्रियं हत्वा यतो न गच्छन्तीत्यर्थः । यमकावलीति यमकमाला तथा हि । "पदेषु यत्र सर्वेषु सादृश्यं दृश्यते यदि । यमकावलिरुद्दिष्टा शिष्टा यमककोविदैः इति ॥ ९ ॥ भ०

नवेत्यादि । वानरैः अन्यैर्महद्भिर्महाप्राणैर्भीमविक्रमैः असह्यशौर्यैः शक्रादिभिः न पराक्रान्तां नावष्टब्धां नगरीं लङ्कां नरैर्मनुष्यैर्न च पराक्रान्तां विगृहीतां कपिर्हनूमान् ददाह दग्धवान् । अयुक्पादयमकमिति । प्रथमतृतीययोर्यमितत्वात् ॥ १० ॥ ज० म०

नवेत्यादि । कपिर्हनूमान् नगरीं ददाह दग्धवान् नगरीं कीदृशीं वानरैर्वालिसुग्रीवादिभिर्न पराक्रान्तां न गता सर्वैर्मनुष्यैः कार्त्तवीर्यादिभिः न पराक्रान्तां न विगृहीतां किं वा अनरैर्मनुष्यभिन्नैः देवयक्षादिभिरपि नवा पराक्रान्ता न च विगृहीतां कीदृशैर्महद्भिर्महाप्रमाणैर्भीमविक्रमैर्भीमशौर्यैः शिवतुल्यपराक्रमैर्वा । अयुक्पादयमकमिति । अयुजोः प्रथमतृतीययोर्यमकितत्वात् ॥ १० ॥ भ०

द्रुतमित्यादि । यत्पुरं चितं सौवर्णगृहरचनया व्याप्तं तद्वह्निसमागतम् अग्निसंयुक्तं द्रुतं विलीनं द्रुतं प्रवाहेण प्रवृत्तं द्रुतं शीघ्रम् अहीनया उत्कृष्टया द्युत्या तेजसा रोचितं भासितं महीं गतं प्राप्तम् अपगोपुरम् अपगतपुरद्वारम् अतएव समन्तात् सर्वतः समं तुल्यं कृतं परैः शत्रुभिः परैरपि उत्कृष्टैरपि शक्रादिभिः अनिराकृतम् अनभिभूतं यत् । पादाद्यन्तयमकमिति पादस्यादावन्ते च यमितत्वात् ॥ ११ ॥ ज० म०

द्रुतमित्यादि । पुरं लङ्कां समन्तात् सर्वतः समं भूमितुल्यं कृतम् उच्चानां द्रुतत्वात्

नश्यन्ति ददर्श वृन्दानि कपीन्द्रः ।
हारीण्यबलानां हारीण्यबलानाम् ॥ १२ ॥

मिथुनयमकम् ।

नारीणामपनुनुदुर्न देहखेदान्
नारीणामलसलिला हिरण्यवाप्यः ।

कीदृशं द्रुतं शीघ्रं द्रवीभूतं यतो वह्निसमागतम् अग्निसंयुक्तं महीं भूमिं गतं प्रवाहेण प्राप्तं अहीनद्युतिरोचितम् अहीनया उत्कृष्टया द्युत्या दीप्त्या रोचितं शोभितम् अहीनद्युलिना रावणेन रोचितं अभिलषितमिति केचित् । चितं स्वर्णगृहादिभिर्व्याप्तम् अतएव वह्नियोगे द्रवत्वमुक्तम् अपगोपुरम् अपगतपुरद्वारं परैः उत्कृष्टैरपि परैः शत्रुभिः इन्द्रादिभिः अनिराकृतम् अनभिभूतं "द्रुतं शीघ्रे विलीने च विद्राणे चाभिधेयवत्" इति विश्वः । पादाद्यन्तयमकमिति पादस्यादावन्ते च यमकितत्वात् ॥ ११ ॥ भ०

नश्येत्यादि । अबलानां स्त्रीणाम् अबलानाम् अविद्यमानरक्षकाणां वृन्दानि समूहान् हारीणि हारवन्ति हारीणि अवश्यं हरन्ति आवश्यके णिनिः । चेतस इत्यर्थात् नश्यन्ति पलायमानानि सन्ति कपीन्द्रो ददर्श । मिथुनयमकमिति पादद्वयस्य चक्रवाकमिथुनवदवस्थितत्वात् ॥ १२ ॥ ज० म०

नश्यन्तीत्यादि । कपीन्द्रो हनूमान् अबलानां स्त्रीणां वृन्दानि समूहान् ददर्श दृष्टवान् । कीदृशानि नश्यन्ति नाशं प्राप्नुवन्ति पलायमानानि वा । हारीणि हारयुक्तानि हारीणि मनोहारीणि ग्रहादित्वात् णिन् । अवश्यं हरन्तीति आवश्यके णिनिति परः । कीदृशानाम् अबलानाम् अविद्यमानरक्षकाणाम् अतिकृशानां वा । तनुमध्याच्छन्दः लक्षणं यथा । त्यौ चेत्तनुमध्या । मिथुनयमकमिति पादद्वयस्य चक्रवाकयुगलवत् स्थितत्वात् ॥ १२ ॥ भ०

नारीत्यादि । अरीणां सम्बन्धिन्यो हिरण्यवाप्यः सुवर्णघटिता वाप्यः नारीणां स्त्रीणाम् देहखेदान् अग्नितापान् न अपनुनुदुः न अपनीतवत्यः । कुतः आरीणामलसलिलाः रीङ् स्रवण इत्यस्मादाङ्पूर्वात् स्वादय ओदित इति निष्ठानत्वम् । आरीणं गतममलं सलिलं यासु हिरण्यवापीष्वपि वृक्षांशोपेत्य गत्वा तासां शर्म सुखं नाभवत् न जातम् अनलपरीतपवपुष्यत्वात् वृक्षाणाम् । आरीणां नारीणामिति योज्यं शत्रुसम्बन्धिनीनामित्यर्थः । अरीणामिमा इति तस्येदमित्यण् तदन्तात् टिड्ढाणञित्यादिना ङीप् । अत

नारीणामनलपरीतपत्रपुष्पात्
नारीणामभवदुपेत्य शर्म्म वृक्षान् ॥ १२ ॥

वृत्तयमकम् ।

अथ लुलितपतत्रिमालं रुग्णासनबाणकेशरतमालम् ।

---

वृक्षानुपेत्य स्थितानामित्यध्याहर्त्तव्यम् अन्यथा असमानकर्त्तृकत्वात् पूर्वकाले क्त्वाप्रत्ययो न स्यात् वृत्तयमकमिति प्रतिपदं पुष्पफलस्येव मूलेऽवस्थितत्वात् ॥ १२ ॥ ज० म०

नारीणामित्यादि । हिरण्मयवाप्यः सुवर्णघटननिर्मितदीर्घिका नारीणां स्त्रीणां देहस्वेदान् अग्निसन्तापजनितान् न अपनुनुदुः न अपनीतवत्यः । हिरण्मयवाप्यः कीदृश्यः आरीणामलसलिलाः आरीणं द्रुतम् अमलं निर्मलं सलिलं स्वर्णजलं यासु अग्नितेजसा स्वर्णघटितत्वीरस्य द्रुतत्वात् स्वर्णजलं तत्र जातमित्यर्थः । आरीङ्ग्य स्रवणे आङ्पूर्वात् क्तः, लूत्वाद्योरिति नः । किं वा शुष्कत्वादारीणम् ईषद्गतं जलं यासु रीगो रषे गतौ गत्यर्थात् कर्त्तरि क्तः, ल्वादित्वात् क्तस्य नः णत्वञ्च । आरीणाम् अरिसम्बन्धिनीनां तासां नारीणां वृक्षान् उपेत्य समीपे गत्वा स्थितानां शर्म्म सुखं नाभवत् न जातं स्थितानामित्यध्याहारात् समानकर्तृकता । वृक्षान् कीदृशान् अनल-परीतपत्रपुष्पान् अनलेनाग्निना परीतं व्याप्तं पत्रञ्च पुष्पञ्च येषां तान् अतएव न शर्म्म । नारीणां कीदृशानां नारीणाम् आपो नारा इति प्रोक्तास्तत्र भवानां ततो वा आगतानां वरुणलोकादानीतानामित्यर्थः । नारीणामिति अरिशब्दात् तस्येमा इति णः । शर्म्म नाभवदित्यत्र पूर्वतो नञनुषज्यते । केचित्तु अरीणां शत्रूणां हिरण्य-वाप्य इति पूर्वत्र योजयन्ति, नारीणां जलभवानामिति न व्याचक्षते तन्मते परार्द्धेऽपि नञ् विद्यते । क्वचित्तु पुष्पान्नारीणामिति न द्वयसंयोगवत् पाठो दृश्यते । तत्र पूर्वोक्तव्याख्यायां न नञनुषङ्गस्तस्य विद्यमानत्वात् । केचित्तु आङ्पूर्वादर्त्तेरीणादिक इप्रत्ययः । आ समन्तात् रीणां गच्छन्तीनामित्याहुः । प्रहर्षिणीच्छन्दः, लक्षणं यथा । "त्र्याशाभिर्म्मनजरगाः प्रहर्षिणीय" मिति । वृत्तयमकमिति प्रतिपादं पुष्पफलस्येव मूले वृत्तवदवस्थितत्वात् तथा हि "पादादौ सदृशं यस्य प्रतिपादं प्रदृश्यते । तद्वृत्तयमकं नाम कथ्यते कविपुङ्गवैः" इति ॥ १२ ॥ भ०

अथेत्यादि दाहानन्तरं लुलितानां चलितानां पतत्रिणां पक्षिणां माला संहतिः यस्मिन् तद्वनमशोकवनिकाख्यं स कपिर्जगाम । रुग्णाः भग्नाः असनादयो यस्मिन् वने तत्रासनः पीतसालः बाणः ग्रन्थिकाकेशरो नागकेशरो देववल्लभो वा । विविक्ताः शून्यो

स वनं विविक्तमालं सीतां द्रष्टुं जगामालम्॥ १४॥

पुष्पयमकम्।

घनगिरीन्द्रविलङ्घनशालिना वनगता वनजद्युतिलोचना।
जनमता ददृशे जनकात्मजा तरुमृगेण तरुस्थलशायिनी॥ १५॥

पादादिमध्ययमकम्।

मालाः स्रजो यस्मिन् तद्विविक्तमालं सीतां द्रष्टुम् अलं पर्य्याप्तं सीतां द्रक्ष्यामीति जगाम। पुष्पयमकमिति प्रतिपादं हन्तादुपरि पुष्पमिव अवस्थितत्वात्॥ १४॥ ज० म०

अथेत्यादि। अथ दाहानन्तरं स हनुमान् अलं पर्य्याप्तं सीतां द्रष्टुं वनम् अशोकवनिकां जगाम। वनं कीदृशं लुलितपतविमालं लुलिता चलिता पतविणां पक्षिणां माला संहतिर्यत्र यद्यपि छन्दःशास्त्रे सानुस्वारस्य गुरुत्वमनुशिष्टं तथापि "तथा पादान्तगोऽपि वे" ति वचनात्तस्य लघुत्वात् प्रथमपादे द्वादशमात्रा भवन्ति किन्तु भवति नेह विषमेत्र इत्यार्य्यायां प्रथिकं तृतीयगणस्यात्र मध्यगुरुत्वात् सन-गणादौ इन्ताजोमलङ्घटगेऽजो विषम इत्यत्र नञः प्रशंसापरत्वमिति टीकाकृतोक्तम्। आपचमतौ यपञ्चम ओट्टागेन हो इगुरुमजखा गुब्विर्णीए गुणवहि आगहो ईसिशआसेइ इत्यनेन अप्राशस्त्योक्तत्वात् न तु विषमस्थजगणे लक्षणवहिर्भूता गाथा भवन्तीति। वस्तुतः पविमालमिति पाठः। मध्ये तकारपाठो लेखकप्रमादात्। रुग्णा भग्ना असनादयो यत्र वने असनः पीतसालः बाणो झिण्टीविशेषः "केशरं हिङ्गुलि प्रोक्तं केशरो नागकेशरे। सिंहजटायां किञ्जल्कपुन्नागवकुलेष्वपी" ति विश्वः। तमालः स्वनामख्यातः। विविक्ताः पृथग्भूता मालाः स्रजः पङ्क्तयो यत्र तत्तथा "विविक्तः स्यादसम्पृक्ते विविक्तः शुभपूतयोः। चारुवह्नर्शिते धीरैर्विविक्तं रहसि स्मृत" मिति विश्वः। पुष्पयमकमिति प्रतिपादान्ते हन्तोपरि पुष्पवत् स्थितत्वात्॥१४॥ भ०

घनेत्यादि। तरुमृगेण कपिना जनकात्मजा ददृशे दृष्टा। घनाः निरन्तराः ये गिरीन्द्राः मेघसदृशा वा तेषां विलङ्घनम् अतिक्रमणं तेन शालिना युक्तेन कपिना वनगता काननस्था वनजद्युतिलोचना पद्मस्येव कान्तिर्ययोर्लोचनयोः ते तथाविधे लोचने यस्याः। नक्रोडादिबह्वचः च इति ङीप् प्रतिषेधः। जनमता जनेनावबुद्धा पति-व्रतेयमिति मनु अवबोधन इत्यस्य भूते निष्ठायां रूपम् न लोकेति षष्ठीप्रतिषेधः, कर्त्तरि तृतीया, तस्याश्च कर्त्तृकरणे इति समासः। वर्त्तमाने तु मतिबुद्धीत्यादिना क्तप्रत्ययः' क्तस्य च वर्त्तमाने इति षष्ठी, तस्याश्च क्तेन च पूजायामिति समासप्रतिषेधः स्यात्

कान्ता सहमाना दुःखं च्युतभूषा ।
रामस्य वियुक्ता कान्ता सहमाना ॥ १६ ॥
विपथयमकम् ।
मितमवददुदारं तां हनूमान् मुदाऽरम्
रघुवृषभसकाशं यामि देवि ! प्रकाशम् ।

---

तरुस्थलशायिनी तरुमूले यत् स्थलं तत्रैव शयाना सत्यपि शयने तेन व्रत इति णिनिः । आदिमध्ययमकमिति पादानामादौ मध्ये च घनवनजनतरुशब्दानां यमितत्वात् ॥ १५ ॥ ज० म०

घनेत्यादि । तेन तरुसर्गेण कपिना तरुस्थलशायिनी जनकात्मजा ददृशे कर्मणि रूपम् । तेन कीदृशेन घनगिरीन्द्रविलङ्घनशालिना घना निविडा ये गिरीन्द्राः पर्वताः तेषां विलङ्घनं विद्यतेऽस्येति अस्त्यर्थे शालिन्प्रत्ययो बोध्य इति शाब्दिकाः । यद्वा तेषां विलङ्घनेन शाडितं शोभितं शीलं यस्य शाडृ श्लाघायां णिनिः । डलयोरलयोरेति लत्वम् । कीदृशी वनगता अशोकवनिकास्थिता पुनः कीदृशी वनजद्युतिलोचना वने जले जायते इति गमादित्वात् डः । वनजं पद्मं कैरवं वा तस्येव द्युतिर्ययोस्तादृशी लोचने यस्याः सा "वनं सलिलकाननम्" इत्यमरः । पुनः कीदृशी जनेन मता ज्ञाता पतिव्रतात्वेन पूजिता वा न तु जनानामिति षष्ठी, तथा चोक्तं कारकषष्ठी न समस्यते इति न्यायात् । ज्ञानेच्छापूजेति क्तः, तद्योगे प्राप्तापि षष्ठी न स्यात्, अथास्यानित्यता च दृश्यत इति न्यायात् । यद्वा वर्त्तमाने क्तो नातीतक्तस्य बाधक इति अतीते वा क्तः । तत्र चकारात् मनुबोधने धातूनामनेकार्थत्वात् पूजार्थेऽप्यस्य प्रयोगः । आदिमध्ययमकमिति प्रतिपादमादिमध्ययोस्तुल्यत्वात् ॥ १५ ॥ भ०

कान्तेत्यादि । कान्ता कमनीया सहमाना वेदयमाना दुःखं वियोगजं च्युतभूषणा रामस्य कान्ता प्रिया वियुक्ता वियोगिनी सहमाना सह मानेन वर्त्तत इति वोपसर्जनस्येति सभावविकल्पः ददृशे इति सम्बन्धः । विपथयमकमिति पादद्वयातिक्रमात् विपथेन विमार्गेण यमितत्वात् ॥ १६ ॥ ज० म०

कान्तेत्यादि । जनकात्मजा सीता कीदृशी ददृशे कान्ता कमनीया दुःखं वियोगजं सहमाना तत्रोद्वेगं न करोतीत्यर्थः । च्युतभूषणा अपगतभूषणा रामस्य कान्ता प्रिया वियुक्ता वियोगिनी सहमाना मानेन चित्तसमुन्नत्या पूजया वा सहिता । विपथयमकमिति पादद्वयातिक्रमात् विपथेन विमार्गेण यमकितत्वात् । तनुमध्याच्छन्दः ॥ १६ ॥ भ०

तव विदितविषादो दृष्टकृत्स्नामिषादः
श्रियमनिशमवन्तं पर्वतं माल्यवन्तम् ॥ १७ ॥

मध्यान्तयमकम्।

उदपतद्वियदप्रगमः परैरुचिरमुन्नतिमत् पृथुसत्त्ववत्।
रुचिरमुन्नतिमत्पृथुसत्त्ववत्प्रतिविधाय वपुर्भयदं द्विषाम् ॥ १८ ॥

गर्भयमकम्।

मितमित्यादि। मितम् अल्पाक्षरम् अर्थावगाढं तां सीतां हनूमान् मुदा हर्षेण युक्तः अवदत् कथितवान् किमित्याह। अहं शीघ्रं हे देवि! रघुवृषभसकाशं राम-समीपं माल्यवन्तं पर्वतं प्रकाशं प्रकटं यामि। तव विदितविषादो ज्ञातावसादः दृष्टकृत्स्नामिषादः वीक्षिताशेषनिशाचरः आमिषं मांसम् अदन्तीति कर्मण्यण् वा-सरूपोऽस्त्रियामिति वचनात् अदोऽनन्न इति विट्प्रत्ययेनाणो विकल्पेन बाधनात्। श्रियं शोभाम् अनिशमवन्तं रक्षन्तं पर्वतम्। मध्यान्तयमकमिति पादस्य मध्ये अन्ते च यमितत्वात् ॥ १७ ॥ ज० म०

मितमित्यादि। हनूमान् मुदा हर्षेण मितमल्पाक्षरमुदारं गम्भीरार्थं ताम् अवदत् किमित्याह। हे देवि! अहं शीघ्रं रघुवृषभस्य रघुश्रेष्ठस्य सकाशं समीपं माल्यवन्तं पर्वतं प्रकाशं यथा स्यात् तथा यामि। तव विदितो ज्ञातो विषादो येन विषादस्य नित्यसापेक्षत्वात् समासः। दृष्टः कृत्स्नः सकल आमिषादो राक्षसो येन स तथा। अनिशं सततं श्रियं शोभाम् अवन्तं माल्यवन्तं नाम पर्वतम्। मध्यान्तयमकमिति मध्यान्तपादयोर्यमितत्वात्। मालिनीवृत्तम् ॥ १७ ॥ भ०

उदपतदित्यादि। वियदाकाशमुदपतत् उत्पपात। परैः शत्रुभिरप्रगमः अनभि-भवनीयः। गमेः यदुपहुनौश्चिनमश्चेति कर्मण्यप्, कर्तृकर्मणोः कृतीत्यत्र विभाषोपसर्गे इति मण्डूकप्लुत्या अनुवर्त्तनीयं, सोपसर्गस्य प्रयोगे विभाषा षष्ठी। रुचिरं शोभितं वियत् निर्मलत्वात् अथवा अप्रगमोऽन्येषामित्यर्थात्। परैरुत्कृष्टैरन्तरीक्षचारिभिः रुचिरं दीपितम् उन्नतिमत् उच्छ्राययुक्तं पृथुसत्त्ववद्भिः प्राणिभिर्युक्तम्। किं कृत्वा उदपत-दित्याह। वपुः शरीरं प्रतिविधाय कृत्वा रुचितान् तुष्टान् रोदयतीति रुचिरमुन् अर्थोऽवान्तरः। द्विषां शत्रूणां भयदं नतिमत् तदानीं दैवेषु कृताशिरःप्रणामत्वात् अथवा रुचिरमिवाभीष्टमेव वपुः उन्नतिमत् विभूतिमत् पृथुसत्त्ववत् विस्तीर्णसत्त्ववत्

बभौ मरुत्वान् विकृतः समुद्रो बभौ मरुत्वान् विकृतः समुद्रः ।
बभौ मरुत्वान् विकृतः समुद्रो बभौ मरुत्वान् विकृतः समुद्रः ॥१९॥
सर्वयमकम् ।

सत्त्वगुणयुक्तं वा । गर्भयमकमिति द्वयोः पादयोर्मध्ये पादद्वयस्य यमितत्वात् ॥ १८ ॥
ज० म०

उदपतदित्यादि । कपिर्वियदाकाशमुदपतत् उत्पपात । कीदृशः परैः शत्रुभिः अप्रगमोऽनभिभवनीयः । न प्रगम्यतेऽसौ अप्रगमः, यद्वा परैः सह नास्ति प्रकृष्टं गमनं यस्येत्यर्थः । अतिशीघ्रगामित्वात् । कीदृशं वियत् परैः उत्कृष्टैः अन्तरालगामिभिः रुचिरं दीपितं, पुनः कीदृशम् उन्नतिमत् उच्छ्राययुक्तं पृथुसत्त्ववत् महाप्राणियुक्तम् उन्नतिमत् इति सत्त्वविशेषणं वा । किं कृत्वोदपतदित्याह द्विषां शत्रूणां भयदं वपुः रुचिरमुत् रुचिराम् दृष्टान् मोदते इति क्विप् । नतिमत् तदानीं देवैषु कृतप्रणामत्वात् । गर्भयमकमिति मध्यपादद्वयस्य यमितत्वात् ॥ १८ ॥ भ०

बभावित्यादि । मरुत्वान् हनूमान् पितृत्वेन मरुद्विद्यते अस्येति कृत्वा मतुप् इति वत्वम् । विविधं कृतं वनभङ्गादि कर्म येन, विविधं वा कृन्ततीति विकृतः इगुपधलक्षणः कः । वृक्षादीनां छेदक इत्यर्थः । समुद्रो मुद्रया अभिज्ञानेन चूडामणिना सह वर्त्तते इति समुत्पतितो नभसि तेजःपुञ्ज इव बभौ दीप्यते स्म इत्ययं प्रथमः पादः । तस्मिन् तथाभूते मरुत्वान् इन्द्रः अनुजीवितया मरुतो देवा अस्य सन्तीति कृत्वा विकृतः रावणपरिभवात् विकृतदैवाधिपत्यः विकृतः स च समुद्रः मुद्रया अप्सरसा सह वर्त्तमानः समुपलब्धमारुतिवृत्तान्तः बभौ हृष्टवान् । कपिना तावदिदं कृतं रामः पुनः समूलं छेत्स्यतीति अनेकार्थत्वात् धातूनां भातिरत्र तुष्टौ वर्त्तते इत्ययं द्वितीयः । समुद्रो जलनिधिः मरुत्वान् हनुमदुत्पतनजनितवायुना युक्तः अतएव विकृतोऽतिक्रान्तमर्यादः बभौ बभूव अत्र सत्तायां प्रयुक्तः इत्ययं तृतीयः । स लोकपालो मरुत्वान् महाभूतात्मकेन युक्तः मरुत्वान् पूर्ववत् मतुप् मरुत्वानिति व्याख्याने झयन्तां जयोऽन्त इति जश् स्यात् । मुदो हर्षस्य दाता पुत्रो मे सुखेन यास्यतीति मुदं राति ददातीति आतोऽनुपसर्गे कः । विकृतो मन्दगतिः बभौ वाति स्म, अत्र गतौ प्रयुक्त इत्ययं चतुर्थः । अन्यस्त्वाह । यमकेषु क्रियापदस्याभिधेयत्वं न दुष्यतीति तेन दीप्त्यर्थ एव योज्यः । सर्वयमकमिति चतुर्णामपि पादानां सदृशत्वात् ॥ १९ ॥ ज० म०

बभावित्यादि । मरुत् वायुः पितृत्वेन वेगजनितत्वेन वा विद्यते यस्य स हनूमान्

अभियाता वरं तुङ्गं भूभृतं रुचिरं पुरः।
कर्कशं प्रथितं धाम ससत्त्वं पुष्करेक्षणम्॥

बभौ शुशुभे इत्यन्वयः। कीदृशः विविधानि कृतानि वनभङ्गलङ्कादाहादीनि येन सः। समुद्रः मुद्रया प्रत्यभिज्ञानेन चूडामणिना सहितः, "मुद्राप्रत्ययकारिणी" इति कोषः। इति प्रथमपादार्थः। तस्मिंस्तथाभूते सति मरुत्वान् इन्द्रो बभौ तुतोष धातूनामनेकार्थत्वात् भातिरत्र तोषे। कीदृशः विक्रतः पराभवात् विगता क्रिया जगत्परिपालनरूपा यस्य सः। समुद्रः मुद्राख्याभिः अप्सरोभिः सहित इति द्वितीयपादार्थः। समुद्रः सागरोऽपि बभौ चुकोप धातूनामनेकार्थत्वात् भातिरत्र कोपे। पुनः पुनर्वानरेण लङ्घनात् कीदृशः मरुत्वान् मरुतो देवा विद्यन्ते यस्य सः। "मरुतौ पवनामरौ" इत्यमरः। अतएव विक्रतः अतिक्रान्तमर्यादः। वीन् पक्षिणः क्रामति वेष्टते इति विक्रतः, क्रमौ च वेष्टे पूर्ववत् कः, अतिक्रान्तमर्यादत्वात् इति तृतीयपादार्थः। वाचकत्वेन मरुच्छब्दो विद्यतेऽस्य मरुत्वान् वायुर्बभौ वाति स्म भातिरत्र गत्यर्थः। केचित्तु मरुद्वायुर्वान् गच्छन् बभौ सन्धेरनित्यत्वात् न तस्य दत्वम्। यदुक्तं "संहितैकपदे नित्या नित्या धातूपसर्गयोः। सूत्रेष्वपि तथा नित्या सैवान्यत्र विभाषिता॥" इत्याहुः। स्वमते मत्वरमित्यत्वम्, वावातो डीरित्यत्र औकारणेनेष्टसिद्धौ डित्करणेन ज्ञापितमिति देवीदासचक्रवर्तिनोक्तम्। कीदृशः विक्रतः मन्दगतित्वात् पूर्वस्मात् अन्यथाभूतः। समुद्रः समुत् सहर्षो रोऽग्निर्यस्मात् वायोरग्निसखत्वात्। किं वा स इति विशेष्यपदम्, स लोकपालत्वेन प्रसिद्धो वायुरित्यर्थः। मुदं प्रीतिं गात्रसंसर्गात् राति ददातीति मुद्रः। इत्यर्थं चतुर्थपादार्थः। सर्वत्र भातेर्दीप्त्यर्थत्वमेव युक्तमिति। केचित् नैकं पदं द्विः प्रयोज्य प्रायशोऽर्थत्वेन तेनात्र भातिनानार्थत्वेन प्रयुक्तो न दोषावहः। सर्वयमकमिति पादचतुष्टयस्य तुल्यरूपत्वात्। कण्ठाभरणेन महायमकमिदमुक्तम्। तथा हि, "एकाकारचतुष्पादं महायमकमुच्यते" इति। रुद्रटमते पङ्क्तिरिति नाम। तदुक्तम् "अन्योन्यं पश्चिमयोरावृत्त्या पादयोर्भवति पुच्छः। सर्वैः साङ्गं युगपत् प्रथमस्य जायते पङ्क्तिः॥" इति॥ १९॥ भ०

अभियातेत्यादि। भूभृतं रामं वरं श्रेष्ठं तुङ्गं महाकुलीनत्वात् इति सर्वेषाम् उपरिस्थितं गुणैः रुचिरं सर्वाङ्गसुन्दरं पुरोऽग्रतो वक्षःस्थले कर्कशं लोमशं प्रथितं लोके प्रख्यातं धाम गृहं वर्णाश्रमधर्माणां ससत्त्वं पराक्रमयोगात् पुष्करेक्षणं पद्मलोचनम् अभियाता आभिमुख्येन यास्यति हनूमान्। लुटि रूपम्। अभियातेत्यादि। भूभृतं पर्वतं यत्र अङ्गदादयः स्थिताः तदभिया अभिगच्छता हनूमता कुतः पुरो लङ्कायाः सका-

अभियाता वरं तुङ्गं भूभृतं रुचिरं पुरः ।
कर्कशं प्रथितं धाम ससत्त्वं पुष्करेक्षणम् ॥ २० ॥

महायमकम् ।

शात् पुष्करे आकाशे धाम तेजः क्षणं मुहूर्त्तं प्रथितं विस्तारितम् । अभियातीत्यन्येभ्योऽपि दृश्यते इति क्विप्, तृतीयैकवचने आतोधातोरित्याकारलोपे अभियेति रूपम् । कीदृशम् अतावरं सातत्येन अततीति पचाद्यच् । अतो वायुः आदित्यो वा आहणोतीत्यप् । आवरः अतस्यावरं यतः तुङ्गम् उच्चैस्तरं रुचिरं तुष्टिदं रुचिं रातीति कर्कशं कठिनस्वभावं ससत्त्वं प्राणियुक्तम् । महायमकमिति श्लोकस्यैकस्य द्वितीयेन श्लोकेन यमितत्वात् ॥ २० ॥ ज० म०

अभीत्यादि । अथात् अव हनूमान् कर्त्ता भूभृतं राजानं रामम् अभियाता अभिगमिष्यति ऌटां रूपम् । यद्वा भूभृतम् अभियाता आभिमुख्येन गन्ता हनूमान् बभौ भाति स्म इति पूर्वेणान्वयः । क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तते इति कृद्योगेऽपि कर्मणि द्वितीया । किं वा शीलार्थत्वं विवक्षितम्, किं वा अभियोगे द्वितीया । भूभृतम् कीदृशं वरं श्रेष्ठं तुङ्गं सर्वेषाम् उपरि स्थितं महाकुलीनत्वात् । रुचिरं सर्वाङ्गसुन्दरं पुरोऽग्रे वक्षःस्थले कर्कशं महापुरुषत्वात् कठिनं लोमशं वा प्रथितं लोकविख्यातं धाम गृहं गुणानाम् इत्यर्थात् । तेजःस्वरूपं वा, ससत्त्वं सपराक्रमं सत्त्वगुणयुक्तं वा पुष्करेक्षणं पुष्करवत् पद्मवत् ईक्षणे लोचने यस्य तम् किं वा युद्धार्थं पुष्करं शरम् ईक्षते पश्यति इति नन्द्यादित्वात् अनः । अभीत्यादि तेन हनूमता पुरो लङ्कायाः सकाशात् यत्र अङ्गदादयः सन्ति तं भूभृतं पर्वतम् अभिलक्ष्यीकृत्य याता गच्छता पुष्करे आकाशे धाम तेजः क्षणं मुहूर्त्तं प्रथितं विस्तारितम् यातेति यातेः शतृः । भूभृतं कीदृशं वरं व्रियतेऽसौ वरं कर्मण्यल् । देवादिभिः अङ्गदादिभिर्वा वृतमित्यर्थः । किं वा वरं श्रेष्ठं किं वा भूभृतं अभि लक्ष्यीकृत्य या गच्छता यातीति याः कर्त्तरि क्विप् । धोरालोपोऽच्यवानिति टापरे आलोपः । अतावरम् अतति सातत्येन गच्छतीति अतो वायुः सूर्य्यादिर्वा । अत सातत्यगमने पचादित्वादच् । आवृणोतीत्यावरः । अत्रापि पचादित्वादच् । अतस्यावरमिति समासः । पर्वतविशेषणं यतस्तुङ्गम् अत्युच्चं किं वा भूभृतम् अता गच्छता अततीति अत् कर्त्तरि क्विप् । अभिया अविद्यमानभयेन हनूमद्विशेषणम् । आवरम् आवृणोति अर्थात् सूर्य्यादीन् तुङ्गत्वात् इत्यावरं पूर्ववत् । पुनः कीदृशं पर्वतं रुचिरं तुष्टिदं रुचिं राति ददाति इनजनादिति डः । कर्कशं कठिनं पाषाणमयत्वात् ।

चित्रं चित्रमिवायातो विचित्रं तस्य भूभृतम्।
हरयो वेगमासाद्य सन्त्रस्ता मुमुहुर्मुहुः॥ २१॥

आद्यन्तयमकम्।

गच्छन् स वारीण्यकिरत् पयोधेः
कूलस्थितांस्तानि तरूनधुन्वन्।

समस्तं प्राणिभिर्हिंस्रादिभिर्युक्तम्। "पुष्करं पङ्कजे व्योम्नि पयः करिकराग्रयोः। औषधद्वीपविहगतीर्थराजोरगान्तरे। पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च॥" इतिविश्वः। महायमकमिति आद्यश्लोकस्य द्वितीयश्लोकेन यमकितत्वात्। तथा च रुद्रटः। "श्लोकं पुनरावृत्तं जनयति यमकं समुद्गकं नाम।" श्लोकस्तु महायमकमिति॥ २०॥ म०

चित्रमित्यादि। भूधरं पर्वतं चित्रं गैरिकादिभिर्नानावर्णम् अतएव चित्रमिव आलेख्यमिव आयातः आगच्छतस्तस्य हनूमतः वेगं जवं चित्रम् अद्भुतमासाद्य प्राप्य हरयः कपयः सन्त्रस्ताः सभयाः मुमुहुः मोहं गताः। मुहुः क्षणम् श्लोकाद्यन्तयमकमिति श्लोकस्यादावन्ते च यमितत्वात्॥ २१॥ ज० म०

चित्रमित्यादि। तस्य हनूमतः चित्रम् अद्भुतं वेगं यम् आसाद्य प्राप्य हरयः कपयः सन्त्रस्ताः सन्तो मुहुर्वारं वारं मुमुहुर्मोहम् उपागताः। तस्य कीदृशस्य भूभृतं पर्वतम् आयातः आगच्छतः यातेः शतः। कीदृशं भूभृतं विचित्रं गैरिकादिभिर्नानावर्णम् अतएव चित्रमिव आलेख्यमिव। आद्यन्तयमकमिति श्लोकस्यादावन्ते च यमितत्वात्॥ २१॥ भ०

अर्थालङ्कारस्तु दीपकरूपकादिभेदेन अनेकप्रकारः। तत्र वाक्यार्थप्रकाशनात् दीपकम् उच्यते तदादिमध्यान्तभेदात् विविधमिति दर्शयन्नाह।

गच्छन्नित्यादि। स हनूमान् वेगेन गच्छन् पयोधेर्वारीणि वेगजेन वायुना अकिरत् विक्षिप्तवान्। तानि वारीणि अधिक्षिप्तानि कूलस्थितांस्तरून् अधुन्वन् कम्पितवन्ति। धूञ् कम्पने इति सौवादिकः। ते तरवः कम्पिताः पुष्पोत्करान् पुष्पाणां प्रकरान् आस्तीर्णत इति कर्तरीरप्। अङ्गसुखान् मृदुस्पर्शत्वात् कायस्य सुखहेतून् अतन्वन् विस्तारितवन्तः। तान् पुष्पोत्करान् किन्नराः मन्मथिनः कामवन्तः अध्यतिष्ठन् अध्यासितवन्तः। अधिशीङित्यादिना अधिकरणस्य कर्मसंज्ञा। आदिदीपकमिति क्रियापदस्यादौ भूयमानत्वात्। द्विविधं ह्यादिदीपकम् एकतिङनेकतिङ् सहितञ्च तत्र यत्पूर्वं तदेकमप्यनेकार्थप्रकाशकम्। यथाह भामहः, "मदो जनयति प्रीतिमानन्दं

पुष्पास्तरांस्तेऽङ्गसुखानतन्वन्
तान् किन्नरा मन्मथिनोऽध्यतिष्ठन् ॥ २२ ॥

आदिदीपकम् ।

स गिरिं तरुषण्डमण्डितं समवाप्य त्वरया लतामृगः ।
स्मितदर्शितकार्य्यनिश्चयः कपिसैन्यैर्मुदितैरमण्डयत् ॥ २३ ॥

अन्तदीपकम् ।

---

मानभङ्गुरम् । यत् प्रियामङ्गमोत्कण्ठाममस्यां मनसः शुचिम् ॥" इति । यत्तु द्वितीयं तत्समस्तवाक्यार्थप्रकाशकं यथा इदमेव तत्र स्यात् सर्वेषां वाक्यार्थानामाद्येनैव दीपनात् । तस्मिन् असति शेषाणाम् अस्फुटत्वात् पूर्वकं परित्यज्य द्वितीयस्य प्रदर्शनं यत् तत् प्रतीपदीपकं नाम चतुर्थमस्तीति दर्शनार्थं तद्यथा "तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः, सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् । मान्यान् मानय विद्विषोऽप्यनुनय प्रख्यापय स्वान् गुणान्, कीर्त्तिं पालय दुःखिते कुरु दयामेतत् सतां चेष्टितम् ॥" इति शेषो यद्वत् परस्परमसम्बद्धमिति ॥ २२ ॥ ज० म०

अथ शब्दालङ्कारं प्रदर्श्य अर्थालङ्कारं दर्शयति स च बहुप्रकारो रूपकदीपकादिभेदात् तत्रादौ दीपकं दर्शयति ।

गच्छन्नित्यादि । स हनूमान् गच्छन् वेगजेन वायुना पयोभिर्वारीणि अकिरत् कृञ् विक्षेपे । तानि वारीणि विक्षिप्तानि सन्ति कूलस्थितान् तरून् अधून्वन् अकम्पयन् । धुञ् न कम्पे । ते तरवः कम्पिताः सन्तः पुष्पाणामास्तरणानि अतन्वन् विस्तारितवन्तः । तनदुञ् विस्तारे । अङ्गसुखान् शरीरे सुखजनकान् मृदुस्पर्शत्वात् तान् पुष्पास्तरान् किन्नरा मन्मथिनः कामिनः सन्तः अध्यतिष्ठन् अध्यवात्सुः कर्म्मक्रियेत्यादिना कर्म्मत्वम् । आदिदीपकमिव गच्छन् इत्यादौ उपादानात् तदेव सर्वां क्रियां दीपयति अन्यासां तन्मूलत्वात् । अकिरत् इति यदादौ दत्तं तेनैव अन्यासामपि क्रियाणाम् उद्दीपनादिति केचित् । तथाहि अकिरदिति क्रियापदेन कीर्णानि वारीणि इति योजना एवं सर्वत्र ॥ २२ ॥ भ०

स गिरिमित्यादि । स लतामृगो हनूमान् प्रयोजककर्त्ता गिरिम् अङ्गदादिभिः अध्यासितं तरुषण्डमण्डितं त्वरया वेगेन समवाप्य कपिसैन्यैर्मुदितैः प्रयोज्यकर्तृभिः अमण्डयत् मडि भूषायाम् इति भौवादिकः । चौरादिके तु कपि-

गरुडानिलतिग्मरश्मयः पततां यद्यपि सम्मता जवे।
अचिरेण कृतार्थमागतं तममन्यन्त तथाप्यतीव ते ॥ २४ ॥

मध्यदीपकम्।

सैन्यैः करणभूतैरिति योज्यम्। मुदितत्वे कारणमाह ख्यितदर्शितकार्य्यनिश्चयः ईषद्धसितप्रकटीकृतसीतोपलब्धिनिश्चयः। अन्तदीपकमिति अमण्डयदिति क्रियापदस्यान्ते निर्दिष्टत्वात् ॥ २३ ॥ ज० म०

स गिरिमित्यादि। स लतामृगः कपिर्हनूमान् प्रयोजककर्त्ता अङ्गदादिभिः अध्यासितं गिरिं त्वरया वेगेन समवाप्य मुदितैर्हृष्टैः कपिसैन्यैः प्रयोज्यैः अमण्डयत् शोभयामास। गिरिमिति काकाक्षिगोलकन्यायेन उभयत्र सम्बध्यते। भौवादिकमडि-धातोः प्रेरणे णिः। किं वा स लतामृगः कर्त्ता त्वरया गिरिं समवाप्य कपिसैन्यैः करणभूतैः अमण्डयत् शोभते स्म चौरादिकमडिधातोरूपम्। किमडि भूषे। गिरिम् कीदृशं तरुषण्डैर्वृक्षसमूहैर्मण्डितं कपिसैन्यानां मुदितत्वे हेतुमाह स्मितेति। स्मितेन ईषद्धास्येन दर्शितो ज्ञापितः कार्य्यस्य सीतादर्शनरूपस्य निश्चयो येन। "षण्डं पद्मादिसङ्घाते। षण्डः स्यात् गोपतावपि" इति विश्वः। सुन्दरीच्छन्दः। तल्लक्षणं यथा। "अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा" इति अत्र वाक्य-भेदाभावेऽपि अमण्डयत् इति अन्तिमक्रियापदेन सम्पूर्णवाक्योपकारात् अन्तदीपकम्। किं वा गिरिम् अवाप्य तं स्वयम् अमण्डयत् कपिसैन्यैश्च अमण्डयदिति वाक्यभेदोऽत्र मन्तव्यः ॥ २३ ॥ भ०

गरुडेत्यादि। पततां गच्छतां मध्ये यद्यपि गरुडादयो जवे वेगविषये सम्मता अभिमताः तथापि तं हनूमन्तम् अचिरेणैव कालेन कृतार्थं कृतकृत्यम् आगतम् अतीव जविनं ते कपयः अमन्यन्त मन्यतेर्लङि रूपम्। मध्यदीपकमिति क्रियापदस्य मध्ये निर्दिष्टत्वात् ॥ २४ ॥ ज० म०

गरुडेत्यादि। गरुडवायुसूर्य्या यद्यपि पततां गच्छतां मध्ये जवे वेगविषये लोकस्य सम्मता अभिमताः तथापि ते कपयः तं हनूमन्तम् अतीव जववन्तम् अमन्यन्त ज्ञातवन्तः। मन्यीङ् बोधे यतोऽचिरेणैव कालेन कृतार्थम् आगतम्। मध्य-दीपकमिति सम्मता इत्यस्यामन्यन्तेत्यस्य वा क्रियापदस्य मध्ये निर्दिष्टत्वात्। विद्यासा-गरस्तु जव इति कारकपदं मध्ये श्रूयमाणम् अतीव इत्यपि दीपयतीति कारक-दीपकमिदमित्याह ॥ २४ ॥ भ०

रूपकम् अनेकविधं दर्शयन्नाह।

व्रणकन्दरलीनशस्त्रसर्पः पृथुवक्षःस्थलकर्कशोरुभित्तिः ।
च्युतशोणितबद्धधातुरागः शुशुभे वानरभूधरस्तदासौ ॥ २५ ॥

रूपकम्

अस्यैव भेदा अपरे चत्वारः ।

चलपिङ्गलकेशरहिरण्यलताः स्फुटनेत्रपङ्क्तिमणिमंहतयः ।
कलधौतसानव इवाथ गिरेः कपयो बभुः पवनजागमने ॥ २६ ॥

एतद्विविष्टोपमायुक्तं रूपकम् ।

---

व्रणेत्यादि । असौ वानरो भूधर इव वानरभूधरः उपमितमित्यादिना समासः । तदा तस्मिन् वानरमध्यगमनकाले इत्यर्थः । शुशुभे शोभते स्म । व्रणानि शस्त्रकृतानि कन्दराणि इव शस्त्राणि सर्पा इव शस्त्रसर्पाः व्रणकन्दरेषु लीनाः शस्त्रसर्पा यस्य । वक्षःस्थलं कर्कशोरुभित्तिः इव स पृथुला विस्तीर्णा यस्य सः । शोणितं बद्धधातुराग इव श्लिष्टगैरिकादिराग इव स च्युतो यस्य । सर्वत्र उपमितमित्यादिना समासः । रूपकमिति सावयवेन भूधरेण उपमानेन सावयवस्य कपेः उपमेयस्य तत्स्वभावतया अध्यारोपितत्वात् यथोक्तम् "उपमानेन तुल्यत्वमुपमेयस्य रूप्यते । गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः" इति ॥ २५ ॥ ज० न०

व्रणेत्यादि । असौ वानरस्वरूपभूधरस्तदा वानरमध्यगमनकाले शुशुभे दीप्यते स्म । कीदृशः व्रणानि शस्त्रक्षतस्वरूपाणि कन्दराणि तेषु लीनाः शस्त्रस्वरूपाः सर्पा यस्य पृथु विस्तीर्णं वक्षःस्थलमेव कर्कशोरुः कठिनोरुः भित्तिः यस्य शोणितमेव बद्धधातुरागः श्लिष्टगैरिकादिरागः च्युतो यत्र । रूपकमिति व्रणादीनां कन्दरादिभिः इह सादृश्यं न वाच्यं किन्तु अभेद एव विवक्षितः । स च यद्यपि बाधितः तथापि सादृश्यातिशय-व्यञ्जनात् तथात्वं गम्यते । यदुक्तम् "उपमैव तिरोभूतभेदा रूपकमिष्यते इति । उपमानेन यत्तुल्यमुपमेयस्य रूप्यते । गुणानां समतां दृष्ट्वा रूपकस्यैव तद्विदुः" इति च । यदि व्रणानि कन्दराणि इव वानरो भूधर इव इत्युपमानसमासे उच्यते तदेतत् एव लुप्तोपमोदाहरणं बोद्धव्यम् । यद्वा उपमान समासेऽपि रूपकत्वमिति मते उदाहरणमिदम् । तथाच सरस्वतीकण्ठाभरणे, "यदोपमानशब्दानां गौणवृत्ति-व्यपाश्रया । उपमेये भवेद्वृत्तिस्तदा तद्रूपकं विदुः" इति ॥ २५ ॥ भ०

चलेत्यादि । अथपवनजागमने हनूमदागमने कपयो गिरेः तस्यैव कलधौत-

कपितोयनिधीन् प्लवङ्गमेन्दुर्मदयित्वा मधुरेण दर्शनेन।
वचनामृतदीधितीर्वितन्वन्नकृतानन्दपरीतनेत्रवारीन् ॥ २७ ॥

एतच्छेषार्थान्ववसितमवतंसकम्।

सानव इव सौवर्णकदेशा इव बभुः शोभन्ते स्म। पिङ्गलकेशराणि पिङ्गलसटाः तानि हिरण्मलता इव सुवर्णलता इव ताः चला येषाम्। कपीनां नेत्रपङ्क्तयो मणिसंहतय इव ताः स्फुटा उज्ज्वला येषाम् इति। एतदपि रूपकमेव किन्तु कलधौतत्वेन सानूनां विशिष्टत्वाद्विशिष्टोपमायुक्तं कमलकं नाम ॥ २६ ॥ ज० म०

चलेत्यादि। अथानन्तरं कपयोऽङ्गदादयः पवनजस्य हनूमत आगमने बभुः शोभन्ते स्म। तस्यैव गिरेः कलधौतसानव इव स्वर्णसानव इव। "कलधौतं रूप्यहेम्नोः" इति विश्वः। कीदृशाः पिङ्गलकेशराणि कपिलसटा एव हिरण्मलताः ताः चलाश्चला येषाम्। नेत्रपङ्क्तय एव मणिसंहतयस्ताः स्फुटा उज्ज्वला येषाम्। इदमपि रूपकमेव केशराणां लतात्वेन नेत्राणां मणित्वेन च रूपणात् किन्तु कलधौतसानूनां विशिष्टत्वाद् विशिष्टोपमायुक्तमिति ॥ २६ ॥ म०

कपीत्यादि। प्लवङ्गम इन्दुरिव प्लवङ्गमेन्दुः कपयः तोयनिधय इव कपितोयनिधीन् मधुरेण सुखेन दर्शनेन मदयित्वा हर्षयित्वा। मदीहर्षग्लपनयोः इति घटादित्वात् मित्त्वे ह्रस्वत्वम्। वचनानि अमृतमयदीधितय इव वचनामृतदीधितीर्वितन्वन् विस्तारयन् लोकहृत्तान्तसम्बोधकमाह्लादकं वचनमुदाहरन् इत्यर्थः। आनन्देन हर्षेण परीतं सञ्जातं नेत्रवारि येषां तान् एवंविधान् अकृत कृतवान्। एतद्रूपकं शेषार्थान्ववसितं रूपितात् अन्यो योऽर्थः आनन्दपरीतनेत्रवारीन् इति स शेषः। तेनान्ववसितं युक्तमवतंसकं नाम विसदृशस्यार्थस्य लपितत्वात् तदेवान्यैः खण्डरूपकमित्युच्यते ॥ २७ ॥ ज० म०

कपीत्यादि। प्लवङ्गमो हनूमानेव इन्दुः कपीनेव समुद्रान् मधुरेण प्रेमदर्शनेन मदयित्वा हर्षयित्वा वचनान्येव अमृतदीधितीः सुधासम्बन्धिकिरणान् वितन्वन् युद्धवृत्तान्तबोधकमाह्लादकवचनमुदाहरन् आनन्देन हर्षेण परीतं सञ्जातं नेत्रवारि येषां तान् एवंविधान् अकृत कृतवान्। मदीहर्षग्लपनयोः घटादित्वात् ह्रस्वः। एतच्छेषार्थान्ववसितमवतंसकमिति एतद्रूपकम् उक्तादन्यः शेषः रूपकादन्य इत्यर्थः। रूपितार्थादन्यार्थं आनन्दपरीतनेत्रवारीन् अकृत इत्येवंरूपः तेनान्ववसितं युक्तम् अवतंसकं नाम विसदृशस्यार्थस्योक्तत्वात्। एतदेवान्यैः खण्डरूपकमित्युक्तम् ॥ २७ ॥ म०

परिखेदितविन्ध्यवीरुधः परिपीतामलनिर्झराम्भसः ।
दुधुवुर्मधुकाननं ततः कपिनागा मुदिताङ्गदाज्ञया ॥ २८ ॥

अर्द्धरूपकम् ।

विटपिमृगविषादध्वान्तनुद्वानरार्कः
प्रियवचनमयूखैर्बोधितार्थारविन्दः ।
उदयगिरिमिवाद्रिं सम्प्रमुच्याभ्यगात् खम्
नृपहृदयगुहास्थं घ्नन् प्रमोहान्धकारम् ॥ २९ ॥
एतदन्वर्थोपमायुक्तललामकम् ।

परिखेदितेत्यादि । तत उत्तरकालं कपयो नागा इव हस्तिन इव कपिनागाः मुदितस्य अङ्गदस्य आज्ञया मधुकाननं सुग्रीवस्य क्रीड़ोद्यानं दुधुवुः कम्पितवन्तः । मधूनि उपभुज्य सम्भ्रमम् अकुर्वन् इत्यर्थः । परिखेदिताः परिमर्दिताः विन्ध्यवीरुधो विन्ध्यलतागुल्मा यैः परिपीतम् अमलं निर्झराम्भो यैः । अर्द्धरूपकमिति पश्चिमार्द्धे कपिनागा इति रूपितम् ॥ २८ ॥ ज० म०

परीत्यादि । ततोऽनन्तरं कपय एव नागा हस्तिनो मुदितस्य हृष्टस्य अङ्गदस्य आज्ञया मधुकाननं सुग्रीवस्योद्यानं दुधुवुः कम्पितवन्तः । मधुवनं भङ्क्त्वा भुक्तवन्त इत्यर्थः । कीदृशाः परिखेदिता मर्दिता विन्ध्यपर्वतस्य वीरुधो लता यैः ते । तथा परिपीतं निर्मलं निर्झरजलं यैः । नागाः काननं धुन्वन्त्येव इति रूपणमर्द्धरूपकमित्युक्तं कपिनागा इत्युत्तरार्द्धे रूपितं न तु पूर्वार्द्धे ॥ २८ ॥ ज० म०

विटपीत्यादि । वानरार्कः वानरोऽर्क इव वानरार्कः उदयगिरिमिव अद्रिं पर्वतं महेन्द्रं सम्प्रमुच्य खम् आकाशम् अभ्यगात् अभिगतवान् । विटपिमृगाणां यो विषाद आसीत् कथं सीता अन्वेषणीयेति । स ध्वान्तमिव तं नुदतीति क्विप् । प्रियवचनानि मयूखा इव तैः करणभूतैः बोधितमर्थारविन्दं येन । अर्थः सीतोपलब्धिः सोऽरविन्दमिव । नृपहृदयं गुहेव तत्र तिष्ठतीति नृपहृदयगुहास्थं प्रमोहो विषादोऽन्धकार इव तं घ्नन् इनिष्यन् वर्त्तमानसमीपत्वात् भविष्यति लट् । एतदिति रूपकम् अन्वर्थया उपमया युक्तं ललाम नाम । यत उदेति अस्मात् इत्युदयः अकर्त्तरि च कारके अप् । स चासौ गिरिश्च इत्यनुगतार्थता यत्र अन्वर्थता नास्ति उपमायाः तदुपमायुक्तमेव रूपकं द्रष्टव्यम् ॥ २९ ॥ ज० म०

रघुतनयमगात्तपोवनस्थम्
विधृतजटाजिनवल्कलं हनूमान्।
परमिव पुरुषं नरेण युक्तम्
समशमवेशसमाधिनाऽनुजेन॥ ३०॥

इवोपमा।

विटपीत्यादि। स कपिरुदयाचलमिव अद्रिं महेन्द्राद्रिं सम्प्रमथ्य खम् आकाशम् अभ्यगात् आभिमुख्येन गतवान्। कीदृशः विटपिमृगाणां वानराणां यो विषादः सीतानुपलब्धिजनितः स एव ध्वान्तम् अन्धकारस्तं नुदति अपसारयतीति क्विप्। प्रियवचनरूपैर्मयूखैर्बोधितानि विकाशितानि अर्थरूपाणि सीतोपलब्धिरूपाणि पद्मानि येन। नृपस्य रामस्य हृदयरूपायां गुहायां तिष्ठन्तं प्रमोहरूपम् अन्धकारं घ्नन् विनाशयिष्यन्। वर्त्तमानसामीप्ये वर्त्तमानत्वोपचारात् शतृः। एतदपि रूपकम् अन्वर्थोपमायुक्तं लता-मकं नाम। तथा हि उदेत्यस्मात् इत्युदयः अपादानेऽल्। स चासौ गिरिश्चेति अनु-गतार्थत्वमुदयगिरिशब्दस्य यौगार्थस्यान्वयात् उदयगिरिमिव इत्युपमा दर्शिता। विषादा-दीनां ध्वान्तत्वादिना रूपणम्॥ २९॥ भ०

उपमालङ्कारं दर्शयन्नाह।

रघुतनयमित्यादि। हनूमान् रघुतनयम् अगात् प्राप्तवान्। तपः प्रधानं वनं तपोवनं तत्र स्थितम्। विधृता जटा अजिनं चर्म्म वल्कलञ्च येन तम्। अनुजेन कनीयसा भ्राता लक्ष्मणेन समाः तुल्याः शमा वेशा समाधयश्च यस्य तेन युक्तं परमुत्तमं पुरुषमिव पुरुषोत्तममिव नरेण युक्तं बदरिकाश्रमे नरनारायणयोः तपश्चर्य्यया स्थित-त्वात् इवोपमेति इवशब्देनोपमार्थस्य गम्यमानत्वात्। उपमाया लक्षणं "विरुद्धेनो-पमानेन देशकालक्रियादिभिः। उपमेयस्य यत् साम्यं गुणमात्रेण सोपमा" इति। अत्र विरुद्धदेशकालक्रियागुणः पुरुषोत्तम उपमानं तेन रामस्य उपमेयस्य तपोवनस्थत्वेन विधृतजटाजिनवल्कलत्वेन नरानुकारिलक्ष्मणेनानुगतत्वेन च गुणमात्रेण साम्यमुप-मानम्॥ ३०॥ ज० म०

रघ्वित्यादि। हनूमान् रघुतनयं रामम् अगात् प्राप्तवान्। कीदृशं तपः प्रधानं वनं तपोवनं, तत्र स्थितं, विधृतं जटा मृगचर्म्म वल्कलञ्च येन। समाः तुल्याः शमः शान्तिर्वेशो जटावल्कलादिधारणं समाधिर्ध्यानञ्च यस्य तादृशेन अनुजेन कनीयसा लक्ष्मणेन युक्तं परं नरेण मुनिना युक्तं पुरुषमिव नारायणमिव नरनारायणयोः

करपुटनिहितं दधत् स रत्नं परिविरलाङ्गुलिनिर्गताल्पदीप्ति ।
तनुकपिलघनस्थितं यथेन्दुं नृपमनमत्परिभुग्नजानुमूर्द्धा ॥३१॥
यथोपमा ।

रुचिरोन्नतरत्नगौरवः परिपूर्णामृतरश्मिमण्डलः ।
समदृश्यत जीविताशया सह रामेण वधूशिरोमणिः ॥ ३२ ॥
सहोपमा ।

बदरिकाश्रमे तपश्चर्यायां स्थितत्वात् । पुष्पिताग्राछन्दः । लक्षणं यथा, "अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति । इवोपमेति इवशब्देन उपमाया गम्यमानत्वात् । उपमालक्षणं यथा "विरुद्धेनोपमानेन देशकालक्रियादिभिः । उपमेयस्य साम्यं यद्गुणमात्रेण सोपमा" इति । अत्र विरुद्धदेशकालक्रियादिगुणयुक्तः पुरुषोत्तम उपमानं तेन रामस्य उपमेयस्य तपोवनस्थत्वेन विधृतजटत्वेन लक्ष्मणानुचरत्वेन च गुणमात्रेण साम्यात् उपमा इवशब्द उपमाद्योतकः । तथा च दण्डी, "इववत् वा यथाशब्दा अन्याः सादृश्यसूचकाः" इति ॥ ३० ॥ भ०

यथेवशब्द उपमार्थसूचकस्तथान्योऽपीति दर्शयन्नाह ।

करपुटनिहितमित्यादि । करपुटे करयुग्मे निहितं न्यस्तं रत्नं सीताचूडामणिं परिविरलाङ्गुलिभ्यो निर्गता अल्पा दीप्तयो यस्य तत् रत्नं दधत् धारयन् सः हनूमान् नृपं रामम् अनमत् प्रणतवान् । परिभुग्ने अवनते जानुनी मूर्द्धा च यस्य हनूमतः यथेन्दुम् इन्दुमिव तनुः अल्पः कपिलश्च यो घनः मेघः तत्र स्थितमिन्दुमिव रत्नम् । यथोपमेति यथाशब्देन उपमार्थस्य गम्यमानत्वात् ॥ ३१ ॥ ज० म०

करेत्यादि । परिभुग्ने कुटिलीकृते जानुनी मस्तकञ्च यस्य तथाभूतः सन् स हनूमान् नृपं रामम् अनमत् प्रणतवान् । कीदृशः रत्नं सीताचूडामणिं दधत् धारयन् । कीदृशं करपुटे निहितम् अर्पितं परिवो विरलाभ्यो अङ्गुलिभ्यो निर्गता अल्पा दीप्तिर्यस्य स तथा । अतएव तनुरल्पः कपिलो यो घनो मेघस्तत्र स्थितम् इन्दुं यथा येन रूपेण दधाति तथा रत्नं दधत् इति सम्बन्धः । यथोपमेति यथाशब्देन उपमानस्य गम्यमानत्वात् ॥ ३१ ॥ भ०

रुचिर इत्यादि । वधूशिरोमणिः सीताचूडामणिः उन्नतं महद्रत्नगौरवं महार्घ्यादिलक्षणं यस्य रुचिरो दीप्तिमांश्चासौ उन्नतरत्नगौरवश्च इति सः । परिपूर्णस्य अमृतरश्मेः चन्द्रमसो मण्डलमिव मण्डलं यस्य सः रामेण समदृश्यत सन्दृष्टः ।

अवसन्नरुचिं वनागतं समनामृष्टरजोविधूसरम्।
समपश्यदपेतमैथिलिं दधतं गौरवमात्ममात्मवत्॥ ३३॥
तद्धितोपमा।

---

कर्मणि लङ्। जीविताशया सह सादृश्यं तद्दर्शनतो जीवितोऽस्मीति तदाशया सहसा रुचिरा तुष्टिदा रुचिं राति ददाति इति कृत्वा उन्नतरत्नगौरवात् उन्नतं रत्नेषु इव गौरवं बहुमानो यस्याम् इति। परिपूर्णम् अमृतम् अमरणं रश्मिमण्डलं यस्याम् इति। सहोपमेति सहशब्देन जीविताशया उपमायोगमात्॥ ३२॥ ज० म०

रुचिर इत्यादि। रामेण वध्वाः सीतायाः शिरोमणिः समदृश्यत सन्दृष्टः कर्मणि णौ। जीवितोऽस्मीति या प्रत्याशा तया सदृशः सहशब्दोऽत्र सादृश्यार्थः। उभयसाधर्म्यमाह। रुचिरोन्नतरत्नगौरवः उन्नतं महद्रत्नगौरवं बहुमूल्यत्वादिलक्षणं गुरुत्वाख्यगुणविशेषो वा यस्य स तथा ततो रुचिरः शोभायुक्तश्चासौ उन्नतरत्नगौरवश्च इति कर्मधारयः। जीविताशापि रुचिं तुष्टिं राति ददातीति रुचिरा। उन्नतरत्नेषु इव गौरवं बहुमानो यस्याम् इति भावः। परिपूर्णस्य अमृतरश्मेः चन्द्रस्य इव मण्डलं वर्त्तुलाकारत्वं यस्य स तथा आशापक्षे परिपूर्णम् अमृतम् इव रश्मिमण्डलं यस्यां जीविताशायां सत्यां शरीरस्य तेजस्वित्वसम्भवात्। परिपूर्णम् अमृतेन अमरणेन रश्मिमण्डलं यस्याम् इति केचित्। सहोपमेति सहशब्देन जीविताशा सादृश्यसूचनात् चूडामणिदर्शनेन तस्य जीविताशा जातेति व्यङ्ग्यार्थः॥ ३२॥ भ०

अवसन्नरुचिमित्यादि। तं शिरोमणिम् आत्मवत् आत्मानमिव समपश्यत् रामः तेन तुल्यमिति वतिः। अवसन्नरुचिं मन्दप्रभं वेणीबन्धनमलिनत्वात् इतरत्र सशोकत्वात्। वनागतम् अशोकवनिकाख्याद् वनात् आगतम् इतरं पितुः आदेशात् वनम् आगतं सुप्रपेति सः। अनामृष्टम् अनपनीतं यत् रजः तेन विधूसरम् उभयमपि अपेतमैथिलिम् अपेता मैथिली येन यस्मात् वा दधतं गौरवमात्रं गुरुत्वमेव न दीप्त्यादिकम् इतरं माहात्म्यं दधतम्। तद्धितोपमा इति तद्धितप्रत्ययेन उपमार्थस्य अभिधानात्। तदत्र कल्पबादयोऽपि तद्धितप्रत्यया द्रष्टव्याः॥ ३३॥ ज० म०

अवेत्यादि। रामः तं शिरोमणिम् आत्मवत् आत्मानमिव समपश्यत् संदृष्टवान्। उभयसाधर्म्यमाह, अवसन्नरुचिं मन्दप्रभं वेणीबन्धेन मलिनत्वात् अमार्जनात् वा आत्मपक्षे सशोकत्वात्। वनागतम् अशोकवनिकायाः समागतं पक्षे पितुः आदेशात् वनम् आगतम्। अनामृष्टरजो विधूसरम् अनामृष्टम् अनपनीतं यत् रजो भूमौ शयनात्

सामर्थ्यसम्पादितवाञ्छितार्थश्चिन्तामणिः स्यान्न कथं हनूमान् ।
सलक्ष्मणो भूमिपतिस्तदानीं शाखामृगानीकपतिश्च मेने ॥३४॥

लुप्तोपमा

युष्मानचेतन् क्षयवायुकल्पान् सीतास्फुलिङ्गं परिगृह्य जाल्मः ।
लङ्कावनं सिंहसमोऽधिशेते मर्त्तुं द्विषन्नित्यवदद्धनूमान् ॥ ३५ ॥

समोपमा ।

त्यं तेन विधूसरं पाण्डरं धूमरशब्दो दन्तमध्यः "महिषधूमरितः सरितस्तट" इति प्रयोगात् । अपेतमैथिलिम अपेता मैथिली यस्मात् बहुप्रेयसी इति उदाहरणेन यतः क इत्यस्य प्रायिकत्वसूचनात् न कप्रत्ययः गवावादेः इति ह्रस्वः । किं वा मैथिल्याः सकाशात् अपेतं अष्टम् अपेतस्य पूर्वनिपातोऽभिधानात् राजदन्तादित्वात् इति परः । गौरवमात्रं केवलं गुरुत्वाख्यगुणविशेषं दधतं धारयन्तं न दीपनादि आत्मपचे माहात्म्यम् । तद्धितोपमा इति तद्धितसंज्ञकेन चूत्साम्ये इति कृतवत्प्रत्ययेन साहश्याभिधानात् एवं कल्पवादयोऽपि साहश्यसूचकाः स्वमते तद्धितस्य तसंज्ञा ॥ ३३ ॥ भ०

सामर्थ्येत्यादि । सामर्थ्येन शक्त्या सम्पादितो निष्पादितो वाञ्छितोऽभिलषितोऽर्थो येन स हनूमान् कथं चिन्तामणिः चिन्ता मणिरिव न स्यात्, इति तदानीं मेने ज्ञातवान् । सलक्ष्मणः सह लक्ष्मणेन भूमिपतिः रामः शाखामृगानीकपतिश्च सुग्रीवः लुप्तोपमेति चिन्तामणिः इत्यत्र इवशब्दार्थस्य गम्यमानत्वात् लुप्तोपमेति ॥ ३४ ॥ ज० म०

सामर्थ्येत्यादि । तदानीं तस्मिन् चूडामणिप्राप्तिसमये लक्ष्मणसहितो भूमिपतिः रामः शाखामृगानीकस्य कपिसैन्यस्य पतिः सुग्रीवश्च इति मेने ज्ञातवान् । किम् इत्याह हनूमान् कथं चिन्तामणिरिव न स्यात् स्यादेव यतः सामर्थ्येन स्वशक्त्या सम्पादितो वाञ्छितार्थो येन । लुप्तोपमा इति इवशब्दस्य गम्यमानत्वात् अनुच्चारात् तथा च कण्ठाभरणे, "लोपे सामान्यधर्म्माणां द्योतकस्य च योपमा । प्रतीयमाने साहश्ये द्वयोः लुप्तेति तां विदुः" इति ॥ ३४ ॥ भ०

युष्मानित्यादि । युष्मान् रामादीन् क्षयवायुकल्पान् प्रलयकालमहावायुसदृशान् अचेतन् अजानन् चितीसंज्ञाने इति भौवादिकः । द्विषन् दशाननः जाल्मः मूर्खः सीतास्फुलिङ्गं सीताम् अग्निकणाम् इव परिगृह्य आदाय मर्त्तुं लङ्कां वनमिव अधि-

अहृत धनेश्वरस्य युधि यः समेतमायो धनम्
तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम् ।
विभवमदेन निह्नुतह्रियातिमात्रसम्पन्नकम्
व्यथयति सत्पथादधिगताथ वेह सम्पन्न कम् ॥ ३६ ॥

अर्थान्तरन्यासः ।

---

शेते मरिष्यामि इति सिंहसम इति अवदत हनूमान् । समीपमेति समशब्देन उपमाया अभिधानात अत्र निभसदृशादयोऽपि द्रष्टव्याः ॥ ३५ ॥ ज० म०

युष्मानित्यादि । हनूमान् इति अवदत् किम् इत्याह सिंहसमः सिंह इव जात्योऽसमीक्ष्यकारी द्विषन् शत्रुः रावणः सीतां मत्तनिङ्गमिव अग्निकणामिव परिगृह्य युष्मान् रामादीन् अग्रवायुकल्पान् प्रलयकालसम्बन्धिवायुसदृशान् अचेतन् अजानन् सर्वं प्राणान् त्यक्तुं लङ्कां वनमिव अधिशेते अधिवसति । सिंहोऽपि उग्रत्वात् अन्यमगणयित्वा वने वसति इति सादृश्यम् । समीपमेति समशब्देन उपमाभिधानात् एवं निभसदृशादयो द्रष्टव्याः ॥ ३५ ॥ भ०

इदानीम् अलङ्कारान्तराण्याह ।

अहृतेत्यादि । यो द्विषन् युधि संग्रामे समेतमायः समेता प्राप्ता माया येन इति तृतीयार्थे बहुव्रीहिः मायावीत्यर्थः । धनेश्वरस्य धनदस्य धनम् अहृत हृतवान् ह्रस्वादङ्गादिति सिचो लोपः । तं विबुधैर्देवैः सह कृतोत्तमायोधनं कृतमहासंग्रामं निह्नुता अपलपिता ह्रीर्लज्जा येन विभवमदेन तेन निह्नुतह्रिया अतिमात्रं सुष्ठु सम्पन्नकं युक्तं येन परस्त्रियम् अपहृत्य आनीतवान् असौ तं विलोक्य अहमितः प्राप्तः विभवमदो लज्जां त्याजयति इत्यमुमेवार्थम् अनुसृत्यार्थान्तरन्यासमाह । अथवेति अथवा शब्दे निपातसमुदायः यस्मात् अर्थे वर्त्तते यस्मात् इह लोके सम्पत् विभूतिः अधिगता प्राप्ता सत्पथात् कं न व्यथयति स्खलयति व्यथिरत्र चलने वर्त्तते । अर्थान्तरन्यास इति उक्तादर्थात् अन्यस्य उपन्यासात् यथोक्तम् । "उपन्यसनमर्थस्य प्रक्रान्तादपरस्य यत् । ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यथा" इति ॥ ३६ ॥ ज० म०

अहृतेत्यादि । यो द्विषन् शत्रुः धनेश्वरस्य कुबेरस्य धनम् अहृत हृतवान् इगुपधात्मनेपदीनाम् इति कित्त्वात् न गुणः झलस्वादिति सिज्लोपः । कीदृशः युधि संग्रामे समेता प्राप्ता माया येन सम्बद्धा माया यस्येति वा तं विलोक्य अहमित आगतः ।

ऋद्धिमान् राक्षसो मूढ़श्चित्रं नासौ यदुद्धतः ।
को वा हेतुरनार्य्याणां धर्म्ये वर्त्मनि वर्त्तितुम् ॥ ३७ ॥
आक्षेपः ।

कीदृशं विबुधैः देवैः सह कृतोत्तमायोधनं कृतमहायुद्धं निकृतक्रिया अपनीत-लज्जेन विभवमदेन ऐश्वर्य्यमत्ततया अतिमात्रम् अतिशयेन सम्पन्नकं युक्तं विकार-सङ्कृत्यादिना कुत्सायां कः परस्त्रियमपहृत्याप्यानयतीति निर्लज्जत्वं विभवमदो लज्जां त्याजयतीति। अर्थान्तरन्यासमाह अथवा यस्मात् अधिगता प्राप्ता सम्पत् विभूतिः इह लोके कं जनं सत्पथात् सदाचारात् न व्यथयति न चालयति अपि तु सर्वमेव। व्यथङ् दुःखे चाले भये अत्र चलनार्थः। अयवेत्यव्ययं यस्मादर्थे। नन्दनं नाम छन्दः लक्षणं यथा, "नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम्" इति। अत्र तृतीयपादे नवमाक्षरस्य प्रक्रेवा इति पिङ्गलसूत्रेण गुरुत्वविकल्पविधानात् लघुत्वम्। तथा च माघे "प्राप्तनाभिह्रदमज्जनमाशु" इति। यद्वा तीव्रप्रयत्नेन संयोगादेर्वगौरवम्। न छन्दोभङ्गमप्याहुस्तदा दोषाय सूरय इति कण्ठाभरणम्। केचित्तु संयोगे गुरुत्वात् छन्दोभङ्गः स्यात् इति शङ्कया निकृतक्रिया इत्यत्र निकृतभिया इति पाठं कल्पयन्ति अर्थान्तरन्यास इति ज्ञेयः। सोऽर्थान्तरन्यासो योऽन्यत् प्रस्तुत्य किञ्चन। तत्साधनसमर्थस्य न्यासो भिन्नस्य वस्तुन इति। उपन्यसन् समर्थस्य प्रक्रान्तादपरस्य यत्। ज्ञेयः सोऽर्थान्तर-न्यासः पूर्वार्थानुगतो यथा इति अन्योऽपि ॥ ३६ ॥ भ०

ऋद्धिमानित्यादि। यत् असौ उद्धतो दुर्वृत्तः न तच्चित्रम् आश्चर्य्यं यस्मात् असौ ऋद्धिमान् राक्षसश्च उभयथा विमूढ़ इत्येतत् उक्तमिति प्रतिषेधयन्नाह को वेति किमनेन उक्तेन यस्मात् अनार्य्याणां तद्विधानां धर्म्ये धर्मात् अनपेते वर्त्मनि मार्गे वर्त्तितुं को वा हेतुः किं नाम कारणं नैव इत्यर्थः। आक्षेप इति प्रतिषेधो नाम यथा उक्तम्। प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया। आक्षेप इति तं सन्तः शंसन्ति द्विविधो यथा इति। अत्र पूर्वार्द्धेन उक्तो य इष्टोऽर्थः तस्य को वा इत्यादिना विशेषप्रतिपादनेच्छया प्रतिषेध इति। स च उक्तवक्ष्यमाणविषयभेदात् द्विविधः अयमुक्तविषयः ॥३७॥ जं०म०

ऋद्धिमानित्यादि। असौ रावणो यत् उद्धतो दुर्वृत्तो भवति तत् न चित्रं न आश्चर्य्यं यस्मात् असौ ऋद्धिमान् सम्पत्तियुक्तो राक्षसश्च उभयथापि मूढ़ो विचारशून्य एव। एतदुक्तं प्रतिषेधयन्नाह कोवेति। अथवा किम् अनेन उक्तेन यस्मात् अनार्य्याणाम् उद्ध-तानां तादृशानां धर्म्ये धर्मात् अनपेते वर्त्मनि सदाचारे वर्त्तितुं ज्ञातुं को वा हेतुः न

**तस्याधिवासे तनुरुत्सुकासौ दृष्टा मया रामपतिः प्रमन्युः।**
**कार्थ्यस्य सारोऽयमुदीरितो वः प्रोक्तेन शेषेण किमुद्धतेन ॥३८॥**

**आक्षेप एव।**

कोऽपि इत्यर्थः। अतएव असौ उद्धतः किं रुङ्गादिहेतुचिन्तयेति भावः। वाशब्दः आक्षेपद्योतकः आक्षेपप्रतिषेध इति। निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया। वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मत इति। अयन्तु उक्ताक्षेपः पूर्वार्द्धेन उक्तो य इष्टस्तस्य कोवेत्यादिना विशेषाभिधानेच्छया प्रतिषेधात् ॥ ३७ ॥ भ०

तस्येत्यादि। तस्य रावणस्य अधिवासे लङ्कायाम् असौ रामपतिः सीता मया दृष्टा रामः पतिः यस्या इति विभाषा सपूर्वस्य इति नकाराभावपक्षे रूपं तनुः कृशाङ्गी वोतोगुणवचनादिति ङीषो विकल्पः। उत्सुका सोत्कण्ठा प्रमन्युः प्रकृष्ट-शोका ऊङ्‌तङ्‌त्यूङ् न भवति तत्रायोपधादिति वर्त्तते। अयङ्कार्थ्यस्य अस्मदायत्तस्य सारः शरीरं सीतादर्शनम् उदीरितः कथितः वो युष्मभ्यं शेषेण उद्धतेन अशोक-वनिकाभङ्गादिना किं प्रोक्तेन न किञ्चित् प्रयोजनम्। स इव इत्ययमपि आक्षेप एव किन्तु वक्ष्यमाणविषयः। अत्र पूर्वार्द्धेनोक्तो यो इष्टोऽर्थः तस्य विशेषाभिधित्सया प्रोक्तेन इत्यादिना शेषार्थप्रतिषेधः ॥ ३८ ॥ ज० म०

तस्येत्यादि। तस्य रावणस्य अधिवासे लङ्कायां रामपतिः सीता मया दृष्टा रामः पतिः यस्या इति बहुव्रीहिः परमते बहुव्रीहौ पत्युरिकारस्य नकार ङीप्प्रत्ययश्च विभाषितः। तेन रामपत्नी रामपतिश्चेति पदद्वयं लभते बहुव्रीहौ रामपतिः इत्यादि भवत्येव रामपत्नी इत्यादौ तु नारीसखी इत्यादिना निपातितस्य पत्नीशब्दस्य ग्रहणं पत्नीशब्दो रूढ़ो भार्य्यावाचकः तेन षष्ठीसमासः। तामेकपत्नीं व्रतदुःखशीलाम् इत्यादौ कर्मधारयश्च वाच्यः। कीदृशी तनुः कृशाङ्गी गुणाद्दोत इति पक्षे ङीप्प्रत्यया-भावः। उत्सुका उत्कण्ठावती लयोत्यर्थात् त्वत्सङ्गमभिलषमाणा इत्यर्थः। केचिदाहुः, तनुषा शरीरेणापि उत्सुका किं पुनः मनसा। तथा च स्यात् तनुस्तनुषा सार्द्धं धनुषा च धनुः तथा इति शब्दभेदः। प्रमन्युः प्रकृष्टशोका अयं कार्थ्यस्य मद्विषयस्य सार उत्कृष्टभागो वो युष्मभ्यम् उदीरित उक्तः अशेषेण अपरेण उद्धतेन उच्चावचेन प्रोक्तेन किं? न किञ्चित् प्रयोजनं स एव इति आक्षेप एव किन्तु वक्ष्यमाणविषयक इति भेदः। पूर्वार्द्धेन उक्तस्य इष्टार्थस्य विशेषाभिधेच्छया प्रोक्तेन इत्यादिना शेषार्थ-प्रतिषेधात् ॥ ३८ ॥ भ०

समतां शशिलेखयोपयायादवदाता प्रतनुः क्षयेण सीता ।
यदि नाम कलङ्क इन्दुलेखामतिवृत्तो लघयेन्न चापि भावी ॥३९॥

व्यतिरेकः ।

अपरीक्षितकारिणा गृहीतां त्वमनासेवितवृद्धपण्डितेन ।
अविबाधितनिष्ठुरेण साध्वीं दयितां त्रातुमलं घटस्व राजन् ! ॥४०

विभावना ।

समतामित्यादि । सीता अवदाता शुद्धा प्रतनुः प्रकर्षेण तन्वी क्षयेण दौर्बल्येन एतावता तुल्यधर्मत्वात् । शशिलेखया तुल्यतां समताम् उपयायात् उपगच्छेत् । यदि कलङ्को नाम अपरोऽतिवृत्तोऽतिक्रान्तः । इन्दुलेखां न लघयेत् न न्यूनयेत् तथा भावी आगामी न अलघयिष्यत् । यदि न चैवं न स्यात् चन्द्रलेखया न समेति भावः । व्यतिरेक इति अयं व्यतिरेको नामालङ्कारः । पूर्वार्द्धेन उपमानोपमेययोः अर्थौ दर्शितः तस्य पश्चात् अर्द्धेन भेददर्शनात् । यथोक्तम्, "उपमानवतोऽर्थस्य यद्विशेषनिदर्शनम् । व्यतिरेकं तमिच्छन्ति विशेषोत्पादनाद् यथा ॥" इति ॥ ३९ ॥ ज० म०

समतामित्यादि । सीता शशिलेखया चन्द्रकलया समतां तुल्यताम् उपयायात् प्राप्नुयात् । कीदृशी अवदाता शुद्धा चन्द्रलेखापि अवदाता शुक्ला क्षयेण दौर्बल्येन प्रतनुः अतिकृशा शशिलेखापि क्षयेण रोगविशेषेण प्रतनुः । यदि नामातिवृत्तोऽतीतो भावी भविष्यंश्च कलङ्कः ताम् इन्दुलेखां न लघयेत् न अतिशयेन न्यूनां कुर्य्यात् । कलङ्कस्य भूतत्वात् भावित्वाच्च सा चन्द्रलेखयापि न समेति भावः । लघुशब्दात् णिः क्रत्याख्याने णिरिति णिः औमंश्च डिदिति डित्त्वात् टेर्लोपः । नाम इति अव्ययम् प्रकाशसम्भावनाक्रोधाभ्युपगमकुत्सनेषु । व्यतिरेक इति । उपमानाद् यदन्यस्य व्यतिरेकः स एव स इति । अन्यस्य उपमेयस्य व्यतिरेक आधिक्यम् ॥ ३९ ॥भ०

अपरीक्षितकारिणेत्यादि । अपरीक्षितकारिणा अविचारितकरणशीलेन अनासेवितवृद्धपण्डितेन अपर्य्युपासितज्ञानवृद्धसत्पथेन अविबाधितनिष्ठुरेण अविरोधितनिष्ठुरेण अनपकृतोऽपि क्रूरः सन् यः शत्रुः तेन गृहीतां साध्वीं पतिव्रतां दयिताम् इष्टां त्राणार्हां त्रातुं रक्षितुम् अलं पर्य्याप्तं त्वं घटस्व यतस्व हे राजन् ! इति अवदत् हनूमान् इति शेषः । विभावनेति परीक्षा सेवा विरोधनञ्च इति तिस्रः क्रियाः तासां यः प्रतिषेधः नञा तेन अपरीक्षापूर्वकं यत् करणं यथा वृद्धसेवापूर्वकं यत् पण्डितत्वं

स च विह्वलसत्त्वसङ्कुलः परिशुष्यन्नभवन्महाह्रदः।
परितः परितापमूर्च्छितः पतितञ्चाम्बु निरभ्रमीप्सितम् ॥ ४१ ॥
समासोक्तिः।

---

यत्र अविरोधपूर्वकं निष्ठुरत्वं तस्य क्रियाफलस्य विभावनात् प्रकाशनात्। यथोक्तम्, "क्रियायाःप्रतिषेधेन तत्फलस्य विभावनात्। ज्ञेया विभावनैवासौ सान्वर्थं कथ्यते यथा इति ॥ ४० ॥ ज० म०

अपेत्यादि। हे राजन्! दयितां सीतां प्रियां दातुं रक्षितुं त्वम् अलम् अत्यर्थं घटस्व चेष्टस्व यतः साध्वीं पतिव्रताम् अपरीक्षितकारिणा अविचारितकरणशीलेन अनासेवितवृद्धपण्डितेन वृद्धमनुपास्य एव पण्डितेन पण्डितम्मन्येन अविबाधितेन अनपकृतेनापि सता निष्ठुरेण क्रूरेण रावणेन इत्यर्थात् गृहीताम् इति अवदत् हनूमान् इति सम्बन्धः। विभावनेति परीक्षावृद्धसेवाविबाधनैः विनापि रणपाण्डित्यनैष्ठुर्य्याणां तत्फलानां स्वाभाविकत्वेन प्रकाशनात्। तथा च, "क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना" इति काव्यप्रकाशः। "प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित् कारणान्तरम्। यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना" इति दण्डी ॥ ४० ॥ भ०

स च इत्यादि। स च रामो महाह्रदः महाह्रदसमः सीताविरहात् विह्वलेन आकुलेन सत्त्वेन चेतसा सङ्कुलो व्याप्तः परिशुष्यन् शोषम् उपगच्छन् परितः समन्तात् परितापमूर्च्छितः शोकसन्तापेन मूर्च्छान्वितोऽभवत् भूतः। अनन्तरं च अम्बु जलं सीतावार्त्ताश्रवणम् ईप्सितम् अभिप्रेतं निरभ्रम् आकस्मिकं पतितम् इति एकोऽर्थः। महाह्रदः परिशुष्यन् विह्वलैः सत्त्वैः मत्स्यादिभिः सङ्कुलो व्याप्तः परितापमूर्च्छितः परितापेन मूर्च्छितः अर्कतापान्वितोऽभवत् अम्बु च निरभ्रं विना मेघेन पतितम् इति द्वितीयः। समासोक्तिः अलङ्कारः। यथोक्तम्। "यत्रोक्तेर्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता संक्षिप्तार्थतया यथा" इति। एवञ्च कृत्वा अयं श्लेषात् भिद्यते श्लेषे हि द्वयोरपि श्रूयमाणत्वात् ॥ ४१ ॥ ज० म०

स चेत्यादि। स च रामो महाह्रद इव अभवत् अथ निरभ्रं मेघं विनापि आकस्मिकम् ईप्सितम् अभिलषितं सीतावार्त्ताश्रवणस्वरूपम् अम्बु जलं पतितं प्राप्तम् अभवच्च पतितञ्च इति चकारद्वयं तुल्यकालतासूचनार्थम्। कीदृशः विह्वलेन विरहव्याकुलेन सत्त्वेन चेतसा संकुलो व्याप्तः परिशुष्यन् कार्श्यम् उपगच्छन् परितः समन्तात् परितापेन शोकसन्तापेन मूर्च्छितः मोहं प्राप्तः। महाह्रदोऽपि परिशुष्यन् विह्वलैः सत्त्वैः

अथ लक्ष्मणरूपतुल्यवेशं गमनादेशविनिर्गताग्रहस्तम्।
कपयोऽनुययुः समेत्य रामं नतसुग्रीवगृहीतसादराज्ञम्॥ ४२॥

अतिशयोक्तिः।

जन्तुभिः मत्स्यादिभिः संकुलः परितापेन सूर्यतापेन मूर्च्छितो यदा भवति तदा ईप्सितम् अम्बु विना मेघेन पतितम्। "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुषु" इति विश्वः। समासोक्तिरिति साक्षात् महाह्रदमात्रोपादानेऽपि तत्तुल्यविशेषणतया रामस्य गम्यमानत्वात् संक्षेपेण अन्वयस्य उक्तिः इत्यर्थः। यदुक्तं, "यत्रोक्तेर्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता संक्षेपार्थतया यथा" इति। अन्यत्रापि, वस्तु किञ्चित् अभिप्रेत्य तत्तदन्यस्य वस्तुनः। उक्तिसंक्षिप्तरूपत्वात् समासोक्तिरिहेष्यते इति। अतएव श्लेषात् भेदः तत्र द्वयोरपि श्रूयमाणत्वात्॥ ४१॥ भ०

अथेत्यादि। अथ वार्त्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा रामम् अनुययुः अनुगतवन्तः लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य रामस्य गमनाय प्रयाणाय आदेशः तदर्थं विनिर्गतो अग्रहस्तो यस्य नतेन प्रणतेन सुग्रीवेण गृहीता प्रतिज्ञिता सादराज्ञा यस्य तं रामम्। अतिशयोक्तिः इति अतिशयाभिधानात् अत्र सुष्ठु अपि नामासौ लक्ष्मणे च तुल्यरूपवेशः स्यात् न तु प्रत्यक्षप्रमाणपरिच्छेद्य इति लोकातिक्रान्तवचनमेतत् वचनं अवश्यञ्च कश्चिद् विशेषोऽस्ति। यथोक्तं, "निमित्ततो यत्र वचो लोकातिक्रान्तगोचरम्। मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथा" इति॥ ४२॥ ज० म०

अथेत्यादि। सीतावार्त्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा रामम् अनुययुः अनुगतवन्तः। कीदृशं लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य तं रामदुःखेन लक्ष्मणोऽधिकं दुःखितः सीतावार्त्ताश्रवणाच्च रामात् अपि अधिकं हृष्ट इति लक्ष्मणेन तुल्यता उक्ता। कपीनां गमनाय प्रस्थानाय आदेशः आज्ञा तदर्थं विनिर्गतोऽग्रहस्तो यस्य तं हस्तशब्दस्यैकदेशवृत्तितया अग्रशब्देन कर्मधारयः अन्ये तु राजदन्तादौ पठन्ति। प्रणतेन सुग्रीवेण गृहीता सादराज्ञा यस्य तम्। अतिशयोक्तिः इति अतिशयार्थप्रतिपादनात् अत्र हि आज्ञानन्तरमेव कपीनामनुगमनेनैव भवत्यतिशयत्वं लक्ष्मणतुल्यताभिधानेन तद्गतहर्षशोकातिशयत्वञ्च। तथा च, "विवक्षाया विशेषस्य लोकसीमातिवर्त्तिनी। असावतिशयोक्तिः स्यात् अलङ्कारोत्तमा च सा। सा तु प्रायो गुणानाञ्च क्रियाणाञ्चोपकल्प्यते। न हि द्रव्यस्य जातेर्वा भवत्यतिशयः क्वचित्" इति॥ ४२॥ भ०

कपिपृष्ठगतौ ततो नरेन्द्रौ कपयश्च ज्वलिताग्निपिङ्गलाभाः।
मुमुचुः प्रययुर्द्रुतं समीयुर्वसुधां व्योम महीधरं महेन्द्रम्॥४३॥

यथासंख्यम्।

स्थितमिव परिरक्षितुं समन्तादुदधिजलौघपरिप्लवाद्धरित्रीम्।
गगनतलवसुन्धरान्तराले जलनिधिवेगसहं प्रमाय्य देहम्॥४४॥

उत्प्रेक्षा।

---

कपिपृष्ठगतावित्यादि। ततोऽनन्तरं नरेन्द्रौ रामलक्ष्मणौ कपयश्च सर्व एते मुमुचुः वसुधां त्यक्तवन्तः प्रययुः व्योम आकाशं महेन्द्रं महीधरं समीयुः गतवन्तः लिटः कित्त्वे गुणाभावात् धातोरियङ्। नरेन्द्रौ किम्भूतौ कपिपृष्ठगतौ हनूमन्तम् आरूढौ यथासंख्यमिति मुमुचुः इत्यादिनाक्रियाणां वसुधादीनाञ्च कर्मणाम् अनुक्रमशो निर्देशात्। यथोक्तं, भूयसामुपदिष्टानां क्रियाणामथ कर्मणाम्। क्रमशो योऽनुनिर्देशो यथासङ्ख्यं तदुच्यत इति॥ ४३॥ ज० म०

कपीत्यादि। ततोऽनन्तरं कपिपृष्ठगतौ वानरपृष्ठस्थौ नरेन्द्रौ रामलक्ष्मणौ ज्वलदग्निवत् पिङ्गलशरीराः कपयश्च वसुधां पृथ्वीं मुमुचुः त्यक्तवन्तः व्योम आकाशं प्रययुः प्रयातवन्तः महेन्द्राख्यं पर्वतं द्रुतं समीयुः सङ्गतवन्तः। यथासंख्यमिति क्रियापदानां कर्मपदानाञ्च क्रमेण अन्वयात्। यदुक्तं काव्यप्रकाशे, "यथासंख्यक्रमेणैव क्रमिकाणां समन्वय" इति। अन्यत्रापि उक्तं, "भूयसामुपदिष्टानामर्थानां सधर्मिणाम्। क्रमशो योऽर्थनिर्देशो यथासंख्यं तदुच्यत" इति॥ ४३॥ भ०

स्थितमित्यादि। उदधिजलौघात् समन्ततो यः परिप्लवो विनाशः तस्मात् धरित्रीं परिरक्षितुमिव गगनतलवसुन्धरयोरन्तराले देहं शरीरं जलनिधिवेगं सहत इति मूलविभुजादित्वात् कः प्रमाय्य स्थितं महेन्द्रं समीयुः। उत्प्रेक्षेति यथोक्तम्, "अविवक्षितसामान्यात् किञ्चिच्चोपमया सह। अतद्गुणक्रियारोपात् उत्प्रेक्षातिशयान्विता" इति। अत्र महीधरसामान्यस्यापि विवक्षितत्वादविवक्षितं सामान्यत्वं रक्षितुमिव इति किञ्चित् उपमया सह महेन्द्रगिरेः अतद्गुणतया रक्षणक्रियायोगः गगनतलं वसुन्धरां व्याप्य स्थितम् इति अतिशयान्विता॥ ४४॥ ज० म०

स्थितमित्यादि। कीदृशं महेन्द्रम् उदधेः जलौघेन परिप्लवात् विनाशात् समन्तात् आप्लवनात् वा धरित्रीं पृथिवीं परिरक्षितुमिव समन्तात् त्रातुमिव गगनतलवसुन्धर-

विषधरनिलये निविष्टमूलं शिखरशतैः परिमृष्टदेवलोकम् ।
घनविपुलनितम्बपूरिताशं फलकुसुमाचितवृक्षरम्यकुञ्जम् ॥४५॥
वार्त्ता ।

योराकाशपृथिव्योरन्तराले मध्ये जलनिधिवेगसहं देहं प्रसार्य्य विस्तार्य्य स्थितं सहः पचादित्वात् अन् परिप्लु ङो भावेऽल् परिप्लवामिति पाठे पचादित्वात् अन् । चञ्चलां व्याकुलां वा । "परिप्लवश्चञ्चलः स्यात् आकुलेऽपि परिप्लव" इति विश्वः । उत्प्रेक्षेति, "अन्यथावस्थितावृत्तिश्चेतनस्येतरस्य वा । अन्यथोत्प्रेक्षते यत्र तामुत्प्रेक्षां विदुर्बुधा" इति । अत्र स्वाभाविका द्यावापृथिव्योः अन्तराले स्थितिः पृथिवीरक्षणार्थतया सम्भाव्यते । अन्यस्त्वाह, "अविवक्षितसामान्यात् किञ्चिच्चोपमया सह । अतद्गुणक्रियायोगात् उत्प्रेक्षा-तिशयान्विता" इति । तत्र महीधरसामान्या विवक्षितत्वात् अत्राविवक्षितसामान्यत्वं परि-रक्षितुमिव इति प्रयोगात् किञ्चित् उपमया सहयोगित्वं महेन्द्रगिरेरतद्गुणतया रक्षणक्रियायोगः गगनतलवसुन्धरान्तरालं व्याप्य स्थितमिति अतिशयान्वितत्वम् । इवशब्दो-ऽप्युत्प्रेक्षाव्यञ्जकः ॥ ४४ ॥ भ०

विषधरनिलय इत्यादि । विषधरनिलये पाताले निविष्टमूलं महेन्द्रं शिखरशतैः करणभूतैः परिमृष्टः संसृष्टो देवलोको येन घनैः निरन्तरैः विपुलैः विस्तीर्णैः नितम्बैः मेखलाभागैः पूरिता व्याप्ता आशा दिशो येन फलकुसुमान्वितैः वृक्षैः रम्यं कुञ्जं गहनं यस्मिन् । वार्त्ता इति तत्त्वार्थकथनात् सा द्विधा विशिष्टा निर्विशिष्टा च तत्र या पूर्वा सा स्वभावोक्तिः उदिता यथा इयमेव तथा चोक्तम् । स्वभावोक्तिरलङ्कार इति केचित् प्रचक्षते । अर्थस्य तादवस्थ्यञ्च स्वभावोऽभिहितो यथा । इति निर्विशिष्टा वार्त्तानामा-लङ्कारः । यथोक्तं, "गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः । इत्येवमादिकं काव्यं वार्त्तामेतां प्रचक्षते" इति ॥ ४५ ॥ ज० म०

विषधरेत्यादि । पुनः कीदृशं महेन्द्रं विषधरनिलये पाताले निविष्टं मूलं यस्य तं शिखराणां शतैः करणभूतैः परिमृष्टः स्पृष्टो देवलोकः स्वर्गो येन घनैः निरन्तरालैः विपुलैः विशालैः घनेन मेघेन विपुलैर्वा नितम्बैः मध्यभागैः पूरिता व्याप्ता आशा दिशो येन फलेन पुष्पेण च आचितैः व्याप्तैः वृक्षैः रम्यं कुञ्जं लतादिपिहितस्थलं यत्र तं तथा । वार्त्ता इति तत्त्वार्थकथनात् सा द्विविधा विशिष्टा निर्विशिष्टा च तत्र पूर्वा स्वभावोक्तिः उच्यते । यदुक्तं, "स्वभावोक्तिरलङ्कार इति केचित् प्रचक्षते । अर्थस्य ताद-वस्थ्यञ्च स्वभाव इति कथ्यते" इति । निर्विशिष्टातु सैव वार्त्तालङ्कारः । यथोक्तं

मधुकरविरुतैः प्रियाध्वनीनां
सरसिरुहैर्दयितास्यहास्यलक्ष्म्याः।
स्फुटमनुहरमाणमादधानम्
पुरुषपतेः सहसा परं प्रमोदम् ॥ ४६ ॥

प्रेयः।

ग्रहमणिरसनं दिवो नितम्बम्
विपुलमनुत्तमलब्धकान्तियोगम्।

"गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः। इत्येवमादिकं काव्यं वार्त्तामेतां प्रचक्षते"
इति प्रकृते तु स्वभावोक्तिरूपैव वार्त्ता बोध्या ॥ ४५ ॥ भ०

मधुकरविरुतैरित्यादि। प्रियाध्वनीनां सीतासम्बन्धिनां जल्पितानां मधुकरविरुतैः स्फुटं स्पष्टम् अनुहरमाणम् अनुकुर्व्वन्तं सादृश्यम् इति अर्थात् दयितायाः सीतायाः यत् आस्यं हास्यञ्च एतयोः लक्ष्म्याः सरसिरुहैः सादृश्यम् अनुहरमाणं सन्तं महेन्द्रं तत्र पद्मैः आस्यलक्ष्म्याः कुमुदैः हास्यलक्ष्म्याः अथवा कृत्यार्थैरिति षष्ठी अनुहरमाणशब्दस्य तुल्यार्थत्वात् सदृशी भवन्तम् इत्यर्थः। पुरुषपतेः रामस्य सहसा तत्क्षणम् आगतमात्रस्य इत्यर्थः। परम् उत्कृष्टं प्रमोदम् आदधानं जनयन्तं समीयुः। प्रेय इति प्रियतमवस्त्वभिधानात् ॥ ४६ ॥ ज० म०

मधुकरैरित्यादि। पुनः कीदृशं महेन्द्रं मधुकराणां भ्रमराणां विरुतैः शब्दैः प्रियायाः सीताया जल्पितानां स्फुटं व्यक्तम् अनुहरमाणं सादृश्यं दर्शयन्तम्। धातोः अनेकार्थत्वात् अनुहरमाणमनुकुर्वन्तमित्यन्ये। सरसिरुहैः पद्मैर्दयितायाः सीतायाः आस्यस्य मुखस्य हास्यस्य च लक्ष्म्या अपि अनुहरमाणं पद्मविकाशस्य अत्र हास्यसाम्येन पद्मैस्तदनुहरणमुक्तम् अन्ये तु सरसिरुहपदेन कुमुदमप्युच्यते तस्यापि सरःसम्भूतत्वात् तेन पद्मैरास्यलक्ष्म्याः कुमुदैर्हास्यलक्ष्म्याश्च अनुहरमाणमित्याहुः अतएव पुरुषपतेः रामस्य सहसा तत्क्षणम् आगतमात्रस्यैव परम् उत्कृष्टं प्रमोदम् आनन्दं दधानं कुर्वन्तम् जनयन्तम् इत्यर्थः। एतेन यात्रायां मङ्गलमपि सूचितम्। प्रेय इति प्रियतरवस्त्वभिधानात् ॥ ४६ ॥ भ०

ग्रहेत्यादि। दिवो नितम्बं मध्यभागं ग्रहाः मणिरसनेव यस्य विपुलं विस्तीर्णं न विद्यते उत्तमोऽस्मादिति अनुत्तमम् अतिशयवान् लब्धः कान्त्यायोगो येन च्युतो घनो

च्युतघनवसनं मनोऽभिरामम्
शिखरकरैर्मदनादिव स्पृशन्तम् ॥ ४७ ॥

रसवत् ।

प्रचपलमगुरुम्भरासहिष्णु जनमसमानमनूर्जितं विवर्ज्य ।
कृतवसतिमिवार्णवोपकण्ठे स्थिरमतुलोन्नतिमूढतुङ्गमेघम् ॥४८

ऊर्जस्वी ।

वसनमिव यस्मात् शिखरैः करैः इव मदनादिव स्पृशन्तं महेन्द्रम् । रसवत् इति दिवो गिरेश्च स्त्रीपुंसयोः इव शृङ्गाररसाभिधानात् । तथा च उक्तं, "रसवत् दर्शित स्पष्टं शृङ्गारादिरसं यथा" इति ॥ ४७ ॥ ज० म०

ग्रहेत्यादि । पुनः कीदृशं महेन्द्रं शिखररूपकरैः मदनात् कामात् हेतोरिव दिव आकाशस्य नितम्बं मध्यभागं स्पृशन्तम् । कीदृशं नितम्बं ग्रहमणिरसनं ग्रहाः चन्द्रादयो मणिनिर्मिता रसना काञ्ची यत्र विपुलं विस्तीर्णम् अनुत्तमलब्धकान्तियोगं न विद्यते उत्तमो यस्मात् लब्धः कान्तियोगो येन पश्चात् कर्मधारयः । च्युतघनवसनं च्युतो घनो मेघो वसनमिव यस्मात् एतेन प्रावृट्कालोऽपि सूचितः । अतएव मनोऽभिरामं चित्तानन्दकरम् अत्र दिवो नायिकासाम्यं तथा महेन्द्रस्य नायकसाम्यं च व्यङ्ग्यम् । रसवदिति दिवो गिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसस्य अभिधानात् । तथा च दण्डी, रसवत् रसभाषणम् इति ॥ ४७ ॥ भ०

प्रचपलमित्यादि । जनं लोकं प्रचपलं अस्थिरम् अगुरुं लघुम् अतएव भरासहिष्णुम् अनूर्जितम् अनहङ्कारं विवर्ज्यैव असमानत्वात् । अर्णवस्य समुद्रस्य उपकण्ठे समीपे कृतवसतिं कृतावस्थानं महेन्द्रं समीयुः तदेवासमानत्वात् दर्शयन्नाह । स्थिरम् अचलम् अतुलोन्नतिम् असाधारणमहत्त्वम् ऊढतुङ्गमेघं उद्धृतमहामेघम् आश्रयणीयत्वात् ऊर्जस्वीति साहङ्कारवस्त्वभिधानात् ॥ ४८ ॥ ज० म०

प्रचपलमित्यादि । पुनः कीदृशं महेन्द्रं जनं लोकं विवर्ज्य त्यक्त्वा विजनत्वात् । अर्णवस्य समुद्रस्य उपकण्ठे समीपे आत्मसदृशत्वात् कृता वसतिः येन स्थिरम् अचलम् अतुलोन्नतिं महोच्छ्रायम् एतेन गुरुत्वम् ऊर्जितत्वञ्च सूचितम् । ऊढतुङ्गमेघं धृतमहामेघं भारसहत्वात् जनवर्जने हेतुमाह । प्रचपलेति । कीदृशं जनम् असमानं स्वस्य असदृशम् । असमानत्वं दर्शयन्नाह । प्रचपलम् अस्थिरम्

स्फटिकमणिगृहैः सरत्नदीपैः प्रतरुणकिन्नरगीतनिस्वनैश्च।
अमरपुरमतिं सुराङ्गनानां दधतमदुःखमनल्पकल्पवृक्षम् ॥ ४९ ॥

पर्य्यायोक्तम्।

अथ ददृशुरुदीर्णधूमधूम्राम्
दिशमुदधिव्यवधिं समेतसीताम्।
सह रघुतनयाः प्लवङ्गसेनाः
पवनसुताङ्गुलिदर्शितामुदञ्चाः ॥ ५० ॥

समाहितम्।

---

अगुरु' लघुम् अतएव भारासहनशीलम् अनूर्जितं दर्पशून्यं दुर्बलं वा जनस्य असहृशत्वात् त्यागः स्वसदृशस्य अर्णवस्य समीपे वासश्च युक्तः। ऊर्जस्वि इति सहिङ्कारवत्त्वभिधानात्। यदुक्तं, ऊर्जस्वि रूढाहङ्कारम् इति ॥ ४८ ॥ भ०

स्फटिकमणिगृहैरित्यादि। स्फटिकमणिगृहैः रत्नदीपयुक्तैः प्रतरुणानां किन्नराणां गीतनिस्वनैश्च हेतुभूतैः अमरपुरमतिं स्वर्गबुद्धिं सुराङ्गनानां दधत' जनयन्तम्। अदुःखं न विद्यते दुःखम् यस्मिन् इति सुखहेतुमित्यर्थः। बहुकल्पवृक्षं समीयुः। पर्य्यायोक्तिरिति अमरपुरमतिं दधतम् इत्यनेन पर्य्यायेण वचनगत्या तदेव अमरपुरमिति प्रतिपादनात्। तथा च उक्तं, पर्य्यायोक्तं यदन्येन प्रकारेणा-भिधीयते इति ॥ ४९ ॥ अ० म०

स्फटिकेत्यादि। पुनः कीदृशं महेन्द्र' रत्नदीपसहितैः स्फटिकमणीनां गृहैः प्रकृष्टतरुणानां किम्पुरुषाणां गीतनादैश्च हेतुभिः सुराङ्गनानां देवस्त्रीणाम् अमर-पुरमतिं स्वर्गबुद्धिं दधतं जनयन्तम्। अदुःखं नास्ति दुःखं यत्र सुखहेतुमित्यर्थः। अनल्पा बहवः कल्पवृक्षा यत्र तम् एवम्भूतं महेन्द्रं समीयुः इत्यन्वयः। पर्य्यायोक्त-मिति अमरपुरमतिं दधतम् इति पर्य्यायेण वचनभङ्ग्या तदेव अमरपुरमिति प्रतिपादनात्। यदुक्तम्, अर्थमिष्टमनाख्याय तस्यैवार्थस्य सिद्धये। यत् प्रका-रान्तराख्यानं पर्य्यायोक्तं तदुच्यते इति। अन्यत्रापि, पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयते इति। काव्यप्रकाशेऽपि, पर्य्यायोक्तं विना वाच्यवाचकत्वेन वस्तु यत् इति ॥ ४९ ॥ भ०

अथेत्यादि। अथ प्राप्त्यनन्तरं प्लवङ्गसेनाः सहरघुतनया दिशं ददृशुः

जलनिधिमगमन्महेन्द्रकुञ्जात्प्रचयतिरोहितनिम्नरश्मिभासः ।
सलिलसमुदयैर्महातरङ्गैर्भुवनभरक्षममप्यभिन्नवेलम् ॥ ५१ ॥

उदारम् ।

उदधिरवधिं मर्जलधिव्यवधानां दक्षिणाम् इत्यर्थः । उपसर्गे घोः किः । उदीर्णेन महता धूमेन धूम्राम् अस्पष्टां समेतसीतां सङ्गता सीता अनया इति तृतीयार्थे बहुव्रीहिः । पवनसुतस्य अङ्गुल्या दर्शिताम् उदक्षाः ऊर्द्ध्वीकृताक्षाः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् षित्त्वात् ङीष् न भवति तस्य अनित्यत्वात् तेन दंष्ट्रेत्युपपन्नं भवति । समाहितमिति अनन्यमनस्कतया दिशोऽवलोकनात् ॥ ५० ॥ ज० म०

अथेत्यादि । महेन्द्रप्राप्तमनन्तरं रघुतनयाभ्यां रामलक्ष्मणाभ्यां सहिता वानरसेनाः उदक्षाः उन्नतनेत्राः सत्यः समुद्रव्यवधानां दक्षिणां दिशं दृदृशुः । कौट्टश्रीम् उदीर्णेन महता धूमेन धूम्रां कृष्णलोहिताम् आगमिष्यत्यां क्लेरूपम् । समेता सङ्गता सीता यां यत्र वा पवनसुतस्य हनूमतोऽङ्गुल्या दर्शितां निर्दिष्टाम् उदक्षा इति उन्नतम् ऊर्द्ध्वीकृतम् अक्षं चक्षुः यासाम् इन्द्रियसामान्यवाचिनोऽपि अक्षशब्दस्य विशेषपरत्वात् नेत्रवाचकत्वम् किं वा सक्थ्यक्ष्णः षः स्वाङ्ग इति षप्रत्ययान्तस्य उदक्षशब्दस्य स्वस्रादौ पाठत्वेन नमनसंख्यास्वसृजादेरिति ईप्रत्ययनिषेधः नदादिपाठस्य अनित्यत्वात् इति कालापाः मावादित्वादिति वाचिवताः प्लवङ्गसैन्या इति पठन्ति अन्ये । समाहितमिति दक्षिणदिगवलोकनं स्वत एव जायमानं हनूमदङ्गुलिदर्शितत्वेन सुकरत्वात् समाहितम् । यदुक्तं, समाधिः सुकरं कार्य्यं कारणान्तरयोगत इति । अन्यत्रापि, किञ्चिदारभमाणस्य कार्य्यं दैववशात् पुनः । तत्साधनसमापत्तिर्यदाहुस्तत्समाहितम् इति । जयमङ्गलायान्तु, एकचित्ततया दिशोऽवलोकनात् समाहितम् इत्युक्तम् ॥ ५० ॥ भ०

जलनिधिमित्यादि । महेन्द्रकुञ्जात् जलनिधिम् अगमन् गतवत्यः प्लवङ्गसेनाः लृदित्वात् च्लेरङ् । प्रचयेन उच्चतया तिरोहितास्तिम्मरश्मिभासो येन निकुञ्जेन तस्मात् निकुञ्जात् सलिलसमुदयैः महातरङ्गैः महोर्मिभिः भुवनस्य भरणे क्षममपि शक्तमपि भूभरक्ष इति क्रैयादिकः तस्य क्षतोरपि रूपम् । अभिन्नवेलम् अनतिक्रान्तमर्य्यादं जलनिधिम् उदारमिति उदात्तमित्यर्थः । महानुभावताप्रतिपादनात् यतो महातरङ्गैः जलसमूहैः भुवनभरक्षममपि अभिन्नवेलमिति द्विविधम् उदारं महानुभावतया विविधरत्नयोगाच्च इति इयं महानुभावता दर्शिता ॥ ५१ ॥ ज० म०

पृथुगुरुमणिशुक्तिगर्भभासा ग्लपितरसातलसंभृतान्धकारम्।
उपहतरविरश्मिवृत्तिमुच्चैः प्रलघुपरिप्लवमानवज्रजालैः ॥ ५२ ॥

उदारमेव।

जलनिधिमित्यादि। रघुतनयाः प्लवङ्गसेना महेन्द्रकुञ्जात् जलनिधिम् अगमन् गमॢ्गत्याम् लृदित्वात् च्लेः अङ्। प्रचयेन समूहेन तिरोहिता आच्छादिताः तिग्मरश्मेः सूर्य्यस्य भासो दीप्तयो याभिः ताः प्लवङ्गसेनानां विशेषणं प्रचयेन उच्चतया तिरोहिताः तिग्मरश्मिभासो येन तस्मादिति कुञ्जविशेषणं वा। कीदृशं जलनिधिं महान्तस्तरङ्गा ऊर्मयो येषु तैः सलिलसमुदयैः जलसमूहैः भुवनस्य पृथिव्या भरणे पूरणे क्षमं शक्तमपि अभिन्नवेलम् अनतिक्रान्तमर्य्यादम्। उदात्तमिति महानुभावताप्रतिपादनात् महानुभावत्वन्तु महातरङ्गजलसमूहैः भुवनभरक्षमस्यापि अभिन्नवेलत्वात्। तथा च उक्तम् आशयस्य विभूतेर्वा यत् महत्वमनुत्तमम्। उदात्तं नाम तं प्राहुरलङ्कारं मनीषिण इति। उदारमिति पाठेऽपि अयमेवार्थः। द्विविधमिदं महानुभावत्वात् नानारत्नयोगित्वाच्च आद्यम् अवोक्तम् ॥ ५१ ॥ भ०

द्वितीयमाह

पृथ्वित्यादि। पृथवो महान्तः गुरवः तु न परिच्छेद्याः मणयो मौक्तिका यासां शुक्तीनां तथाविधानां गर्भस्य भासा दीप्त्या ग्लपितं क्षयितं रसातले संभृतम् उपचितम् अन्धकारं येन तम् उच्चैः उपरि प्रलघूनाम् अल्पानां परिप्लवमानानां वज्राणां यानि जालानि समूहाः तैः उपहता रविरश्मिवृत्तयो यस्मिन् सः तं जलनिधिं अगमन् यद्वज्रं वारिणि तरति तत् प्रशस्तम इत्युक्तम्। एतदेवापरेऽन्येन वाक्यार्थेनान्यथा विदुः। नानारत्नवियुक्तं यत् तत् किलोदारमुच्यते इति ॥ ५२ ॥ ज० म०

द्वितीयं दर्शयति

पृथ्वित्यादि। कीदृशं जलनिधिं पृथवो महान्तो गुरवो गुरुत्वाख्यगुणविशेषयुक्ता ये मणयो मौक्तिकानि तेषां याः शुक्तयः तासां गर्भभासा अन्तर्लीनदीप्त्या ग्लपितं नाशितं रसातले पाताले सम्भृतम् उपचितम् अन्धकारं येन सः। मुक्तास्फोटः स्त्रियां शुक्तिः इत्यमरः। उच्चैः उपरि प्रलघूनां लघुतमानाम अतएव परिप्लवमानानां तरतां वज्राणां हीरकाणां जालैः समूहैः उपहता रविरश्मिवृत्तयो येन यत्र वा तं यत् वज्रं जले तरति तत् प्रशस्तम्। यदुक्तं रत्नपरीक्षायां, गुरूणि सर्वरत्नानि वज्रमेकं परं लघु। भिद्यन्तेऽन्यानि वज्रेण तन्न केनापि भिद्यते इति। उदात्तमेवेति विविध-

समुपचितजलं विवर्द्धमानैरमलसरित्सलिलैर्विभावरीषु ।
स्फुटमवगमयन्तमूढवारीन् शशधररत्नमयान्महेन्द्रसानून् ॥५३॥

उदारमेव ।

भुवनभरसहानलङ्घ्यधाम्नः पुरुरुचिरत्नभृतो गुरूरुदेहान् ।
श्रमविधुरविलीनकूर्म्मनक्रान् दधतमुदूढभुवो गिरीनहींश्च ॥५४॥

श्लिष्टम् ।

---

रत्नार्द्धियुक्तत्वात् । यदुक्तं, "पूर्वत्राश्रयमाहात्म्यमत्राभ्युदयगौरवम् । विविच्चितमिति व्यक्तमुदात्तं द्वयमप्यद" इति । अन्यत्रापि "नानारत्नार्द्धियुक्तं यत् तच्चोदात्तं किलोच्यत" इति ॥ ५२ ॥ भ०

समुपचितजलमित्यादि । विभावरीषु रात्रिषु विवर्द्धमानैः अमलैः सरित्सलिलैः समुपचितजलम् उदधिं स्फुटम् अवगमयन्तं बोधयन्तम् । किमित्याह महेन्द्रसानून् शशधररत्नमयान् चन्द्रकान्तस्वभावान् ऊढवारीन् धृतवारीन् अन्यथा कथं पीयते जलं यदि चन्द्रकान्तसानवो न स्युः उदारमेवेति रत्नयोगात् ॥ ५३ ॥ ज० म०

समुपेत्यादि । कीदृशं जलनिधिं विभावरीषु रात्रिषु विवर्द्धमानैः अमलसरित्-सलिलैः निर्म्मलनदीजलैः समुपचितजलम् । अतएव महेन्द्रसानून् शशधररत्नमयान् प्रचुरचन्द्रकान्तमयान् तत्स्वरूपान् वा अवगमयन्तं बोधयन्तम् ऊढवारीन् धृत-जलान् । यदि तत्र चन्द्रकान्तमयाः सानवो न स्युः तदा कथम् ऊढजलाः स्युः ततश्च कथं वा तत्समीपे नदीनां जलवृद्धिरिति तदनुमानमिति भावः । उदात्तमेवेति रत्नयोगात् उदात्तं वस्तुनः सम्पदिति काव्यप्रकाशः ॥ ५३ ॥ भ०

भुवनभरसहानित्यादि । गिरीन् भुवनभरसहान् अहींश्च तादृशान् एव दधतं जलनिधिम् अगमन् गिरीन् अलङ्घ्यधाम्नः अहींश्च अनभिभवनीयतेजसः गिरीन् पुरुरुचिरत्नभृतः अहींश्च महारुचिरत्नभृतः गिरीन् गुरूरुदेहान् अहींश्च महाकायान् श्रमविधुराः श्रमपीड़िताः निलीनाः कूर्मा नक्राश्च येषु तान् गिरीन् अहींश्च उदूढभुवो धृतवसुधान् गिरीन् अहींश्च नक्रव्यग्रशानिति तुल्यं पूर्वस्यानुमानिकः श्लिष्ट-मिति । उपमानेनोपमेयस्य साधनात् । तथा चोक्तं विशेषणेन श्लिष्टम् । उपमानेन यत् तत्त्वमुपमेयस्य साध्यते । क्रियागुणाभ्यां नाम्ना च श्लिष्टं तदभिधीयते इति । अत्र उपमानभूतैः अहिभिः उपमेयभूतानां गिरीणां तत्त्वस्य तादृप्यस्य भुवनभरादि-

प्रदृष्टशुक्तमुक्ताशोकरौघान्
विमलमणिद्युतिसंभृतेन्द्रचापान्।
जलमुच इव घोरमन्द्रघोषान्
क्षितिपरितापहृतो महीतरङ्गान्॥ ५५॥

श्लिष्टमेव।

ताद्रूप्यक्रियया तद्गुणेन च साधनेन गिरिभिः अहिभिश्च नाम्ना च शब्देन भुवने भरसहान् इत्यादिना साध्यमानत्वात् रूपकमपि ईदृशमेव। किन्तु श्लिष्टस्य भेदेन उपमानोपमेययोः युगपत् प्रयोगात् रूपके पुनरेकस्य एव उपमेयपुरुषस्य उपमानम्। तथा च उक्तम्, "लक्षणं रूपकेऽपीदं विद्यते काममत्र तु। इष्टः प्रयोगो युगदुपमानोपमेययोः" इति तदुक्तम् लक्षणम्। श्लिष्टं सहोक्त्युपमाहेतुनिर्देशात् त्रिविधं यथा उक्तम्, "श्लेषादेवार्थवचसोरस्य च क्रियते भिदा। तत् सहोक्त्युपमा हेतुनिर्देशात् त्रिविधं यथा" इति। तत्र इदं सहोक्तिश्लिष्टम् उक्तं गिरीन् अहींश्च इति सहोक्त्या निर्देशात्॥ ५४॥ ज० म०

भुवनेत्यादि। पुनः कीदृशं जलनिधिं गिरीन् पर्वतान् अहीन् सर्पांश्च दधतं पर्वतसर्पयोर्युगपद्विशेषणान्याह भुवनभरसहान् जगतां भारस्य सहान् दृढत्वात् बलवत्त्वाच्च सहेः पचादित्वात् अन्। अनलङ्घ्यधाम्नः अनभिगम्यस्थानान् अहिपक्षे अनभिभवनीयतेजसः पुरुरुचिरत्नभृतः प्रचुरदीप्तिमद्रत्नधारकान् रत्नोत्पत्तिस्थानत्वात् फणारत्नयोगात् च गुरुदेहान् अलघुमहाशरीरान् श्रमविधुरविलीनकूर्मनक्रान् श्रमेण विधुरा विकलाः सन्तो विलीनाः संश्लिष्टाः कच्छपाः कुम्भीराश्च येषु उद्धृतभुवो धृतभूमीन् पर्वतोपरि वालुकासञ्चयेन भूम्युत्पत्तेः भूमिधारकस्य शेषनागस्य तत्र सत्त्वात् च एवम् एवम्भूतं जलनिधिम् अगमन् इति सम्बन्धः। श्लिष्टमिति श्लिष्टमिष्टमनेकार्थम् एकरूपान्वितं वचः। तदभिन्नपदं भिन्नपदप्रायमिति द्विधा तदिह अभिन्नपदं दर्शितं पदभङ्गाभावात् तत् पुनस्त्रिविधम्। तथा च उक्तं, "श्लेषादेवार्थवचसोरस्य च क्रियते भिदा। तत् सहोक्त्युपमा हेतुनिर्देशात् त्रिविधं यथा" इति तत् इदं सहोक्तिलक्षणं श्लिष्टमुक्तं गिरीन् अहींश्च इति सहोक्त्या निर्देशात् अन्यद्वयम् क्रमेण अग्रे उदाहरिष्यति॥ ५४॥ भ०

प्रहृष्टेत्यादि। महीतरङ्गान् जलमुच इव मेघानिव प्रदृष्टः प्रहृष्टवत्यः

विद्रुममणिकृतभूषा मुक्ताफलनिकररञ्जितात्मानः ।
बभुरुदकनागरुग्णा वेलातटशिखरिणो यत्र ॥ ५६ ॥
हेतुश्लिष्टमेव ।

---

उरवो महान्तो मुक्ताः प्रकीर्णाः शीकरौघा येषु अमलमणिद्युतय एव सन्ततानि इन्द्रचापानि येषु धीरमन्द्रघोषान् मधुरगम्भीरध्वनीन् चितिपरितापहृतः पृथिवी-सन्तापहारिणः इदम् अपि यथानिर्दिष्टविशेषणात् श्लिष्टं जलमुच इव इत्युपमान-निर्देशात् ॥ ५५ ॥ ज० म०

प्रदहशुरित्यादि । सहरघुतनयाः प्लवङ्गसेना जलमुच इव मेघान् इव महततरङ्गान् ऊर्म्मीन् प्रदहशुः मेघतरङ्गयोर्युगपद्विशेषणान्याह । उर्विति उरवो महान्तो मुक्ताः कीर्णाः शीकरौघा येषु तान् निर्मलरत्नदीप्तय एव ताभिः करणभूताभिर्वा सम्भूतानि इन्द्रचापानि यत्र । तदुक्तम् अकाले शक्रचापानामुदयस्तु यतो भवेत् । असौ धन्यतरो ज्ञेयो बहुमूल्यो महामणिः इति । मेघपक्षे अमलमणीनाम् इव द्युतिः येषां तादृशानि उद्भूतेन्द्रचापानि यत्र । धीरमन्द्रघोषान् मधुरगभीरध्वनीन् चिति-परितापहृतः पृथिवीसन्तापहारिणः । श्लिष्टमेवेति पूर्वोक्तलक्षणसत्त्वात् किन्तु जलमुच इव इत्युपमानिर्देशात् उपमाश्लिष्टम् इदम् ॥ ५५ ॥ भ०

विद्रुमेत्यादि । वेलातटशिखरिणो यत्र इति जलनिधौ बभुः शोभन्ते स्म ते ददृशुरिति वक्ष्यमाणेन सम्बन्धः वेलातटाः शिखरिणश्चेति द्वन्द्वः । शेषाणि विशे-षणानि उभयत्र तुल्यानि इदमपि यथानिर्दिष्टमेव किन्तु हेतुश्लिष्टं हेतुद्वारेण विशेषणानां निर्देशात् । विद्रुममणिकृतभूषणत्वात् जलहस्तिभग्नत्वात् च बभुः इति ॥ ५६ ॥ ज० म०

विद्रुमेत्यादि । यत्र जलनिधौ वेलातटशिखरिणो बभुः शोभन्ते स्म ददृशुः इत्यग्रिमश्लोकेन अन्वयः । वेलातटाश्च शिखरिणश्चेति द्वन्द्वः । उभयं विशिनष्टि विद्रुमैः प्रवालैः मणिभिश्च कृता भूषा येषु ते तथा मुक्तामणीनां उत्कृष्टमौक्तिकानां मुक्तानां मणीनाञ्च वा निकरेण समूहेन रञ्जिता आत्मानो देहाः प्रदेशा येषां उदकभागरुग्णा जलहस्तिभग्नाः श्लिष्टमेव इति पूर्वोक्तलक्षणसत्वात् किन्तु हेतुश्लिष्टमिदं युगपदुभय-विशेषणानां हेतुत्वेनैव निर्देशात् । प्रवालमणिकृतालङ्कारत्वात् मुक्तामणिदीप्तिरञ्जित-रूपत्वात् उदकनागभग्नत्वात् च बभुरित्यर्थः ॥ ५६ ॥ भ०

भृतनिखिलरसातलः सरत्नः
शिखरिसमोर्मितिरोहितान्तरीक्षः।
कुत इह परमार्थतो जलौघो
जलनिधिमीयुरतः समेत्य मायाम् ॥ ५७ ॥

अपह्नुतिः।

शशिरहितमपि प्रभूतकान्तिम्
विबुधहृतश्रियमप्यनष्टशोभम्।

---

भृतनिखिलरसातल इत्यादि। एवं गुणविशिष्टो जलौघः कुत इह प्रदेशे परमार्थतः परमार्थेन विद्यते। किं तर्हि माया? यतः पूरिताशेषपातालत्वात् सरत्नत्वात् शिखरसमैः ऊर्मिभिः पिहितान्तरीक्षत्वात् च सराघवाः प्लवङ्गसेनाः समेत्य मायामिव जलधिमीयुः ज्ञातवत्यः। सर्वे गत्यर्था ज्ञानार्था इति भ्रञ् भरण इति भौवादिकः। अपह्नुतिरिति मायामित्यन्तर्गतोपमारूपतया निर्देशात् विद्यमानार्थस्य चापह्नवात्। तथा चोक्तम्, अपह्नुतिरितीष्टाव किञ्चिदन्तर्गतोपमा। भूतार्थापह्नवादेषा क्रियतेऽस्या भिदा यथा इति ॥ ५७ ॥ ज० म०

भृतेत्यादि। सहरघुतनयाः प्लवङ्गसेनाः समेत्य मिलित्वा जलनिधिम् अतः कारणात् मायामिव ईयुः ज्ञातवत्यः। सर्वेषां गत्यर्थानां ज्ञानार्थत्वात्। किं कारणं तदाह इह प्रदेशे जलौघः कुतः परमार्थतस्सत्त्वेन विद्यते। कीदृशः भृतनिखिल-रसातलः पूरिताशेषपातालः रत्नैः सहितः पर्वततुल्यतरङ्गैः आच्छादिताकाशः जलस्य एतादृशत्वासम्भवादियं खलु मायेति भावः। अपह्नुतिरिति जलनिधिम् उपमेयम् असत्यं कृत्वा मायामिव इत्युपमानस्य सत्यतया व्यवस्थापितत्वात् तथा चोक्तं, प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः इति। अन्यत्रापि, अपह्नुतिः अभीष्टा च किञ्चिदन्तर्गतोपमा। भूतार्थापह्नवात् ज्ञेया क्रियतेऽस्याभिदा यथा इति ॥ ५७ ॥ म०

शशिरहितमित्यादि। शशिरहितमपि मुग्धचन्द्ररहितमपि प्रभूतकान्तिं पद्मरागादिरत्नावभासितत्वात् विबुधहृतश्रियमपि अनष्टशोभं सर्वदा शोभास्पद-त्वात् सुरैः मथितमपि दिवम् आकाशं जलौघैः समभिभवन्तम् अत्युच्छ्रितत्वात्

मथितमपि सुरैर्दिवं जलौघैः
समभिभवन्तमविच्युतप्रभावम् ॥ ५८ ॥

विशेषोक्तिः ।

क्षितिकुलगिरिशेषदिग्गजेन्द्रान्
सलिलगतामिव नावमुद्वहन्तम् ।
धृतविधुरधरं महावराहम्
गिरिगुरुपोत्रमपीहितैर्जयन्तम् ॥ ५९ ॥

व्याजस्तुतिः ।

तत् एवम् अविच्युतप्रभावम् अखण्डिताभिमानमीयुः ज्ञातवन्तः । विशेषोक्तिरिति शश्यादेरेकदेशस्य विगमेऽपि प्रभूतकान्त्या गुणान्तरेण स्तुतिविशेषस्य प्रतिपादनात् । यथोक्तम्, एकदेशस्य विगमे या गुणान्तरसंस्तुतिः । विशेषप्रथनायासौ विशेषोक्तिर्मता यथा इति ॥ ५८ ॥ भ०

शशीत्यादि । कीदृशं जलनिधिमीयुः शशिरहितमपि चन्द्रेण विरहितमपि प्रभूतकान्तिं प्रचुरदीप्तिं नानारत्नोपशोभितत्वात् विबुधहृतश्रियमपि देवहृतलक्ष्मीकमपि अनष्टशोभं सकलशोभास्पदत्वात् सुरैः मथितमपि जलौघैः दिवम् आकाशं सम्यक् अभिभवन्तम् अत्युच्छ्रितत्वात् । अतएव अविच्युतप्रभावम् अखण्डितमहिमानं विशेषोक्तिरिति चन्द्रादेः एकदेशस्य वैकल्येऽपि तत्कार्य्यप्रभूतकान्त्यादिना गुणान्तरेण विशेषस्य प्रतिपादनात्, तथा च उक्तं, गुणजातिक्रियादीनां यत्र वैकल्यदर्शनम् । विशेषदर्शनायैव सा विशेषोक्तिरिष्यते । अन्यत्रापि, एकदेशस्य विगमे या गुणान्तरसंस्तुतिः । विशेषप्रथनायासौ विशेषोक्तिर्मता यथा इति ॥ ५८ ॥ भ०

क्षितीत्यादि । क्षितिं पृथिवीं कुलगिरीन् कुलपर्वतान् शेषं नागराजं दिग्गजेन्द्रान् ऐरावतादीन् सलिलगतामिव नावमुद्वहन्तं जलनिधिं महावराहं धृतविधुरधरं धृता उद्धृता विधुरा विह्वला धरा मही येन इति । गिरिगुरुपोत्रं गिरिवत् गुरु पोत्रं यस्य तमपि ईहितैः चेष्टितैः जयन्तं जलनिधिमीयुः । व्याजस्तुतिरिति क्षित्यादिधारणात् अधिकगुणस्य जलनिधेः स्तावव्यपदेशेन वराहेण तुल्यत्वात् तम् अपि महावराहं जयन्तम् इति किञ्चित् विधातुमिच्छया निन्द-

गिरिपरिगत चञ्चलापगान्तम्
जलनिवहं दधतं मनोऽभिरामम्।
गलितमिव भुवो विलोक्य रामम्
धरणिधरस्तनशुक्लपट्टचीनम् ॥ ६० ॥

उपमारूपकम्।

न्तम्। तथा च उक्तं, दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यता। किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ यथा इति ॥ ५९ ॥ ज० म०

क्षितीत्यादि। जलनिधिमीयुः इति सम्बन्धः। कीदृशं क्षितिं कुलपर्वतान् शेषं नागराजं दिग्गजेन्द्रान् ऐरावतादींश्च सलिलगतां नौकामिव उद्वहन्तं दधतम्। अतएव महावराहमपि ईहितैः चेष्टितैः जयन्तम्। कीदृशं महावराहं धृतविधुरधरं धृता उद्धृता विधुरा प्रलये व्याकुला धरा पृथिवी येन गिरिवत् गुरु महत् पीवं सुखं यस्य समुद्रपक्षे पीवं तरङ्गः। व्याजस्तुतिरिति जलनिधेः को महिमा यः सदा क्षित्यादिभारं सेवकवत् वहतीति अतो निन्दां कृत्वा महावराहं जयन्तम् इति प्रशंसनात् यत् वा भगवज्जयमप्यापातती निन्दात्वेन उक्ता तत् सादृश्यप्रदर्शनेन स्तुतिरुक्ता। तथा च उक्तं यदि निन्दति वा स्तौति व्याजस्तुतिरसौ मता। दोषाभासा गुणा एव भजन्ते यत्र सन्निधिम् इति। अन्येस्तु क्षित्यादिधारणात् अधिकगुणस्य जलनिधेः स्तोत्रव्यपदेशेन महावराहतुल्यत्वात् तमपि महावराहम् ईहितैः जयन्तम् इति किञ्चिद्विधित्सया निन्दनाद् व्याजस्तुतिः इति उक्तम्। तथा हि, दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यता। किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ मता इति ॥ ५९ ॥ भ०

गिरीपरीत्यादि। गिरिभिः परिगताः संसृष्टाः चञ्चला विलोला आपगान्ता नद्यन्ता यस्मिन् जलनिवहे तं जलनिवहं दधतं धारयन्तं समुद्रमीयुः। कीदृशमिव जलनिवहं रामं भर्त्तारं विलोक्य हृष्टाया इत्यर्थप्राप्तं ततश्च पूर्वकाले क्त्वा। भुवः पृथिव्या इव धरणिधरस्तनयोः शुक्लपट्टस्य चीनमिव गलितम् उपमारूपकम् इति। तथा च उक्तम्, उपमानस्य तद्भावं उपमेयस्य रूपयन्। यो वदत्युपमाभेदमुपमारूपकं यथा इति ॥ ६० ॥ ज० म०

गिरिपरीत्यादि। कीदृशं जलनिधिं जलस्य निवहं समूहं दधतं धारयन्तम्। कीदृशं जलनिवहं गिरिभिः परिगताः संश्लिष्टाः चञ्चला नद्यन्ता नद्यवयवा यत्र

अपरिमितमहाद्भुतैर्विचित्रः
च्युतमलिनः शुचिभिर्महानलङ्घ्यैः ।
तरुमृगपतिलक्ष्मणक्षितीन्द्रैः
समधिगतो जलधिः परं बभासे ॥ ६१ ॥

तुल्ययोगिता ।

तं मनोऽभिरामं खपतिं विलोक्य हर्षवशात् जायारूपाया भुवः पृथिव्या धरणिधरस्य पर्वतस्य स्तनरूपस्य गलितं सस्तं शुक्लवर्णपटाञ्चलमिव उपमारूपकमिति उपमासहितं रूपकमित्यर्थः । अत्र उपमानेन स्तनेन उपमेयस्य कस्यचित् धरणीधरस्य स्तनत्वं रूपितं गलितं पट्टचीनमिव इत्युपमापि निर्दिष्टा । तथा च उक्तम्, "उपमानेन तद्भावं उपमेयस्य रूपयन् । यद्वदत्युपमानं तदुपमारूपकं यथा" इति । अन्यत्रापि उक्तम्, "इष्टं साधर्म्यवैधर्म्यदर्शनान्मुख्यगौणयोः । उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा" इति ॥ ६० ॥ भ०

अपरिमितमहाद्भुतैरित्यादि । तरुमृगपतिलक्ष्मणक्षितीन्द्रैः सुग्रीवलक्ष्मणरामैः समधिगतः प्राप्तो जलधिः परं सुष्ठु बभासे शोभते स्म । कीदृशैः कीदृशः इत्याह । अपरिमितमहाद्भुतैः विचित्रः नानाद्भुतः शुचिभिः विमलैः च्युतमलिनो निर्मलोऽलङ्घ्यैः अनभिभवनीयैः महान् अनभिभवनीयः एवञ्च कृत्वा तेनापि ते समधिगताः परं बभासिरे इति तुल्ययोगितेति न्यूनानामपि तेषां सुग्रीवादीनां विशिष्टेन जलनिधिना महाद्भुतत्वादिगुणसाम्यविवक्षया तुल्यस्य कार्य्यस्य भासनलक्षणस्यानुष्ठानेन तुल्ययोगात् । तथा च उक्तम् । न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया । तुल्यकार्य्यक्रियायोगादित्युक्ता तुल्ययोगिता" इति ॥ ६१ ॥ ज० म०

अपरिमितेत्यादि । तरुमृगाणां वानराणां पत्या सुग्रीवेण लक्ष्मणेन क्षितीन्द्रेण रामेण च समधिगतः प्राप्तो जलधिः परम् अत्यर्थं बभासे शोभते स्म । क्रमेण सुग्रीवादीनां समुद्रस्य च तुल्यानि विशेषणान्याह । अपरिमितमहाश्चर्य्यैः विचित्रः आश्चर्य्यान्वितः च्युतमलिनः शुचिभिः विमलैः महान् अनभिभवनीयः अलङ्घ्यैः अनभिभवनीयैः एवञ्च सति तुल्यरूपत्वात् तेन समधिगतास्तेऽपि बभासिरे इत्यर्थात् गम्यते । तुल्ययोगितेति उपमानानामपि सुग्रीवादीनां विशिष्टेन जलधिना गुणसाम्यविवक्षया तुल्यकार्य्यस्य भासनलक्षणस्य योगात् । यथा च उक्तम्,

न भवति महिमा विना विपत्ते:
अवगमयन्निव पश्यत: पयोधि:।
अविरतमभवत् क्षणे क्षणेऽसौ
शिखरिपृथुप्रथितप्रशान्तवीचि: ॥ ६२ ॥

निदर्शनम्।

विवक्षितगुणोत्कर्षं यत् समीकृत्य कस्यचित्। कीर्त्तनं स्तुतिनिन्दार्थं सा स्मृता तुल्ययोगिता इति। अन्यत्राप्युक्तं, "न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया। तुल्य-कार्य्यक्रियायोगादित्युक्ता तुल्ययोगिता" इति ॥ ६१ ॥ भ०

न भवतीत्यादि। महिमा महत्त्वं विना विपत्ते: विनाशं विना न भवति पृथग् विना इत्यादिना पञ्चमी नास्त्येव तन्महत्त्वं यस्य विनाशो नास्तीति एवम् अव-गमयन् बोधयन् इव पयोधि: तान् पश्यतो रामादीन् अविरतम् अविच्छेदेन शिख-रिवत् पृथव: प्रथिता: प्रशान्ताश्च वीचयो यस्य स एवं क्षणे क्षणे अभवत् भूतवान्। निदर्शनेति प्रतिक्षणं वीचीनां पृथुत्वप्रशान्तत्वभवनक्रिययैव महिमभवनस्य तदर्थस्य विपत्तिफलस्य उपादानात् न यथेववतिशब्दानां प्रयोगात्। तथा च उक्तं, "क्रिययैव तदर्थस्य विशिष्टस्योपदर्शनात्। ज्ञेया निदर्शना नाम यथेववतिभिर्विना" इति ॥ ६२ ॥ ज० म०

न भवतीत्यादि। विपत्ते: विना विनाशं विना महिमा महत्त्वं न भवति। अन्यारभ्येति विनायोगे पञ्चमी नास्ति एव तत् महत्त्वं यस्य विपत्ति: नास्तीति पश्यतो रामादीन् अवगमयन् इव बोधयन् इव असौ पयोधि: अविरतम् अविच्छेदेन क्षणे क्षणे शिखरिपृथुप्रथितप्रशान्तवीचि: अभवत् पर्वतवत् पृथवो महान्त: प्रथिता: प्रकाशिता: पश्चात् प्रशान्ताश्च वीचय: तरङ्गा यस्य स तथा महता विपत्तौ खेदो न कर्त्तव्य इति रामं प्रत्युपदिष्टमिति पश्यत इत्यस्य भाव:। निदर्शनम् इति प्रतिक्षणं वीचीनां पृथुत्वप्रशान्तिक्रियां दर्शयित्वा अन्यत्रापि महिम्नो विपत्ति-फलस्य उपादानात्। तथा च उक्तम्। अर्थान्तरप्रवृत्तेन किञ्चित् तत् सदृशं फलम्। सदसत्वानि दर्श्येत यदि स्यात् तन्निदर्शनम् इति। अन्यत्राप्युक्तं, "क्रिययैव तद-र्थस्य विशिष्टस्योपदर्शनात्। इष्टं निदर्शनं नाम यथेववतिभिर्विना" इति। कार्य्य: शब्दो यथा घट इत्यादिवत् यथाशब्दादिभि: विना इदं निदर्शनम् इति ॥ ६२ ॥ भ०

समुद्रोपकण्ठे रामस्य मदनावस्थामाह।

मृदुभिरपि बिभेद पुष्पबाणैः
जलशिशिरैरपि मारुतैर्ददाह।
रघुतनयमनर्थपण्डितोऽसौ
न च मदनः क्षतमाततान नार्चिः ॥ ६२ ॥

विरोधः

अथ मृदुमलिनप्रभौ दिनान्ते
जलधिसमीपगतावतीतलोकौ।

मृदुभिरित्यादि। मदनोऽनर्थपण्डितः निष्प्रयोजनकुशलः पुष्पबाणैरपि मृदुभिः रघुतनयं बिभेद न चासौ क्षतं खण्डनम् आततान जनितवान्। जलशिशिरैः मारुतैः तमेव रघुतनयं ददाह। न च असौ अर्चिः ज्वालाम् आततान विरोध इति पुष्पबाणानां यत् मार्दवं मरुताञ्च जलसंसर्गाद् यच्छैत्यं तयोर्भेददाहलक्षणे क्रिये विरुद्धे तयोः अभिधानात् तयोश्च क्रिययोर्वा विरोधिनी क्रिया क्षतार्चिषोरव-मानालक्षणाख्याः कामोद्रेकप्रतिपादनाभिधानात्। तथा च उक्तं, गुणस्य च क्रियाया वा विरुद्धान्यक्रियाभिधा। या विशेषाभिधानाय विरोधं तं विदुर्यथा इति ॥ ६२ ॥ अ० म०

समुद्रान्तिके सीतास्मरणात् रामस्य कामावस्थामाह

मृदुभिरित्यादि। मदनो मृदुभिरपि पुष्पबाणैः रघुतनयं बिभेद न च असौ मावतापि क्षतं खण्डनम् आततान कृतवान्। सजलशीतलैरपि मारुतैः तं ददाह न च असौ अर्चिः आततान। अतएव असौ अनर्थपण्डितः निष्प्रयोजने कर्मणि कुशलः विरोध इति। पुष्पबाणानां यत् मार्दवं मारुतानाञ्च जलसंसर्गात् यत् शैत्यं तयोर्भेददाहलक्षणं क्रियाद्वयं विरुद्धम् अभिहितं तयोश्च क्रिययोः विरुद्धं क्षतार्चिषोः अकरणं तेन कामोत्कर्षरूपो विशेषः प्रतिपादितः अयञ्च विरोधो न वास्तवः भेददाहाभ्यां पीड़ामात्रस्य वाच्यितत्वात्। तथा चोक्तं, विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम्। विशेषसाधनायैव स विरोधः स्मृतो यथा इति। अन्यथापि उक्तं, गुणस्य च क्रियाया वा विरुद्धार्थक्रियाभिधा। या विशेषाभिधानाय विरोधं तं विदुर्यथा इति ॥ ६२ भ० ॥

अथेत्यादि। अथो क्षयक्षणान्तरं मृदुमलिनप्रभौ मृदुः अप्रचण्डा मलिना

अनुकृतिमितरेतरस्य मूर्त्त्योः
दिनकरराघवनन्दनावकार्ष्टाम् ॥ ६४ ॥

उपमेयोपमा।

अपहरदिव सर्वतो विनोदात्
दयितगतं दधदेकधा समाधिम्।
घनरुचि ववृधे ततोऽन्धकारम्
सह रघुनन्दनमन्मथोदयेन ॥ ६५ ॥

सहोक्तिः।

प्रभा ययोः तौ: दिनकरराघवनन्दनौ रवौः अपत्यं राघवः दशरथः तन्नन्दनो रामः दिनान्ते अन्योऽन्यस्य दिवाकरो रामस्य रामोऽपि दिवाकरस्य इति मूर्त्त्योः देहयोः अनुकृतिमिव अनुकारमिव यथोक्तधर्मतुल्यतया अकार्ष्टां कृतवन्तौ अतीतलोकौ त्यक्तलोकौ उपमेयोपमेति तयोः पर्य्यायेण उपमानोपमेयत्वात्। तथा चोक्तम्, उपमानोपमेयत्वं यत्र पर्य्यायतो भवेत्। उपमेयोपमां धीरा ब्रुवते तां यथोदिताम् इति ॥ ६४ ॥ ज० म०

अथेत्यादि। अनन्तरं दिनकरः सूर्य्यो राघवस्य दशरथस्य नन्दनो रामो दिनस्य अन्ते सन्ध्याकाले अन्योऽन्यस्य मूर्त्त्योः शरीरयोः अनुकृतिम् अनुकारम् अकार्ष्टां कृतवन्तौ तुल्यधर्मत्वात्। सूर्य्यो रामस्य मूर्त्तेः अनुकृतिं रामोऽपि सूर्य्यस्य मूर्त्तेः अनुकृतिं चकार इत्यर्थः। द्वयोः तुल्यतां दर्शयति तौ कीदृशौ मृदुः अप्रचण्डा मलिना प्रभा ययोः सूर्य्यस्य दिनान्तवशात् रामस्य शोकात् शय्यादिशयनात् च समुद्रसमीपं गतौ त्यक्तलोकौ च। उपमेयोपमेति इतरेतरशब्देन समानधर्मत्वात् पर्य्यायेण उपमानोपमेयत्वकथनात्। तथा चोक्तम्, उपमानोपमेयत्वं यत्र पर्य्यायतो भवेत्। उपमेयोपमां धीरा ब्रुवते तां यथोदिताम् इति ॥ ६४ ॥ भ०

अपहरदित्यादि। ततस्तु उत्तरकालं दिवसे ये विनोदाः चेतसः संस्थापकाः तान् सर्वतः सर्वान् सर्वेण वा प्रकारेण आद्यादित्वात् तसिः। अपहरदिव अपनयदिव अन्धकारं दयितगतं प्रियागतञ्च समाधिं चित्तैकाग्रताम् एकधा एकप्रकारं दधत् धारयत् घनरुचि बहुलच्छायं ववृधे वर्द्धते स्म। सह रघुनन्दनमन्मथोदयेन तदानीं तस्य कामोदयोऽपि ववृधे सहोक्तिः इति अन्धकारमन्मथाश्रितयोः वर्द्धन-

अधिजलधि तमः क्षिपन् हिमांशुः
परिददृशेऽथ दृशां कृतावकाशः।
विदधदिव जगत्पुनः प्रलीनम्
भवति महान् हि परार्थ एव सर्वः॥ ६६॥

परिवृत्तिः।

---

क्रिययोः तुल्यकालयोः वबन्धे इत्यनेन पदेन कथनात्। तथा च उक्तं, तुल्यकाल-क्रिये यत्र वस्तुद्वयसमाश्रिते। वाक्येनैकेन कथ्येते सहोक्तिः सा मता यथा इति ॥ ६५॥ ज० म०

अपहरदित्यादि। ततो दिनान्तात् उत्तरकालम् अन्धकारं रघुनन्दनस्य रामस्य कामोदयेन सह ववन्ध। तदानीम् अन्धकारो रामस्य कामोदयोऽपि प्रवृद्ध इत्यर्थः। उभयविशेषणमाह सर्वतो विनोदान् अपहरदिव दिवसे ये विनोदाः चित्तप्रसादकाः तान् सर्वान् सर्वप्रकारेण वा अपनयदिव पक्षे विभक्ति-व्यत्ययः। दयितगतं समाधिं चित्तैकाग्रताम् एकधा एकप्रकारं दधत् जनयत्। घनरुचि मेघवत् श्यामं निविडच्छायं वा कामोदयपक्षे दयिताविषयं निविडा श्रद्धा यस्मात् दयितगताम् इत्यत्र प्रमदवनमित्यादिवत् ह्रस्वः। वस्तुतस्तु दयितशब्देन सामान्यविवक्षया भार्य्यापि उच्यते। "अन्धकारोऽस्त्रियां ध्वान्तम्" इत्यमरः। सहो-क्तिरिति अन्धकारकामोदयाश्रितयोः वृद्धिक्रिययोः तुल्यकालयोः ववन्धे इत्यनेन अभि-धानात्। तथा चोक्तं, तुल्यकालक्रिये यत्र वस्तुद्वयसमाश्रिते। पदेनैकेन कथ्येते सहोक्तिः सा मता यथा इति॥ ६५॥ भ०

अधिजलधीत्यादि। अथ हिमांशुः अन्धकारवर्द्धनानन्तरम् अधिजलधि जलधेः उपरि विभक्त्यर्थेऽव्ययीभावः। तमः क्षिपन् अपनयन् परिददृशे दृष्टः दृशां चक्षुषां कृतावकाशः दत्तप्रसरः जगत् लोकं प्रलीनं तिरोभूतं पुनर्विदधदिव सृजन्निव। कस्मात् तेनैवं कृतमित्याह॥ यस्मात् यो महान् स सर्वः परार्थ एव परप्रयोजन एव भवति। परिवृत्तिरिति दृशां कृतावकाश इत्यनेन विशिष्टस्य वस्तुन आदानात् तमः क्षिपन् इत्यनेन अस्य वस्तुनः अपोहात् भवति इत्यादिना अर्थान्तरन्यासात्। तथा चोक्तं, विशिष्टस्य यदादानम् अन्यापोहेन वस्तुनः। अर्थान्तरन्यासवती परि-वृत्तिरसौ यथा इति॥ ६६॥ ज० म०

अधीत्यादि। अथान्धकारवृद्ध्यनन्तरं हिमांशुः चन्द्रो जनैः परिददृशे दृष्टः। कीदृशः अधिजलधि समुद्रे तमोऽन्धकारं क्षिपन् नाशयन्। अधिजलधि इति

अशनिरयमसौ कुतो निरभ्रे
स्तनशरवर्षमसत्तदप्यशार्ङ्गम्।
इति मदनवशो मुहुः शशाङ्के
रघुतनयो न च निश्चिकाय चन्द्रम्॥ ६७॥
ससन्देहः।

---

समन्ययेऽव्ययीभावः। इमां चक्षुषां कृतावकाशः दत्तावसरः प्रक्षीणं तिरोभूतं जगत् पुनः विदधदिव सृजन्निव। कुतस्तेन एवं कृतमित्याह, हि यस्मात् सर्वं एव महान् जनः परार्थ एव परप्रयोजन एव भवति। परिवृत्तिरिति इमां कृताव-काश इत्यनेन विशिष्टस्य वस्तुनः आदानात् तमः क्षिपन् इत्यनेन च कस्यचित् वस्तुनोऽपोहात् भवति हि इत्यादिना अर्थान्तरन्यासात्। तथा च उक्तं, विशिष्टस्य यदादानमन्यापोहेन वस्तुनः। अर्थान्तरन्यासवती परिवृत्तिरसौ यथा इति। विद्या-सागरस्तु तमःसम्बन्धिनम् अवकाशं नेत्रेषु आधाय तत्सम्बन्धिनः क्षेपणस्य तमसि विधानात्। परिवृत्तिरियम् इत्याह। तथा चोक्तम्, अर्थानां यो विनिमयः परिवृत्तिस्तु सा यथा इति॥ ६६॥ भ०

अशनिरित्यादि। असौ यः चन्द्रः किम् अयम् अशनिः वज्रम् असौ कुतो निरभ्रे नभसि कुतः यतोऽसौ मेघात् उत्पद्यत इति। उत निशितानां शराणां वर्षं तदपि अशार्ङ्गम् अविद्यमानधनुः असदविद्यमानमिति अयं मदनवशः कामाभिभूतो मुहुः अयं शशाङ्के शशाङ्कविषये रघुतनयोऽभूत् इत्यर्थात् द्रष्टव्यम्। न च चन्द्रं निश्चिकाय निश्चिनोति स्म। विभाषा चेरिति कुत्वं ससन्देह इति। अशनिशर-वर्षाभ्याम् उपमेयस्य चन्द्रस्य तत्त्वम् अशनिशरवर्षम् इति प्रयोक्तुः अभिधानात्। कुतो निरभ्रे तदपि अशार्ङ्गम् इति पुनः उपमानोपमेययोः भेदाभिधानात् न निश्चि-काय चन्द्रमिति स्तुत्यर्थं सन्देहवचोऽभिधानाच्च। तथा च उक्तम्, उपमानोप-मेयस्य तत्त्वञ्च वदतः पुनः। ससन्देहवचः स्तुत्यै ससन्देहं विदुर्यथा इति ॥ ६७॥ ज० म०

अशनिरित्यादि। रघुतनयो रामः कामवशः सन् चन्द्रं न च निश्चिकाय न निर्णीतवान् किन्तु मुहुः अयम् इति एवं शशाङ्के वितर्कितवान्। किम् इत्याह, अयम् अशनिः वज्रः असौ अशनिः निरभ्रे नभसि कुतः यतो मेघादेव अशनिः उत्पद्यते। किम् इदं निशितानां शराणां वर्षं तदपि कुतः यतः [illegible] अशार्ङ्गम्

कुमुदवनचयेषु कीर्णरश्मिः
क्षततिमिरेषु च दिग्वधूमुखेषु।
वियति च विललास तद्वदिन्दुः
विलसति चन्द्रमसा न यद्वदन्यः॥ ६८॥

अनन्वयः।

अविद्यमानधनुः अभूत् धनुषा विना न भवति इत्यर्थः। अशाङ्क इति पाठे इति एवं मदनवशः चन्द्रविषयेऽभूत् न च चन्द्रं निश्चिकाय इति योज्यम्। ससन्देह इति उपमेयस्य चन्द्रस्य उपमानाशनिशरदर्पकृपलम् अभिधाय कुत इत्यादिना पुनरुप-मानोपमेययोर्भेदाभिधानात् तावतापि न च निश्चिकाय चन्द्रम् इति ससन्देहवचो-ऽभिधानाच्च। तथा चोक्तम्, उपमानेन यत्तत्त्वं भेदञ्च वदतः पुनः। ससन्देहवचः स्तुत्यै ससन्देहं विदुर्बुधा इति॥ ६७॥ भ०

कुमुदवनचयेष्वित्यादि। मुकुदवनानां चयेषु समूहेषु दिग्वधूमुखेषु वियति च क्षततिमिरेषु खण्डिततमःसु यतस्तेषु विकीर्णरश्मिः विसृतमयूखः विललास तद्वत् इन्दुः शोभते स्म। चन्द्रमसः सकाशात् अन्यो यद्वत् यथा न विलसति तथा विल-लास इदमुक्तं भवति। इन्दुः विललास चन्द्र इवेति अनन्वय इति तत्सादृश्यस्य साम्यस्य अविवक्षातः चन्द्रस्य उपमानोपमेयत्वात्। तथा चोक्तं, यत्र तेनैव तस्य स्यादुपमानोपमेयता। सादृश्यस्य विवक्षातस्तमित्याहुरनन्वयम् इति॥ ६८॥ ज० म०

कुमुदेत्यादि। इन्दुः तद्वत् इन्दुवत् विललास शोभते स्म। चन्द्रात् अन्यः कोऽपि यद्वत् इन्दुवत् न विलसति इन्दुः कीदृशः कुमुदवनानां चयेषु समूहेषु दिग्वधूनां मुखेषु वियति आकाशे च क्षततिमिरेषु खण्डितान्धकारेषु कीर्णरश्मिः प्रसारित-किरणः। केचित् तु इन्दुः तद्वत् तथा विललास यद्वत् यथा चन्द्रमसोऽन्यो न विलसति इत्याह। एवं सति चन्द्रस्य उपमानत्वमुपमेयत्वञ्च न स्यात्। अन्ये तु इन्दुः यथा विललास तथा तदन्यो न विलसति इत्यर्थे चन्द्रस्य उपमानत्वञ्च उक्तं स्यात् इत्याहुः। अनन्वय इति चन्द्रस्य उपमानोपमेयत्वकथनेन अन्यस्य तत्सादृश्यस्य निरासात्। तथा चोक्तं रुद्रभटे, सा स्यादनन्वयाख्या यत्रैकं वस्त्वन्यदसदृशमक्तं इति। तस्य स्वयमेव भवेत् उपमानञ्चोपमेयञ्च॥ ६८॥ भ०

शरणमिव गतं तमो निकुञ्जे
विटपिनिराकृतचन्द्ररश्म्यराती।
पृथुविषमशिलान्तरालसंस्थम्
सजलघनद्युति भीतवत्ससाद ॥ ६८ ॥

उत्प्रेक्षावयवः।

अथ नयनमनोहरोऽभिरामम्
स्मर इव चित्तभवोऽप्यवामशीलः।

शरणमित्यादि। पृथुविषमशिलानां यानि अन्तरालानि तेषु संस्थं सन्निष्ठमानं सत्तमः निकुञ्जे गहने विटपिभिः निराकृताः चन्द्रस्य रश्मय एव अरातयो यस्मात् निकुञ्जात् तस्मिन् ससाद विलीनं शरणमिव यथा कश्चित् भीतो दुर्गे निलीयते। सजलस्य घनस्येव द्युतिः यस्य तमसः उत्प्रेक्षावयव इति भीतवत् ससाद इति उपमाश्लेषलक्षणस्य श्लिष्टस्य अर्थेन योगात् शरणमिव गतमित्युत्प्रेक्षायोगात् विटपिनिराकृतचन्द्ररश्म्यराताविति रूपकार्थेन योगात् तथा चोक्तं, श्लिष्टस्यार्थेन संयुक्तः किञ्चित् चोत्प्रेक्षयान्वितः। रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा इति। विटपितिरस्कृतचन्द्ररश्मियोग इति पाठान्तरम्। तत्र रूपकार्थो नास्ति इति असम्पूर्णलक्षणता ॥ ६८ ॥ ज० म०

शरणमित्यादि। सजलस्य मेघस्य इव द्युतिः यस्य तत् तमोऽन्धकारं पृथुविषमशिलायाम् अन्तराले स्थितं सत् निकुञ्जे शरणं गतमिव शरणापन्नमिव ससाद विलीनं भीतवत् यथा कश्चित् भीतो दुर्गवनान्तरे विलीयते निकुञ्जे कीदृशे विटपिभिः वृक्षैः निराकृता चन्द्ररश्मिरूपा अरातयस्तमःशत्रवो यस्मात् उत्प्रेक्षावयव इति भीतवत् ससाद इति उपमाश्लेषरूपश्लिष्टस्यार्थेन योगात् शरणमिव गतमित्युत्प्रेक्षाया योगात् विटपिनिराकृतचन्द्ररश्म्यरातावितिरूपकार्थेन योगाच्च। तथा चोक्तं, श्लिष्टस्यार्थेन संयुक्तः किञ्चिच्चोत्प्रेक्षयान्वितः। रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा इति। चन्द्ररश्मियोग इति पाठे रूपकार्थो नास्ति इति असम्पूर्णलक्षणता ॥ ६८ ॥ म०

अथेत्यादि। अथ चन्द्रदर्शनानन्तरं रघुसुतं रामम् अभिरामं कामाभिभूतत्वात् आभिमुख्येन रम्यते इति। अनुजः कनीयान् भ्राता वाचं वक्ष्यमाणां जगाद

रघुसुतमनुजो जगाद वाचम्
सजलघनस्तनयित्नुतुल्यघोषः ॥ ७० ॥
संसृष्टिः ।

पतिवधपरिलुप्तलोलकेशी-
र्नयनजलापहृताञ्जनौष्ठरागाः ।
कुरु रिपुवनिता जहीहि शोकम्
क्व च शरणं जगतां भवान् क्व मोहः ॥ ७१ ॥
आशीः ।

गदितवान् नयनमनोहरः प्रेक्षणीय इत्यर्थः । इति तुल्ययोगिता । न्यूनस्य लक्ष्मणस्य अधिकेन रामेण महाभिरमणीयगुणसाम्यविवक्षया अभिरमणात्मक्रियायोगात् । स्मर इव चित्तभवोऽपि तस्य चेतसि सदा भवतीति श्लिष्टं तथापि अवामशीलोऽप्रतिकूल इति विरोधः । स्मरस्तु वामशीलः सजलघनस्तनयित्नुना शब्देन तुल्यो घोषो यस्य सः । संसृष्टिः इति बह्वलङ्कारयोगात् । यथा चोक्तं, पराभिभूता संसृष्टिः बह्वलङ्कारयोगतः । रचिता रत्नमालेव सा चैवं कथ्यते यथा ॥ ७० ॥ ज० म०

अथेत्यादि । चन्द्रोदयदर्शनानन्तरं रघुसुतं रामम् अभिरामं सुन्दरम् अनुजो लक्ष्मणो वाचं वक्ष्यमाणं जगाद । कीदृशः स्मर इव काम इव नयनमनोहरः तदुभयानन्दकः चित्तभवः रामस्य चित्ते विद्यमानः अवामशीलः अनुकूलस्वभावः चित्तभवो हि कामोऽवामशीलो भवति तत्पक्षप्रवर्त्तकत्वात् अयं तु न तथा इत्यापाततो विरोधसूचनाय अपिशब्दः सजलनिविडमेघतुल्यशब्दः संसृष्टिरिति नानालङ्कारसंसर्गात् तथा हि, स्मर इव इत्युपमा नयनमनोहर इति तुल्ययोगिता । चित्तभव इति श्लेषः अवामशील इति विरोधः सजलघनेत्यादिना पुनरुपमा । तथा चोक्तं, संसृष्टिरिति विज्ञेया नानालङ्कारसङ्कर इति ॥ ७० ॥ भ०

पतीत्यादि । पतिवधेन परिलुप्ता भ्रष्टा लोलाः केशा यासां रिपुवनितानां नयनजलेन अश्रुणा अपहृतम् अञ्जनम् ओष्ठरागश्च यासां ताः मन्दोदरीप्रभृतीः कुरु, शोकं जहीहि इत्याशंसे । किं क्व भवान् जगतां शरणम् आश्रयः क्व च मोह इति । आशीरिति इष्टस्य आशंसनात् । तथा चोक्तं, आशीरिति च केषाञ्चिदलङ्कारतया मता । सौहृदास्यविरोधोक्तौ प्रयोगोऽस्यास्च तद्यथा इति ॥ ७१ ॥ ज० म०

अधिगतमहिमा मनुष्यलोके
वत सुतरामवसीदति प्रमादी।
गजपतिरुरुशैलशृङ्गवर्ष्मा
गुरुरवमज्जति पङ्कभाङ् न दारु ॥ ७२ ॥

हेतुः।

बोद्धव्यं किमिव हि यत्त्वया न बुद्धम्।
किं वा ते निमिषितमप्यबुद्धिपूर्वम्।

पतीत्यादि। किं जगादेत्याह रिपोः रावणस्य वनिताः स्त्रियः पतिवधात् परिलुप्ता भ्रष्टा लोलाः चञ्चलाः केशा यासां नयनजलेन अपहृतम् अञ्जनम् ओष्ठरागश्च यासां तथाविधाः कुरु, शोकं लप्सीहि इत्याशंसे। यतो जगतां शरण्यं रक्षिता भवान् क्व मोहश्च क्व वा असम्भावनायां क्वद्वयम्। आशीरिति इष्टार्थाशंसनात्। तथा चोक्तम्, आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा इति। अन्यत्रापि, आशीरिति च केषाञ्चिदलङ्कारतया मता। सौहृदस्याविरोधोक्तौ प्रयोगोऽस्याश्च तादृश इति ॥७१॥ भ०

अधिगतमहिमेत्यादि। मनुष्यलोके योऽधिगतमहिमा प्राप्ताधिपत्यः स प्रमादी शोकादिषु प्रमादवान् वत कष्टम् अवसीदति न कार्य्यसमर्थो भवति। कुत एतदित्याह गजपतिः उरुशैलशृङ्गवर्ष्मा महाशैलशृङ्गप्रमाणं वर्ष्म वपुः यस्य सः पङ्कभाक् पङ्कं भजते इति भजो ण्विः। पङ्कम् अवतीर्णः सन् अवमज्जति अवसीदति यस्मात् असौ गुरुः न पुनर्दारु काष्ठं तस्मात् मुञ्च शोकं हेतुरिति गजपतेः हेतुद्वारेण निर्देशात् अप्रस्तुतप्रशंसा द्रष्टव्यः ॥ ७२ ॥ ज० म०

अधीत्यादि। अधिगतमहिमा प्राप्ताधिपत्योऽपि मनुष्यलोके प्रमादी कार्य्येऽनवधानवान् सन् वत कष्टं सुतराम् अवसीदति कार्य्यासमर्थो भवति। कुत इत्याह उरुशैलशृङ्गवर्ष्मा महापर्वतशिखरप्रमाणशरीरो गजपतिः पङ्कभाक् पङ्कम् अवतीर्णः सन् अवमज्जति पङ्के प्रविशति यस्मात् असौ गुरुः न तु दारु काष्ठं मज्जति लघुत्वात् तस्मात् महतां प्रमादो विनाशहेतुः न तु लघीयसां तत्कारणं शोकं संत्यजेति भावः। हेतुरिति गजपतेः हेतुद्वारेण निर्देशात्। तथा चोक्तं, हेतुमता सह हेतोरभिधानमभेदकृद्भवेत्। सोऽलङ्कारो हेतुः स्यादन्येभ्यः पृथग्भूतः ॥ ७२ ॥ भ०

बोद्धव्यमित्यादि। किमिव तत् बोद्धव्यं ज्ञातव्यमस्ति नैव इत्यर्थः यत्त्वया न-

लब्धात्मा तव सुकृतैरनिष्टशङ्की
स्नेहौघो घटयति मां तथापि वक्तुम् ॥ ७३ ॥

निपुणम् ।

सौमित्रेरिति वचनं निशम्य रामो
जृम्भावान् भुजयुगलं विभज्य निद्रान् ।
अध्यष्टाच्छिशयिषया प्रवालतल्पम्
रक्षायै प्रतिदिशमादिशन् प्लवङ्गान् ॥ ७४ ॥

इति भट्टिकाव्ये प्रसन्नकाण्डे काव्यालङ्कारो नाम
दशमः सर्गः ।

बुद्धं बुद्धा विज्ञेयं तव किञ्चित् चेष्टितमपि न उपेक्षापूर्वकं यतो निमिषित-मपि अक्ष्णोः निमीलनमपि अबुद्धिपूर्वकं नैव इत्यर्थः । यद्येवं किमित्यस्माकमपदिशसि इत्याह । लब्धात्मेति तथापि सुकृतैः लब्धात्मा लब्धजन्मा स्नेहौघः स्नेहसमूहः अनिष्ट-शङ्की अनिष्टशङ्कनशीलः मां वक्तुं घटयति निपुणमिति अर्थावगाढत्वादस्य चोदात्ते-ऽन्तर्भावो द्रष्टव्यः भाविकत्वमित्यलङ्कार उक्तः तदन्यविषयत्वात् पृथक् प्रदर्शयिष्यति ॥ ७३ ॥ ज० म०

बोद्धव्यमित्यादि । यस्त्वया न बुद्धं तद्बोद्धव्यं किमिवास्ति अपि तु न किञ्चिदेव इवशब्दोऽसम्भावनायां तव निमिषितमपि चक्षुषोः निमीलितमपि किं वा अबुद्धिपूर्वकं नैव इत्यर्थः । अतो न किञ्चिदपि चेष्टितं तवानवधानपूर्वकमिति भावः । अतो यद्यपि भवतो नोपदेशो युक्तः तथापि सुकृतैस्तव सुष्ठु कर्मभिः अस्मत्पुण्यैर्वा लब्धात्मा प्राप्तस्वरूपो जातः स्नेहसमूहस्तवानिष्टशङ्काशीलः मां वक्तुं घटयति त्वाम् उपदेष्टुं मां प्रेरयति इत्यनुज्ञो जगादेति पूर्वेणान्वयः । निपुणमिति कनिष्ठस्य ज्येष्ठोपदेशानौचित्येऽपि नैपुण्येन उक्तत्वात् निपुणनामायमलङ्कार इति प्राञ्च इति विद्यासागरः । अस्य प्रेयस्यन्त-र्भाव इति देवनाथः प्रेयः प्रियतराख्यानमिति तत् लक्षणात् उदात्तमध्येऽन्तर्भाव इति जयमङ्गला ॥ ७१ ॥ भ०

सौमित्रेत्यादि । इत्येवं लक्ष्मणस्य वचनं निशम्य श्रुत्वा रामो जृम्भावान् जातजृम्भिकः जृम्भणं जृम्भा गुरोश्च हलः इत्यकारः टाप् । निद्रान् निद्रां गच्छन् द्राकुत्सितायां गतावित्यस्माद्दादिकस्य निपूर्वस्य शतरि रूपम् । शिशयिषया

# एकादशः सर्गः ।

**अथास्तमासेदुषि मन्दकान्तौ पुण्यक्षयेणेव निधौ कलानाम् ।**
**समाललम्बे रिपुमित्रकल्पैः पद्मैः प्रहासः कुमुदैर्विषादः ॥ १ ॥**

शयितुमिच्छया भुजयुगलं विभज्य एकं शिरःस्थाने न्यस्य द्वितीयं शरीरस्य उपरि प्रसार्य्येत्यर्थः । विभुज्येति पाठान्तरं तत्र क्रोडभागे वक्रीकृत्येत्यर्थः । प्रवालतल्पं पल्लवशयनीयम् अध्यष्ठात् अधिष्ठितवान् गातिस्थेति सिचो लुक् प्राक्सितेत्यादिना षत्वं अम्बुद्रादिदिक्ष्वथा नियमपूर्वं भ्रष्टापीत्यर्थः । रक्षार्थे रक्षानिमित्तं प्लवङ्गमानादिशन् नियोजयन् प्रतिदिशं दिशि दिशि अव्ययीभावे शरत्प्रभृतिभ्य इति टच् तत्र दिक्शब्दस्य पठितत्वात् ॥ ७४ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां प्रसन्नकाण्डे काव्यालङ्कारदर्शनं नाम
प्रथमः परिच्छेदः सीताभिज्ञानदर्शनं नाम काव्यस्य दशमः सर्गः ।

सौमित्रिरित्यादि । इत्येवं लक्ष्मणस्य वचनं निशम्य श्रुत्वा रामः प्रतिदिशं दिशि दिशि रक्षणार्थं प्लवङ्गान् वानरान् आदिशन् जृम्भावान् सन् निद्रान् निद्रां गच्छन् शिशयिषया शयितुमिच्छया प्रवालशय्याम् अध्यष्ठात् अधिष्ठितवान् भुजयुगलं विभुज्य भुग्नं कृत्वा एकं शिरःस्थाने निवेश्य अपरञ्च उरःस्थाने शिरसः उपरि वा निवेश्य इत्यर्थः । विभुज्येति पाठे, क्रोडोपरि वक्रीकृत्येत्यर्थः । निद्रानिति निपूर्वात् द्राकुत्सायां इत्यस्मात् शतृ: अध्यष्ठादिति अधिपूर्वात्तिष्ठतेः लुङि सिः भूस्थेत्यादिना सेर्लुक् गीक इत्यादिना षत्वं अधिशीङ्स्थेत्यादिना आधारस्य कर्मत्वं प्रतिदिशमिति वीप्सायामव्ययीभावः शरदिप्राडय इत्यादिना अप्रत्ययः ॥ ७४ ॥ भ०

इति सर्वव्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविर-
चितायां मुग्धबोधिन्यां भट्टिटीकायां प्रसन्नकाण्डे काव्या-
लङ्कारदर्शनं नाम प्रथमः परिच्छेदः काव्यस्य
सीताभिज्ञानदर्शनं नाम दशमः सर्गः ।

---

माधुर्य्यमपि काव्यस्य गुण उक्तः । तथा चोक्तं, श्राव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यत इति । तत्प्रदर्शनार्थं लङ्कागतप्रभातवर्णनमधिकृत्याह ।

अथेत्यादि । अथानन्तरं कलानां निधौ चन्द्रमसि अस्तं पर्वतम् आसेदुषि गतवति । यथा कश्चित् पुण्यक्षयेण अवमानम् आसेदुषि भाषायां सद्वसेति लिटः

**दूरं समारुह्य दिवः पतन्तं भृगोरिवेन्दुं विहितोपकारम् ।**
**बद्धानुरागोऽनुपपात तूर्णं तारागणः संभृतशुभ्रकीर्त्तिः ॥ २ ॥**

कुमुदाढ्यैः मन्दकान्त्यतिशयगमने पूर्वलिङ्गं दर्शयति । शिपकल्पैः पद्मैः प्रहासः विकाशः मितकल्पैः कुमुदैः विषादः सङ्कोचः समालम्बि समालम्बितः ॥ १ ॥ अ० म०

अथेत्यादि । अथ गुणाः प्रदर्श्यन्ते यतः, अलङ्कृतमपि श्राव्यं न काव्यं गुणवर्जितम् । गुणयोगस्तयोर्मुख्यो गुणालङ्कारयोगयोः । वामनादिभिर्दशगुणा मन्यन्ते ते तु, श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधय इति । अन्ये तु, और्जित्यमर्थसौक्ष्म्यञ्च गाम्भीर्यमर्थविस्तरः । संक्षेपः समितत्वञ्च भाविकत्वं गतिस्तथा । रीतिर्व्यक्तिस्तथा प्रौढिः प्रेयानथ सुशब्दता इति । एतानपि अधिकान् गुणानाहुः । काव्यप्रकाशकृता तु, माधुर्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दश इत्युक्तं तस्मात्ते माधुर्यप्रकाशक एवायं सर्ग आरभ्यते । तथा चोक्तम् कण्ठाभरणे, शृङ्गार एव मधुरः स च प्रह्लादनो रसः । तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति इति । अत्र सर्गे प्रसादगुणोऽपि द्रष्टव्यः । तत्र लङ्कागतप्रभातवर्णनं प्रस्तूयते । अथानन्तरं यथा पण्याङ्गनया कश्चित् अस्तं याति तथा कलावान् निशि चन्द्रे मन्दकान्तौ मन्दप्रभे अस्तं पर्वतस्य आसेदुषि प्राप्ते सति शिपकल्पैः पद्मैः प्रहासो विकाशः पक्षे प्रकृष्टहासः मितकल्पैः कुमुदैः विषादः सङ्कोचः पक्षे विषण्णता समालम्बि अथास्तम् आसेदुषि इति श्लेषोऽत्र शब्दगुणः । तथा चोक्तं, गुणः सुश्लिष्टपदता श्लेष इत्युपदिश्यते । इति प्रसादोऽप्यत्रास्ति, प्रसिद्धार्थपदत्वं यत् प्रसादोऽसौ निगद्यते । इति लक्षणम् । पद्मैः प्रहास इत्यत्र माधुर्यं गुणो या पृथक्पदता काव्ये तन्माधुर्यमुदाहृतमिति व्याख्यानात् । आसेदुषि इत्यत्र सुशब्दतापि व्युत्पत्तिः सुप्तिङां या तु प्रोच्यते सा सुशब्दतेति वचनात् । पद्मैः प्रहास इत्यत्र समाधिरप्यस्ति । समाधिः सोऽन्यधर्माणां यदन्यत्रापि रोपणम् । प्रहासश्चेतनाधर्मः स चान्यत्राधिरोपित इति । एवमन्यत्रापि गुणनिरूपणं कर्त्तव्यम् ॥ १ ॥ भ०

दूरमित्यादि । दूरम् आकाशस्य भागम् आरुह्य पश्चात् तत एव आकाशात् भृगोरिव प्रपातादिव पतन्तम् इन्दुं तारापतिम् अनु पश्चात् तारागणः विहितोपकारं तदुदयेन तारागणाप्यायनात् चेत् बद्धानुरागः अस्तगमनकाले अनुगतरक्तभावः संभृता विपुलीकृता शुभ्रा निर्मला कीर्त्तिः येन स तारागणः पपात ।

**क्व ते कटाक्षाः क्व विलासवन्ति प्रोक्तानि वा तानि ममेति मत्वा।**
**लङ्काङ्गनानामवबोधकाले तुलामनारुह्य गतोऽस्तमिन्दुः॥ ३॥**

---

यथा कश्चिच्चित् स्वामिनि भग्नेः पतति पश्चात् स्वामिभक्त्या भृत्यलोको बद्धानुरागः संभृतशुभ्रकीर्त्तिः पतति तद्वत् इति॥ २॥ ज० म०

दूरमित्यादि। दिव आकाशस्य दूरं भागम् आरुह्य पश्चात् तत एव सकाशात् भग्नेः प्रपातात्प्रपर्वतोच्चभागादिव पतन्तम् अधस्तात् गच्छन्तम् इन्दुं विहितोपकारं तदुदये तारागणस्याप्याश्रगमात् तारापतित्वात् च तारागणः तूर्णम् अनुपपात अनुजगाम तम् अनु लक्षीकृत्य पपातेति वा। कीदृशः बद्धानुरागः अस्तगमनकाले रक्तत्वात् सम्भृता उपचिता शुभ्रा निर्मला कीर्त्तिः येन अन्योऽपि भार्य्यागणो-ऽनुरक्तः सन् पतिम् अनुगच्छन् निर्मलकीर्त्तिः भवति। अत्रोदारत्वम् अर्थगुणः, आशयस्य च उत्कृष्टस्तदुदारत्वमिष्यत इति लक्षणात्। समलगुणोऽप्यत्र चन्द्रस्य अस्तगमने तारागणस्य सम्भवात्। तथा चोक्तम्, अवैषम्यं क्रमतया समत्वमभि-धीयते इति। प्रसादोऽप्यर्थगुणोऽत्र लोकप्रसिद्धार्थत्वात्। तदुक्तं, यत् तु प्राकस्यमर्थस्य प्रसादः सोऽभिधीयते इति॥ २॥ भ०

क्व ते इत्यादि। ये कटाक्षाः सविलासाः तिर्य्यग्दृष्टयः यानि च प्रोक्तानि जल्पितानि विलासवन्ति तदुभयं क्व मम विद्यते लङ्काङ्गनानान्तु मुखेन्दवः सकटाक्षाः सविलासाः जल्पिताश्च। अतो यावन्न विबुध्यन्ते तावदपक्रमणं युक्तमिति मत्वा निरूप्य तुलाममारुह्य समानतामलब्ध्वा निःसंशयो वा भूत्वा तत्प्रबोधकाले लङ्काङ्गनानामेवं गतोऽस्तम् इन्दुः॥ ३॥ ज० म०

क्व ते इत्यादि। मम ते प्रसिद्धाः विलासवन्तः कटाक्षाः क्व तानि वा विलासवन्ति, प्रकृष्टजल्पितानि क्व न सन्त्येव इत्यर्थः लङ्कास्त्रीणां तु लङ्कामुखेन्दुषु तदुभयमप्यस्ति। अतएव यावत् उदयो न भवति तावत् अपक्रमणं युक्तमिति मत्वा तुलां तत् साम्यम् अनारुह्य अप्राप्य लङ्कास्त्रीणां प्रबोधसमये जागरण-काले इन्दुः अस्तं गतः विलासवन्ति इति नपुंसकविशेषणत्वेऽपि सामान्यत्वात् नपुंसकत्वं नपुंसकानपुंसकयोः नपुंसकमेवेति श्रीपतिसूत्रेण वा नपुंसकत्वम्। तात्कालिकविशेषस्तु विलासोऽङ्गक्रियोक्तिषु। प्रसिद्धानुभूतार्थविषयतच्छब्दो यत् शब्दं नापेक्षत इति काव्यप्रकाशः। अत्रौजित्यं गुणः औजित्यं गाढबन्धनेति यत् लक्षणात् माधुर्य्यमपि। अत्र पूर्ववत् सुकुमारतापि, अनिष्ठुराक्षरप्रायं सुकुमार-मिहेष्यते इति न्यायात् उदात्ततापि विलासवन्ति इति श्लाघ्यविशेषणात्।

**मानेन तल्पेष्वशयथामुखीना मिथ्याप्रसुप्तैर्गमितत्रियामाः।**
**स्त्रीभिर्निशातिक्रमविह्वलाभिर्दृष्टेऽपि दोषे पतयोऽनुनीताः॥४॥**
**ईर्ष्याविरुग्णाः स्थिरबद्धमूला निरस्तनिःशेषशुभप्रतानाः।**
**आप्यायिता नेत्रजलप्रसेकैः प्रेमद्रुमाः संरुरुहुः प्रियाणाम्॥५॥**

तदुक्तं, शब्दैः विशेषणैर्योगो यस्तु सामर्थ्यादुदात्तता इति। गाम्भीर्य्यमप्यर्थगुणोऽत्र विलासादीनां शास्त्रादेव ज्ञानात्। तथा चोक्तं, शास्त्रार्थं मत्यपेक्षत्वं गाम्भीर्य्यमभिधीयत इति॥ ३॥ म०

मानेनेत्यादि। पतयस्तल्पेषु शयनीयेषु मानेन अशयथामुखीनाः पराङ्मुखाः यथामुखसम्मुखस्य दर्शनं मुखपराङ्मुखत्वात प्रतिविम्बाश्रयवस्त्वेषु योषितां प्रतिविम्बमिव मनो न प्रमादी भवति इत्येवं मिथ्याप्रसुप्तैः अलीकनिद्राभिः गमितत्रियामाः अतिवाहितप्रथमादिप्रहराः दृष्टेऽपि दोषे गोत्रस्खलितादौ स्त्रीभिः अनुनीता यतो निशातिक्रमात् पर्य्यवसानात् विक्लवा विह्वलास्ताः॥ ४॥ ज० म०

मानेनेत्यादि। स्त्रीभिः दृष्टेऽपि दोषे गोत्रस्खलनादौ पत्यनुनयेन स्वस्या मनस्विलादिदोषे ज्ञातेऽपि वा पतयोऽनुनीताः अनुनयकरणे हेतुमाह। कीदृशीभिः निशाया अतिक्रमात् पर्य्यवसानात् विह्वलाभिः कीदृशाः पतयः चाटूक्तिपादपतनेनापि प्रियाम् अप्रसन्नां बुद्ध्वा मानेन तल्पेषु शय्यासु अशयथामुखीनाः परावृत्तमुखाः किमियं करिष्यति इति ज्ञानम् मिथ्याप्रसुप्तैः अलीकनिद्राभिर्गमितरात्रयः अतिवाहितप्रहरत्रया इत्यन्ये अशयथामुखीना इति मुखस्यानतिक्रमः प्रियाभिमुखस्थितिलक्षणो यथामुखं ततः स्वार्थे ईनः ततो नञ्‌समासः विद्यासागरस्तु यथामुखं सम्मुखं दृश्यते अस्मिन्निति ईनः पश्चात् नञ्‌सम्बन्धः यथा शब्दोऽभिमुखे वर्त्तते अव्ययानामनेकार्थत्वादित्याह। खमनेऽपि तथा विकारसङ्ख्यादावादिशब्दात् अन्ये तु यथासुखमिति साहश्यनिपातनात् चिन्त्यमित्याहुः। अत्र कान्तिः अर्थगुणः दोषे दृष्टेऽपि पत्यनुनयात्। तथा चोक्तं, कान्तिर्दीप्तरसत्वं स्यादिति समाधिरपि अत्रार्थगुणः मिथ्याप्रसुप्तत्वात्। व्याजावलम्बनं यत्तु स समाधिरिति स्मृत इति॥ ४॥ म०

ईर्ष्याविरुग्णा इत्यादि। प्रियाणां प्रेमद्रुमाः प्रेमाणि द्रुमा इव स्थिरं निश्चलं बद्धमूलम् उत्पत्तिकारणं येषां ते ईर्ष्याविरुग्णाः। अतएव निरस्ताः निःशेषाः शुभा

ततः समाशङ्कितविप्रयोगः पुनर्नवीभूतरसोऽवितृष्णः।
स्मरस्य सन्तं पुनरुक्तभावं नावर्त्तमानस्य विवेद लोकः॥ ६॥
वृत्तौ प्रकाशं हृदये कृतायां सुखेन सर्वेन्द्रियसम्भवेन।
सङ्कोचमेवासहमानमस्थादशक्तवद्दञ्चितमानि चक्षुः॥ ७॥

एव हसितजल्पितादयः प्रतानाः शाखा येषां ते प्रसादनानन्तरं नेत्रजलप्रसेकैः आप्यायिताः संरूढ़ाः पुनर्नवीभूताः स्थिरबद्धमूलत्वात्॥ ५॥ ज० म०

ईर्ष्येत्यादि। प्रियाणां प्रेयसां प्रेयसीनां वा एकशेषादुभयेषां प्रेमाणि द्रुमा इव संरूढ़ाः पुनः पल्लविताः यतो नेत्रजलप्रसेकैः आप्यायिताः प्रीणिताः स्थिरबद्धमूलाः स्थिरं निश्चलं बद्धं सम्बद्धं मूलम् उत्पत्तिकारणं येषाम्। कीदृशाः पूर्वमीर्ष्यया परोत्कर्षाक्षमया विरुग्णाः भग्ना अतएव निरस्ता निःशेषाः शुभा एव हसितजल्पितादय एव प्रतानाः शाखास्तेषां विस्तारो वा येषां अन्येऽपि स्थिरबद्धमूला वृक्षा भग्ना अपि हतप्रताना अपि जलसेकैः आप्यायिताः सन्तः संरोहन्ति इति भावः। प्रौढ़िरत्रार्थगुणः, विवक्षितार्थनिर्वाहः काव्ये प्रौढ़िरिति स्मृता। प्रेम्णो द्रुमत्वनिर्वाहात्॥ ५॥ म०

तत इत्यादि। प्रेमद्रुमरोहणानन्तरं लोकः समाशङ्कितविप्रयोगो विप्रयोगोऽस्माकम् आसन्नवर्त्तीति पुनर्नवीभूतरसः अभिनवीभूतसुरतेच्छः स्मरस्य कामस्य आवर्त्तमानस्य पुनःपुनः प्रवर्त्तनात् अवितृष्णः साभिलाषः सन्तमपि विद्यमानमपि पुनरुक्तभावं पौनःपुन्यं न विवेद आशङ्कितविप्रयोगत्वाद् पूर्वमिव ज्ञातवान् इत्यर्थः॥ ६॥ ज० म०

तत इत्यादि। प्रेमसंरोहाद्धेतोरनन्तरं वा आवर्त्तमानस्य पुनः पुनः प्रवर्त्तमानस्य स्मरस्य कन्दर्पस्य पुनरुक्तभावं पौनःपुन्यं सन्तं विद्यमानमपि लोको न विवेद न ज्ञातवान् यतो रात्रिगमनेन आशङ्कितविरहः अतएव पुनर्नवीभूतसुरतेच्छः अत एव अवितृष्णः तृष्णाविगमरहितः पुनः तृष्णोदयात् अधितृष्ण इति पाठे अधिकतृष्ण इत्यर्थः। अत्रापि कान्तिगुणो दीप्तरसत्वात् प्रेयोऽप्यस्ति प्रेयस्त्वर्थेषु अभीष्टता अभीष्टस्य कामस्य प्रतिपादनात्॥ ६॥ म०

वृत्तावित्यादि। सुरतकाले श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानाम् इन्द्रियाणां शब्दस्पर्शरूपरसगन्धग्रहणात् सर्वेन्द्रियसम्भवं सुखम् अथवा सर्वमिन्द्रियं यत्रेति सर्वेन्द्रियः कामः तत्सम्भवं सुखं सर्वेन्द्रियसम्भवं सुखं तथा हि आलिङ्गनचुम्बनदर्शनच्छेदनेषु

**पीने भटस्योरसि वीक्ष्य भुग्नांस्तनुत्वचः पाणिरुहान् सुमध्या ।**
**इच्छाविभङ्गाकुलमानसत्वाद्भर्त्रे नखेभ्यश्च चिरं जुजूरे ॥ ८ ॥**

पुरुषोपसृष्टेषु तव प्रयुज्यमाने कार्ये सुखमुत्पद्यते तेन सुखेन हृदये चेतसि प्रकाशं स्पष्टं वृत्तौ कृतायां चक्षुर्वञ्चितम् इवात्मानं मन्यमानम् आत्ममाने खश्च इति णिनिः सङ्कोचमेव निमीलनमेवास्थात् अनुष्ठितवत् असहमानम् इति सर्वेन्द्रियसम्भवस्य सुखस्य हृदये वृत्तिं सोढुमपारयदित्यर्थः। अशक्तवत् यथा कश्चित् असमर्थोऽन्यसम्भवां सम्पदं सोढुम् असहमानः सङ्कोचमनुतिष्ठति ॥ ७ ॥ ज० म०

वृत्तावित्यादि। सुखेन हृदये चेतसि प्रकाशं स्पष्टं वृत्तौ स्थितौ कृतायां सत्यां चक्षुः कर्तृ सङ्कोचं निमीलनमपि असहमानमेवास्थात् कुचसङ्कोचे इत्यस्मात् घञ् यतो वञ्चितमानि सङ्कोचे सति चणमपि रूपादर्शनेन आत्मानं वञ्चितमिव मन्यते अशक्तवत् यथा असमर्थं चक्षुर्निष्पन्दं भवति तथा प्रियाङ्गे निष्पन्दम् इत्यर्थः। यद्वा सुखस्य हृदि वृत्तौ सत्यां हृदयाप्रवेशेन वञ्चितमिव आत्मानं मत्वा चक्षुःसङ्कोचं मुद्रितमेव अस्थात् असहमानं हृदयस्य सुखं सोढुम् असमर्थमिव अशक्तवत् यथा कश्चित् असमर्थोऽन्यसम्पदम् असहमानः सङ्कोचित एव तद्वत् यद्वा अशक्तवत् यथा असमर्थं चक्षुरुन्मीलनाक्षमं सत् मुद्रितमिव तिष्ठति तद्वत् सुरतान्ते नेत्रनिमीलनस्योत्प्रेक्षेयं कुचकौटिल्ये खेलने इत्यस्मात् पचादित्वात् अनि कुटादित्वाद् गुणाभावः सुखेन कौदृशेन सर्वेन्द्रियसम्भवेन रतिकाले स्वस्वविषयसम्बन्धैः सर्वेन्द्रियैः युगपदुत्पादितेन यद्वा सर्वाणि इन्द्रियाणि यस्य स सर्वेन्द्रियः कायः तेन उत्पादितेन प्रौढ़िरत्र गुणः विशिष्टा भणितिर्या स्यात् प्रौढिं तां कवयो विदुः। उचितनिमीलनस्य असहनजन्यत्वात् पूर्ववत् माधुर्यमपि शब्दगुणोऽत्र पृथक्पदत्वात् ॥ ७ ॥ भ०

पीने इत्यादि। काचित् सुमध्या सुमध्यमा नखैः व्याप्यमाना अहमप्यस्य क्षतं विधास्यामीति भटस्योरसि पीने कठिने भुग्नान् कुञ्चितान् भग्नान् इति पाठान्तरं पाणिरुहान् नखान् वीक्ष्य भर्त्रे नखेभ्यश्च चिरं जुजूरे क्रुध्यति स्म कथमस्य वक्षः कठिनं मम च नखास्तनुत्वचो न कठिना इति पूरीज् रीहिंसावयोहान्योरित्यस्य आत्मनेपदिनो रूपं क्रुधद्रुहेत्यादिना सम्प्रदानसंज्ञा कस्मात् जुजूरे इत्याह इच्छाविभङ्गाकुलमानसत्वात् चिकीर्षिताकरणेन आकुलचित्तत्वात् ॥ ८ ॥ ज० म०

पीने इत्यादि। कापि सुमध्या दयितेन नखैः खण्ड्यमाना अहमप्यस्य क्षतं विधास्यामीति मत्वा भटस्य योधस्य पीने कठिने उरसि दत्तान् पाणिरुहान्

**स्रस्ताङ्गचेष्टो विनिमीलिताक्षः स्वेदाम्बुरोमोद्गमगम्यजीवः।**
**अशेषनष्टप्रतिभापटुत्वो गाढोपगूढो दयितैर्जनोऽभूत्॥ ९॥**
**तमः प्रसुप्तं मरणं सुखं नु मूर्च्छा नु माया नु मनोभवस्य।**
**किं तत्कथं वेत्युपलब्धसंज्ञा विकल्पयन्तोऽपि न संप्रतीयुः॥१०॥**

नखान् मृदुत्वकात् भग्नान् कुण्ठितान् भुग्नान् इति पाठे कुटिलान् वीक्ष्य दृष्ट्वा चिकीर्षाविभङ्गेन व्याकुलचित्ततया भर्त्रे नखेभ्यश्च चिरं चिरकालं व्याप्य जजूरे क्रुध्यति स्म ज्वजूरीर्षोज्यानौ बधे अनेकार्थत्वात् कोपेऽपि यस्मै दित्से त्यादिना सम्प्रदानत्वं आमन्त्र्यपेक्षत्वं गाम्भीर्य्यमत्र गुणः कामशास्त्रे मानावसाने स्थानविशेषे नखक्षतदानस्य उक्तत्वात्॥ ८॥ भ०

स्रस्ताङ्गचेष्ट इत्यादि। दयितैर्गाढोपगूढः आलिङ्गितः सन् स्त्रीजनः अशेषनष्टप्रतिभापटुत्वोऽभूत् अशेषं नष्टं प्रतिभायाः बुद्धेः पटुत्वं यस्य इति एवञ्च सत्वा स्रस्ताङ्गचेष्टोऽपगतकायव्यापारः विनिमीलिताक्षः सुखानुभवात् निमीलितलोचनः मृतस्तर्हि इत्याह स्वेदाम्बुरोमोद्गमगम्यजीवः स्वेदाम्बुरोमोद्गमाभ्यां लिङ्गाभ्यां गम्यमानसंज्ञः॥ ९॥ ज० म०

स्रस्तेत्यादि। स्त्रीजनो दयितैः गाढालिङ्गितः सन् अशेषनष्टप्रतिभापटुत्वोऽभूत् अशेषं समस्तम् एव नष्टं प्रतिभायाः बुद्धेः पटुत्वं यस्य अतएव स्रस्ताङ्गचेष्टः अपहृतदेहव्यापारः सुखानुभवात् विनिमीलितलोचनः स्वेदजलरोमाञ्चाभ्यां गम्यमानजीवः जनशब्दोऽत्र स्त्रीजातिवाचकः तेन दयितैरित्यत्र बहुत्वमदुष्टं गाढालिङ्गनकारित्वेन गौरवे बहुत्वं वा कान्तिरत्र गुणो दीप्तरसत्वात्॥ ९॥ भ०

तम इत्यादि। कामुका अपि सुरतावस्थाया उत्तरकालम् उपलब्धसंज्ञा विकल्पयन्ति तमो नु किमन्धकारं प्रसुप्तं नु किं प्रकर्षेण सुप्तं मरणं नु मरणावस्था नु सुखं नु मूर्च्छा नु मनोभवस्य वा मायेति किं तद्भवति कथं वा केन प्रकारेण तत् स्यात् इत्येवं विकल्पयन्तोऽपि न सम्प्रतीयुः न परमार्थं ज्ञातवन्त इत्यर्थः॥ १०॥ ज० म०

तम इत्यादि। कामुका अपि सुरतावस्थाया उत्तरकालमुपलब्धचैतन्याः सन्तो विकल्पयन्तीत्याह किं तमः प्रागन्धकारं हस्तं वस्त्वन्तरानुपलम्भात् प्रसुप्तं वा प्रसुप्तिर्यत्र स्वप्नोऽपि न दृश्यते मरणं वा अचेष्टत्वात् सुखं वा अनुभूयमानत्वात् मूर्च्छा मोहो वा अव्यक्तावस्थारूपत्वान्मनोभवस्य कामस्य माया वा किमेतदभवत् केन प्रकारेण वेति एवं

वक्षःस्तनाभ्यां मुखमाननेन गात्राणि गात्रैर्घटयन्नमन्दम् ।
स्मरातुरो नैव तुतोष लोकः पर्य्याप्तता प्रेम्णि कुतो विरुद्धा ॥११॥
स्रस्ताङ्गयष्टिः परिरभ्यमाणा संदृश्यमानाप्युपसंहृताक्षी ।
अनूढमाना शयने नवोढा परोपकारैकरसेव तस्थौ ॥ १२ ॥
आलिङ्गितायाः सहसा त्रपावांस्त्रासाभिलाषानुगतो रतादौ ।
विश्वासितायां रमणेन वध्वा विमर्दरम्यो मदनो बभूव ॥ १३ ॥

विकल्पयन्नोऽपि न सम्प्रतीयुः परमार्थं न निश्चितवन्तः पूर्ववदत्र माधुर्य्यं गुणः ॥ १० ॥ भ०

वक्ष इत्यादि। वक्षोमुखगात्राणि स्वानि स्तनादिभिः स्त्रीसम्बन्धिभिः घटयन् संश्लेषयन् अमन्दं दृढं कर्मोक्तं स्यादविकृत्य स्मरातुरो लोको नैव तुतोष तुष्टिं न जगाम यतः पर्य्याप्तता प्रेम्णि कुतो विरुद्धा नैव तस्याविरुद्धत्वात् ॥ ११ ॥ ज० म०

वक्ष इत्यादि। स्मरातुरो लोकः कामार्त्तो जनः स्वकीयं हृदयादि स्त्रीस्तनादिना अमन्दं दृढं घटयन् संश्लेषयन् नैव तुतोष न तृप्तिं जगाम कुत इत्याह प्रेम्णि पर्य्याप्तता इच्छाविच्छेदः कुतो भवेत् यतः सा विरुद्धा कान्तिरत्रापि गुणः ॥ ११ ॥ भ०

स्रस्ताङ्गयष्टिरित्यादि। काचिन्नवोढा परिरभ्यमाणा पत्या आलिङ्ग्यमाना स्रस्ताङ्गयष्टिः न प्रतीपमालिङ्गति संदृश्यमानापि मुखमुन्नमय्य उपसंहृताक्षी निमीलितलोचना न प्रतीपं पश्यति मानं नैवावरतीति अनूढमानापि असंहृतमानापि एवंविधापि सती परोपकारैकरसेव तस्थौ भर्त्तुरुपकारैकाभिप्रायैव अवस्थिता नात्मोपकाराय ॥ १२ ॥ ज० म०

स्रस्ताङ्गयष्टिरित्यादि। काचिन्नवोढा शयने शय्यायां परोपकारैकरसा प्रत्युपकारभावाभिप्रायैव तस्थौ न तु स्वोपकाराय यतः परिरभ्यमाणा दयितेनालिङ्ग्यमाना स्रस्ताङ्गयष्टिर्न प्रत्यालिङ्गनं करोति नापि प्रतीपा मुखमुन्नमय्य संदृश्यमानापि उपसंहृताक्षी निमीलितनेत्रा न पश्यति मानेनैवं करोतीति चेदाह अनूढमाना लज्जयैव अधृतमाना तथा करोतीत्यर्थः। पूर्ववन्माधुर्य्यादिगुणोऽत्र बोध्यः एकमयेऽपि ॥ १२ ॥ भ०

आलिङ्गिताया इत्यादि। कस्याश्चित् वध्वा रतात् प्राक् रमणेन सहसा तत्क्षणं आलिङ्गितायास्त्रपावान्मदनो बभूव रतादौ रतारम्भे त्रासाभिलाषाभ्यामनुगतो

सामोन्मुखेनाच्छुरिता प्रियेण दत्तेऽथ काचित्पुलकेन भेदे।
अन्तःप्रकोपापगमाद्विलोला वशीकृता केवलविक्रमेण ॥ १४ ॥
गुरुर्दधाना परुषत्वमन्या कान्ताऽपि कान्तेन्दुकराभिमृष्टा।
प्रह्लादिता चन्द्रशिलेव तूर्णं क्षोभात् स्रवत् स्वेदजला बभूव ॥१५॥

बभूव विश्वासितायाः शनैर्विश्वासं कारितायाः विमर्दरम्यो बभूव त्रासाभावात् ॥ १२ ॥ ज० म०

आलिङ्गितायाा इत्यादि। रतादौ रतात् प्राक् रमणेन कान्तेन सहसा अकस्मादालिङ्गितायाः कस्याश्चित् बध्वा मदनस्त्रपावान् लज्जावान् त्रासेनाभिलाषेण चानुगतश्च बभूव किं वा आलिङ्गनेन सहसा त्रपावान् रतादौ सुरतारम्भे त्रासाभिलाषाभ्यामनुगतः पश्चात् शनैः शनैर्विश्वासितायाः विश्वासं प्रापितायाः तस्या एव मदनो विमर्दन रम्यो बभूव त्रासाभावात् ॥ १३ ॥ भ०

सामोन्मुखेनेत्यादि। अथ काचित्कोपाध्मानवती प्रियेण सामोन्मुखेन सामपरेण प्रसादयता आच्छुरिताख्येन नखकर्म्मणा संस्पृष्टा सती पुलकेन रोमाञ्चेन भेदे उद्गमे दत्ते सति अन्तः प्रकोपस्यापगमात् विलोला विलोलबुद्धिः केवलविक्रमेण हठात् ग्रहणेनैव वशीकृतोपभुक्ते त्यर्थः ॥ १४ ॥ ज० म०

सामोन्मुखेनेत्यादि। काचिन्मानिनी सामोन्मुखेन प्रसादनोद्यतेन प्रियेणाच्छुरिता आच्छुरिताख्येन नखकर्मणा स्पृष्टा अथानन्तरं पुलकेन रोमाञ्चेन भेदे उद्गमे दत्ते सति अन्तःप्रकोपस्यापगमात् विलोला चञ्चलबुद्धिः सा सुरते साभिलाषा वा केवलविक्रमेण हठाद् ग्रहणमात्रेण वशीकृता उपभुक्ता भावं ज्ञात्वा प्रसादनानन्तरमकृतप्रसादनान्तरेण प्रियेण यद्गण्डस्थलान्तरे अङ्गुष्ठाग्रनखेन ताड्यते तदाच्छुरितमुच्यते ॥ १४ ॥ भ०

गुरुरित्यादि। अन्यापि काचित् स्त्री कान्ता कमनीयरूपा गुरुः धीरा वोतौ-गुणवचनादिति वा ङीप् न भवति दधाना परुषत्वं नैष्ठुर्यं कान्तेन भर्त्रा इन्दुनेव कराभिमृष्टा सती प्रह्लादिता सुखिता क्षोभात् चेतसोविकारात् तूर्णं स्रवत्स्वेदजला बभूव चन्द्रशिलेव चन्द्रमणिरिव वा गरीयसी कान्ता परुषत्वं काठिन्यं दधाना इन्दुना कराभिमृष्टा प्रह्लादिता सुखितेव क्षोभात् स्वप्रकृतिविकारात् स्रवज्जला भवति ॥ १५ ॥ ज० म०

शशाङ्कनाथापगमेन धूम्रां मूर्च्छापरीतामिव निर्विवेकाम्।
ततः सखीव प्रथितानुरागा प्राबोधयत् द्यां मधुरारुणश्रीः ॥१६॥
अवीततृष्णोऽथ परस्परेण क्षणादिवायातनिशावसानः।
दुःखेन लोकः परवानिवागात्समुत्सुकः स्वप्ननिकेतनेभ्यः ॥१७॥

गुरुरित्यादि। अन्या कान्ता परुषत्वं नैष्ठुर्यं दधानापि कान्तेन इन्दुनेव कान्तस्य चन्द्रस्य वा करेण हस्तेन किरणेन चाभिमृष्टा सती ततः प्रह्लादिता आनन्दिता च सती क्षोभाच्चेतसो विकारात् तूर्णं स्रवत् स्वेदजला बभूव चन्द्रशिलेव चन्द्रकान्तमणिरिव कीदृशी गुरुगौरवान्विता चन्द्रशिलापि हि गुरुत्वाद्गुणयुक्ता कान्ता मनोहरा परुषत्वं काठिन्यं दधानापि कान्तेन कमनीयेन इन्दुना कराभिमृष्टा प्रह्लादिता प्रकाशिता च सती क्षोभात् स्वप्रकृतिविपर्ययात् स्रवज्जला भवति गुर्वीरिति गुणाहोत इति पक्षे ईप्प्रत्ययाभावः ॥ १५ ॥ भ०

शशाङ्केत्यादि। ततोऽनन्तरं यथा काचित् स्त्री नाथस्य भर्त्तुरपगमेन वियोगेन धूम्रा मलिना मूर्च्छापरीता निश्चेतना अतएव निर्विवेका विवेक्तुमशक्ता सती सख्या प्रकाशितस्नेहया प्रबोध्यते तद्वत् द्यामाकाशं शशाङ्कनाथस्यापगमेन अस्तगमनेन धूम्रां धूसरतां गतां निर्विवेकाम् अविद्यमानविशेषाम अरुणश्रीः आदित्यलक्ष्मीरिति मधुराभिनवा प्रथितानुरागा प्राबोधयत् प्रकाशितवती ॥ १६ ॥ ज० म०

शशाङ्केत्यादि। ततोऽनन्तरम् अरुणस्य सूर्य्यस्य तत्सारथेर्वा श्रीर्द्यामाकाशं प्राबोधयत् प्रकाशितवती सखीव यथा सखी काचित् स्त्रियं प्रबोधयति कीदृशीं द्यां नाथस्य चन्द्रस्यापगमेन धूम्रां धूसरां स्त्री च नाथस्य भर्त्तुरपगमनेन विरहेण धूम्रा मलिना भवति मूर्च्छापरीतामिव अचेतनामिव सापि स्त्री मोहपरिगता भवति निर्विवेकां न विद्यते विवेको यत्र तादृशीं सापि स्त्री सदसद्विवेकशून्या सख्या प्रबोध्यते अरुणश्री कीदृशी प्रथितानुरागा प्रकाशितरक्तभावा मधुरा प्रिया अभिनवत्वात् सखी च प्रकाशितस्नेहा मधुरा प्रियभाषिणी च भवति ॥ १६ ॥ भ०

अवीत्यादि। अथानन्तरं लोकः परस्परेण अन्योऽन्येन दयितो दयितया दयितापि दयितेन अवीततृष्णः अनपगतसम्भोगाभिलाषः अतएव क्षणादिव द्रुतमिवायातं निशावसानं यस्य समुत्सुकः उत्कण्ठितः परवानिव पराधीन इव स्वप्ननिकेतनेभ्यः वासगृहेभ्यो दुःखेन अगात् निर्गतवान् ॥ १७ ॥ ज० म०

अर्द्धोत्थितालिङ्गितसन्निमग्नो रुद्धः पुनर्यान् गमनेऽनभीप्सुः।
व्याजेन निर्याय पुनर्निवृत्तस्त्यक्तान्यकार्य्यः स्थित एव कश्चित् ॥१८
तालेन सम्पादितसाम्यशोभं शुभावधानं स्वरबद्धरागम्।
पदैर्गतार्थं नृपमन्दिरेषु प्रातर्जगुर्मङ्गलवत्तरुण्यः ॥ १९ ॥

अवीतेत्यादि। अथानन्तरं लोकः समुत्सुकः समुत्कण्ठितोऽपि परवान् पराधीन इव कार्य्यगौरवात् स्वप्रनिकेतनेभ्यः शयनगृहेभ्यो दुःखेन अगात् निर्गतवान् यतः परस्परेण अन्योऽन्येन दयितो दयितया दयिता दयितेन अवीततृष्णः अविगतसम्भोगाभिलाषः अतएव क्षणादिव द्रुतमिवागतं निशावसानं यस्य स तथा सुखेन कालबहुलाज्ञानात् ॥ १७ ॥ भ०

अर्द्धोत्थितेत्यादि। शयनात् अर्द्धमुत्थितं यस्येत्यर्द्धोत्थितः आहिताग्न्यादिषु द्रष्टव्यः शयनस्य वा अर्द्धादुत्थित इति योज्यं स चालिङ्गितो दयितया सन्निमग्नः शयने सुप्तः पुनर्यान्निर्गच्छन् रुद्धो विधृतः गमने अनभीप्सुरपि निर्य्याय निमित्तव्याजेन पुनर्निवृत्तः प्रविष्टस्त्यक्तान्यकार्य्यः स्थित एव कश्चित् कामी ॥ १८ ॥ ज० म०

अर्द्धोत्थितेत्यादि। कश्चित् कामुकः शयनादर्द्धोत्थितो दयितया आलिङ्गितः सन् पुनः सन्निमग्नः सुप्तः पुनरपि यान् गन्तुमुद्यतः सन् दयितया रुद्धो वारितः अतएव गमनेऽनभीप्सुरिच्छारहितोऽपि गुर्वादिभयान्निर्याय निर्गत्य व्याजेन रोगादिच्छलेन पुनर्निवृत्तः सन् कार्य्यान्तरं त्यक्त्वा स्थित एव शयनगृहे इत्यर्थात् अर्द्धोत्थित इति शयनादर्द्धमुत्थितं यस्येत्याहिताग्न्यादित्वात् क्तान्तस्य विभाषया परनिपात इति परः स्वमते नियमानिर्देशादविरोध एव यद्वा अर्द्धेनोत्थित इति विग्रहः। शयनस्यार्द्धादुत्थित इति वा सन् आलिङ्गितः सन् सन्निमग्न इति क्रमसमासः ॥ १८ ॥ भ०

तालेनेत्यादि। नृपमन्दिरेषु रावणादिराजवेश्मसु प्रभातकाले तरुण्यो मङ्गलवत् मङ्गलोचितं जगुः गायन्ति स्म तालेन क्रियाकालमानेन सम्पादिता साम्यशोभा यत्र गायनक्रियायां शुभावधानं शोभनमवधानं चित्तैकाग्र्यं यत्र स्वरबद्धरागं षड्जादिभिः स्वरैर्बद्धो रागो यत्र पदैः सुप्तिङन्तैर्गतार्थं परिच्छिन्नार्थं निरर्थकपदरहितमित्यर्थः अनेन स्वरगतं पदगतं लयगतमवधानगतञ्चेति चतुर्विधं गीतमाख्यातम् ॥ १९ ॥ ज० म०

दुरुत्तरे पङ्क इवान्धकारे मग्नं जगत्सन्ततरश्मिरज्जुः ।
प्रनष्टमूर्त्तिप्रविभागमुद्यन् प्रत्युज्जहारेव ततो विवस्वान् ॥ २० ॥
पीतौष्ठरागाणि हृताञ्जनानि भास्वन्ति लोलैरलकैर्मुखानि ।
प्रातःकृतार्थानि यथा विरेजुस्तथा न पूर्वेद्युरलङ्कृतानि ॥ २१ ॥

---

तालेनेत्यादि। नृपमन्दिरेषु राजगृहेषु प्रातः प्रभातसमये तरुण्यो मङ्गलयुक्तं यथा स्यात् तथा जगुर्गायन्ति स्म तालेन चच्चत्पुटादिना सम्पादिता साम्यस्य लयस्य शोभा यत्र गानक्रियायां तालः कालक्रियामानं लयः साम्यमथास्त्रियामित्यमरः। साम्यं नृत्यगीतवाद्यानां समत्वमित्यर्थः शुभं शोभनमवधानं चित्तैकाग्रता यत्र स्वरैः षड्जादिभिर्वर्ङ्गोऽनुगतो रागो यत्र पदैर्विभक्त्यन्तैर्गतः परिच्छिन्नोऽर्थो यत्र निरर्थकरहितमित्यर्थः तेन स्वरगतं लयगतं पदगतमवधानगतञ्चेति चतुर्विधं गीतमुक्तं नृपशब्दो राजनि रूढ़ो रावणादिष्वपि प्रवर्त्तते ॥ १९ ॥ भ०

दुरुत्तर इत्यादि। अन्धकारे पङ्क इव दुरुत्तरे दुःखेन उत्तीर्य्यत इति मग्नं प्रविष्ट जगत् यतः प्रनष्टमूर्त्तिप्रविभागं प्रनष्टः स्थावरजङ्गममूर्त्तीनां प्रविभागो यस्मिन् तद्विवस्वानुद्यन् उद्गच्छन् सन्ततरश्मिरज्जुः प्रवितता रश्मयो मयूखा एव रज्जवो येन सः प्रत्युज्जहारेव उद्धृतवानिव तत इति अन्धकारात् ॥ २० ॥ ज० म०

दुरुत्तर इत्यादि। विवस्वान् सूर्य्य उद्यन् उद्गच्छन् दुःखेन उत्तरीतुं शक्ये पङ्के इवान्धकारे मग्नं जगत् ततोऽन्धकारात् प्रत्युज्जहारेव उद्धृतवानिव कीदृशो विवस्वान् सन्तता विस्तृता रश्मयो रज्जव इव येन तादृशः अन्योऽपि मग्नं वस्तु रज्जुभिरुद्धरति जगत् कीदृशं प्रनष्टोऽदृश्यः स्थावरजङ्गममूर्त्तीनां प्रविभागो यत्र तादृशमन्धकारमग्नत्वात् दुरुत्तर इति दुःखेनोत्तीर्य्यते यदिति ईषत् दुःसोरिति कर्म्मणि खल् उद्यन्निति इनः शतरि यिणोऽन्यणाविति यत्वम् ॥ २० ॥ भ०

पीतौष्ठरागाणीत्यादि। मुखानि वधूनामित्यर्थात् यथा प्रातः प्रभाते विरेजुः तथा पूर्वेद्युः पूर्वस्मिन्नहनि अलङ्कृतानि न रेजुः तेषामकृतार्थत्वात् तानि पुनः कृतार्थानि कृतकार्य्याणि यतो दयितैः पीतौष्ठरागाणि ओष्ठचुम्बनात् हृताञ्जनानि चक्षुषोरपि चुम्बनात् अपगतकज्जलानि लोलैराकुलैरलकैः कचग्रहाकर्षणात् भास्वन्ति दीप्तिमन्ति ॥ २१ ॥ ज० म०

पीतौष्ठेत्यादि। मुखानि वधूनामित्यर्थात् प्रातःकाले यथा विरेजुः शुशुभिरे

**प्रजागराताम्रविलोचनान्ता निरञ्जनालक्तकपत्त्रलेखाः।**
**तुल्या इवासन् परिखेदतन्व्यो वासच्युताः सेवितमन्मथाभिः ॥२२॥**

न तथा पूर्वैरु: पूर्वस्मिन् दिवसे अलङ्कृतानि कृतसाधनान्यपि विरेजु: अकृतार्थत्वेन ताहृगल्लासाभावात् प्रातस्तु कृतकार्य्याण्येव यतो दयितैः पीतौष्ठरागाणि ओष्ठ-चुम्बनात् पीत ओष्ठरागो यत्र धूताञ्जनानि आनन्दाश्रुपतनात् चक्षुषोः चुम्बनात् वा अपगतकज्जलानि कामशास्त्रे नेत्रचुम्बनमभिहितं तथा हि नयनयुगकपोलं दन्तवासौ मुखान्तः स्तनजघनललाटं चुम्बनस्थानमाहुरिति लोलैः करेण कचाकर्षणात् चञ्चलैः अलकैः चूर्णकुन्तलैः भास्वन्ति शोभमानानि ॥ २१ ॥ भ०

प्रजागरा इत्यादि। भर्तृभिः सहैकत्र यच्छयनं सहवासः तस्मात् च्युताः काश्चित् स्त्रियः सेवितमन्मथाभिः अनुष्ठितसुरताभिः तुल्या इवासन् यतः प्रजागराताम्रविलोचनान्ताः दयितागमनप्रतीक्षया यः प्रजागरस्तेन ताम्रनेत्रपर्य्यन्ताः नागात इति गृहीतप्रसाधनतया निरञ्जनालक्तकपत्रलेखाः यदि वा अन्यत्र शयित इति रोदनात् निरञ्जनाः चित्तोन्माथादितस्ततः पादविक्षेपात् विगता-लक्तकाः शयने प्रतिक्षणमुद्वर्त्तनपरिवर्त्तनात् कपोलादिभ्यो निष्पत्रलेखा इति खेदाच्च तन्व्यः कृशाङ्ग्यः ॥ २२ ॥ ज० म०

प्रजागरा इत्यादि। कान्तैः सहैकत्र शयनं वासस्तस्मात् च्युताः काश्चित् स्त्रियः सेवितमन्मथाभिरनुष्ठितसुरताभिस्तुल्या इव आसन् कीदृश्यः दयितस्यागमन-प्रतीक्षणाद्यः प्रजागरस्तेन आताम्रौ विलोचनान्तौ यासां उपभुक्तानामपि सुरता-सक्तत्वादेव प्रजागरः निरञ्जना निरलक्तका निष्पत्रलेखाश्च विरहेण प्रसाधनाभावात् किं वा रोदनात् निरञ्जनाः चित्तोन्मादादितस्ततः पादविक्षेपेण निरलक्तकाः शयने मुहुः परिवर्त्तनान्निष्पत्रलेखाः उपभुक्ता अपि चुम्बनादानन्दाश्रुपाताद्वा निरञ्जना विपरीत-सुरतान्निरलक्तकाः चुम्बनताड़नाभ्याम् कपोलयोः स्तनयोश्च निष्पत्रावल्लीका भवन्ति परिखेदात् विरहदुःखात् पक्षे सुरतामर्दात् कृशाङ्ग्यः जागर्त्तेरपि अलि वा जागोऽप्यञ्जीनिति गुणे जागरः सेमक्तात्सरीरिति अप्रत्यये स्त्रीत्वप्रसङ्गात् किं वा अप्रत्ययेऽभिधानं नियामकमित्युक्तेः स्त्रीत्वाविवक्षा केचित् तु अप्रत्ययान्तस्य स्त्रीत्वात् प्रजागराताम्रविलोचनान्ता इति समस्तपदं पठन्ति तन्निरर्थकं जागर्य्या जागरा इयोरित्यमर-वचनात् ॥ २२ ॥ भ०

आबद्धनेत्राञ्जनपङ्कलेशस्ताम्बूलरागं बहुलं दधानः ।
चकारकान्तोऽप्यधरोऽङ्गनानां सखीषितानां पतिभिर्लघुत्वम् ॥२३॥
चक्षूंषि कान्तान्यपि साञ्जनानि ताम्बूलरक्तञ्च सरागमोष्ठम् ।
कुर्वन् सवासञ्च सुगन्धि वक्त्रं चक्रे जनः केवलपक्षपातम् ॥२४॥
क्षतैरसञ्चेतितदन्तलब्धैः सम्भोगकाले ऽवगतैः प्रभाते ।
अशङ्कतान्योऽन्यकृतं व्यलीकं वियोगबाह्योऽपि जनोऽतिरागात् २५

आबद्धेत्यादि । कासाञ्चिदङ्गनानां पतिभिः सखीषितानामप्यधरः लघुत्वं दौर्भाग्यं चकार सूचितवानित्यर्थः यतस्ता ईप्सितमुरतप्राप्ता रुदितास्तस्य बद्धौलग्नो नेत्राञ्जनपङ्कलेशो यस्य सोऽधरो दयितैरपीतत्वाच्च बहुलं ताम्बूलरागं दधानः कान्तोऽपि लघुत्वं चकार ॥ २३ ॥ ज० म०

आबद्धेत्यादि । कासाञ्चिदङ्गनानां पतिभिः सखीषितानां स्वभावतः कान्तोऽपि अधरो लघुत्वं चकार दौर्भाग्यं सूचितवानित्यर्थः अनुपभुक्तत्वात् अधरः कीदृशः रोदनादाबद्धो लग्नो नेत्राञ्जनपङ्कस्य लेशोऽल्पभागो यत्र तादृशः दयितैरपीतत्वात् बहुलं प्रचुरं ताम्बूलरागं दधानः ॥ २३ ॥ भ०

चक्षूंषीत्यादि । कान्तान्यपि शोभनान्यपि चक्षूंषि विकचोत्पलद्युतित्वात् साञ्जनानि कुर्वन् स्त्रीजनः प्रातरुद्यमाणप्रसाधनत्वात् सरागं चौष्ठं स्वभावतो बिम्बफलाकारत्वात् ताम्बूलरक्तं कुर्वन् स्वभावतश्च सुगन्धि वक्त्रं सवासं मुखं वासयुक्तं कुर्वन् केवलपक्षपातं समत्वं चक्रे अञ्जनादीनां निरर्थकत्वात् ॥ २४ ॥ ज० म०

चक्षूंषीत्यादि । स्त्रीजनः स्वभावतः कान्तान्यपि नेत्राणि अञ्जनयुक्तानि कुर्वन् स्वभावतः सरागमोष्ठं ताम्बूलरक्तं कुर्वन् स्वभावतः सुगन्धि वक्त्रं सवासं कर्पूरादिमुखवासयुक्तं कुर्वन् केवलं पक्षपातं प्रसादनक्लेशं चक्रे अञ्जनादीनां निरर्थकत्वात् ॥ २४ ॥ भ०

क्षतैरित्यादि । अस्या मया दत्तं अस्य च मयेति सम्भोगकाले रागान्धतया असञ्चेतितान्यज्ञातानि दन्तेभ्यो लब्धानि यानि क्षतानि चित्तसंचेतन इति स्वार्थिकणन्तस्य रूपं प्रभातकाले अवगतैः दृष्टैः वियोगबाह्योऽपि सुप्तोऽपि कामिजनः अतिरागात् प्रतिस्नेहात् अन्योऽन्यकृतं अन्योऽन्येन कृतं व्यलीकम् अपराधम्

नेत्रेषुभिः संयुतपक्ष्मपत्रैः कर्णान्तकृष्टैरुरुकेशशूलाः।
स्तनोरुचक्रास्ततकर्णपाशाः स्त्रीयोधमुख्या जयिनो विचेरुः ॥२६॥

पयोधरांश्चन्दनपङ्कदिग्धान् वासांसि चाक्लिष्टमृजानि दृष्ट्वा।
स्त्रीणां सपत्न्यो जहृषुः प्रभाते मन्दायमानानुशयैर्मनोभिः ॥२७॥

अशङ्कत विकल्पितवान् लङि रूपं किमस्यान्यया कृताशया दत्तमिति योषिदशङ्कत पुरुषोऽपि किमन्येन भूर्त्तनास्या इति ॥ २५ ॥ ज० म०

चतैरित्यादि। वियोगभाग्योऽपि विरहेणायुक्तोऽपि जनोऽतिरागादतिस्नेहात् चतैरन्योन्येन कृतं व्यलीकमपराधमशङ्कत शङ्कितवान् घ्यां रूपं किमस्यान्यया कान्तया दत्तं चतमिति योषिदशङ्कत पुरुषोऽपि किमस्या अन्येन प्रच्छन्नकामुकेन दत्तं चतमिति शङ्कते स्म कृत इत्याह कीदृशैः चतैः सम्भोगकाले रागान्धतया असञ्चेतितानि अज्ञातानि दन्तेभ्यो लब्धानि यानि तैः चिह्नसंज्ञाने प्रभातकालेऽवगतैः ज्ञातैर्दर्शनात् ॥ २५ ॥

नेत्रेषुभिरित्यादि। नेत्राणि इषव इव तैः संयुतानि संयुक्तानि पक्ष्माण्येव पत्राणि येषां तैः कर्णान्तकृष्टैः कर्णान्तविश्रान्तैः उपलक्षिताः स्त्रियो योधमुख्या इव उरुकेशशूला उरवो महान्तः केशाः शूला इव येषां स्तनोरुचक्राः स्तना उरूणि चक्राणीव येषां ततकर्णपाशाः ताः कर्णाः पाशा इव येषां ते जयिनो लब्धविजया विचेरुः भ्रान्ताः ॥ २६ ॥ ज० म०

नेत्रेषुभिरित्यादि। स्त्रियो योधमुख्या इव योद्धृश्रेष्ठा इव विचेरुर्भ्रमन्ति स्म संयुतानि संयुक्तानि पक्ष्माण्येव पत्राणि पत्रा यत्र तैः कर्णान्तकृष्टैः कटाक्षदशायां कर्णान्तप्रेरितैर्नेत्रेषुभिरिव उपलक्षिता उरवो महान्तः केशाः शूलानीव येषां श्यामत्वात् दीर्घत्वात् कामपीडाकारित्वाच्च स्तना महाचक्राणीव येषां विशालपारिमाण्डल्यात् तताः कर्णाः पाशा इव येषां कामुकमानबन्धनयोग्यत्वात् अत- एव जयिनः पुंजयनशीलाः ॥ २६ ॥

पयोधरानित्यादि। चन्दनपङ्कदिग्धान् आम्लुतचन्दनत्वात् वस्त्राणि च अक्लिष्ट- मृजानि अनपनीतशुभ्रभावानि स्त्रीणां दृष्ट्वा प्रभाते तत्सपत्न्यो मनोभिः न वाच्यं जहृषुः हृष्टाः अप्राप्तसुरतत्वान्मन्दायमानानुशयैः आभिः सह शयिता इति तासु ये अनुशयाः पश्चात्तापो जाताः ते मन्दायमानाः शनैःशनैस्तनूभवन्तो येषु मनःसु तैरित्यर्थः ॥ २७ ॥ ज० म०

स्मरातुरे चेतसि लब्धजन्मा रराज लोलोऽपि गुणापहार्य्यः।
कुतूहलान्नेत्रगवाक्षसंस्थः पश्यन्निवान्योन्यमुखानि रागः॥२८॥
गतेऽतिभूमिं प्रणये प्रयुक्तान् अबुद्धिपूर्वं परिलुप्तसंज्ञः।
आत्मानुभूतानपि नोपचारान् स्मरातुरः संस्मरति स्म लोकः॥२९॥

पयोधरानित्यादि। स्त्रीणां चन्दनपङ्कैर्दिग्धान् लिप्तान् पयोधरान् स्तनान् दृष्ट्वा अश्लिष्टमृजानि अनपनीतशुक्लशुद्धभावानि वासांसि च वस्त्राणि च दृष्ट्वा प्रभाते तासां सपत्नी मनोभिः कारणभूतैः तैरुपलक्षिता वा जहृषुः हृष्टाः कीदृशैः मन्दायमानोऽनुशयः क्रोधो यत्र पूर्वं भर्त्रा सह सपत्नीनामेकत्र वासात् क्रोध उत्पन्नः पश्चात्तासां सम्भोगाभावज्ञानात् क्रोधस्य मन्दायमानत्वं हर्षश्च जातः सम्भोगे हि मर्दनात् चन्दनच्युतिर्वस्त्रमालिन्यञ्च स्यात्॥ २७॥ भ०

स्मरातुर इत्यादि। दम्पत्योः प्रातरन्योन्यस्य मुखं पश्यतोः चक्षुषो रागो वर्ण्यते स्मरातुरे कामातुरे चेतसि लब्धजन्मा लब्धोदयः रागो रक्तभावः नेत्रगवाक्षसंस्थः नेत्रयोर्गवाक्षयोरिव स्थितः कुतूहलात् कौतुकात् अन्योन्यस्य-मुखानि पश्यन्निव कीदृशं कामिन्या मुखं कामुकस्य मुखं वेति गुणापहार्य्यः तत्प्रतिपक्षेण शुक्लगुणेन अपनेयः अतएव लोलोऽपि अचिरस्थाय्यपि रराज॥ २८॥ ज० म०

स्मरातुर इत्यादि। दम्पत्योः प्रातरन्योन्यमुखं पश्यतोर्नेत्ररक्तिमा उत्प्रेक्ष्यते रागो रक्तभावो नेत्रयोर्गवाक्षयोरिव स्थितः सन् कुतूहलादन्योन्यमुखानि पश्यन्निव कीदृशं कामिन्याः कामुकस्य वा मुखमिति विलोकयन्निव रराज शोभतेस्म कीदृशः स्मरातुरे चेतसि लब्धजन्मा लब्धोदयः गुणेन तत्प्रतिपक्षेण शुक्लरूपेणापहार्य्योऽपनेयः अतएव लोलश्चञ्चलः अचिरस्थाय्यपि रराजेत्युत्कर्षः किं वा रागोऽनुरागः गुणापहार्य्यो मुखसौन्दर्य्येण वशीकृतः॥ २८॥ भ०

गत इत्यादि। प्रणये विस्रम्भे अतिभूमिं गते प्रकृष्टावस्थां प्राप्ते सति ये अबुद्धिपूर्वम् अनिश्चय्य स्वयं प्रयुक्ताः उपचारा नखदन्तक्षतादयः तानात्मानुभूतानपि प्रातर्न स्मरति स्म कामिलोकः इदमिदं मया प्रयुक्तमिति यतः सुरतावस्थायां स्मरातुरतया विलुप्तसंज्ञो मूढ इति॥ २९॥ ज० म०

गते इत्यादि। प्रणये प्रेम्णि अतिभूमिं प्रकृष्टावस्थां गते सति अबुद्धिपूर्वमविचार्य्य सुरतकाले स्वयं प्रयुक्तान् कृतानपि उपचारान् नखदन्तक्षतादीनात्मानु-

वस्त्रैरनत्युल्बणरम्यवर्णैर्विलेपनैः सौरभलक्षणीयैः ।
आस्यैश्च लोकः परितोषकान्तैरसूचयल्लब्धपदं रहस्यम् ॥३०॥
प्रातस्तरां चन्दनलिप्तगात्राः प्रच्छाद्य हस्तैरधरान् वदन्तः ।
शाम्यन्निमेषाः सुतरां युवानः प्रकाशयन्ति स्म निगूहनीयम् ॥३१॥
जितेऽपि लोके मधुरेण वामे ! किमुद्यतं भ्रूधनुरप्रसह्यम् ।

भूतानपि तदानीं अरातुरत्वेन परिलुप्तसंज्ञत्वात् लोकः प्रभाते न अरति स्म प्रणयः प्रेम्णि विस्रम्भे याञ्चा प्रसरयोरपि इति रुद्रः ॥ २९ ॥ भ०

वस्त्रैरित्यादि । वस्त्रैः विलेपनैः सौरभलक्षणीयैः सुरभितया परिच्छेद्यैः आस्यैश्च व्यपगताधररागैः परितोषकान्तैर्लिङ्गभूतैः रहसि भवं सुरतं लब्धपदं प्राप्तचिह्नं लोकः प्रकाशयति स्म ॥ ३० ॥ ज० म०

वस्त्रैरित्यादि । लोको वस्त्रादिचिह्नैः रहस्यं रहसि भवं सुरतमसूचयत् प्रकाशितवान् कीदृशं लब्धपदं प्राप्तचिह्नं कामिषु प्राप्तावसरं वा वस्त्रैः कीदृशैरनत्युल्बणरम्यवर्णैः परिमृदितत्वादनुद्भटरमणीयवर्णैः अनतिविशदरम्यवर्णैर्वा अल्पक्लिष्टैरित्यर्थः उल्बणं विशदं स्फुटमिति कोषः विलेपनैः कीदृशैः सौरभलक्षणीयैः सौरभेण शरीरगतसुरभित्वमात्रेण लक्षणीयैरनुमेयैः आस्यैः कीदृशैः परितोषकान्तैः अधररागप्रवाबल्यादिक्षेपेऽपि परितोषेण कृतार्थताजनितानन्देन कमनीयैः ॥ ३० ॥ भ०

प्रातस्तरामित्यादि । गुरुजनो नखदशनक्षतं मा द्राक्षीदिति युवानः प्रातस्तरां प्रत्यूषसि चन्दनलिप्तगात्रा हस्तैरधरान् प्रच्छाद्य वदन्तोऽपि शाम्यन्निमेषा अनिमिषितनेत्रा निगूहनीयं सुतरां प्रकाशयन्ति स्म नूनमेते सत्कृता ये एवमाचरन्तीति ॥ ३१ ॥ ज० म०

प्रातस्तरामित्यादि । मङ्गति प्रातःकाले नखक्षतादिसङ्गोपनार्थं चन्दनेन लिप्तगात्रा अपि दन्तक्षतसङ्गोपनार्थं गुरुसमीपे हस्तैरधरं प्रच्छाद्य वदन्तोऽपि जागरणजनितनिद्राव्यपगमार्थं शाम्यन्निमेषा निमेषं वारयन्तोऽपि युवानः निगूहनीयं सङ्गोपनीयं सुरतं सुतरामतिशयेन प्रकाशयन्ति स्म सङ्गोपनेनैव नखक्षताद्यनुमानात् यद्वा शाम्यन्निमेषाः सन्तः प्रकाशयन्ति निमेषाणां भावत्यागदर्शनात् सौक्ष्म्यमत्र गुणः तत्सौक्ष्म्यमुच्यते यत्र सूक्ष्मार्थस्यापि दर्शनम् । अत्र सुरतस्य संगुप्ततया सूक्ष्मत्वम् ॥ ३१ ॥ भ०

जित इत्यादि । हे वामे ! प्रतिकूलवर्त्तिनि मधुरेणाविकृतेन साम्ना लोके

हन्तुं क्षमो वा वद लोचनेषुर्दिग्धो विषेणेव किमञ्जनेन ॥३२॥
दन्तच्छदे प्रज्वलिताग्निकल्पे ताम्बूलरागस्तृणभारतुल्यः।
न्यस्तः किमित्यूचुरुपेतभावा गोष्ठीषु नारीस्तरुणीर्युवानः ॥३३॥
युग्मकम्।

सुखावगाह्यानि युतानि लक्ष्म्या शुचीनि सन्तापहराण्युरूणि।
प्रबुद्धनारीमुखपङ्कजानि प्रातः सरांसीव गृहाणि रेजुः ॥३४॥

अथाद्विषे जितेऽपि वशीकृतेऽपि भ्रूधनुरप्रसह्यं प्रसोढुमशक्यम् उद्यतम् उत्क्षिप्त अथवा विलोचनेषुर्नयनशरः स्वत एव हन्तुं क्षमः ततः किमञ्जनेनैव विषेण दिग्धो विषलिप्त इति वद कथय ॥ ३२ ॥ ज० म०

जित इत्यादि। युवान इत्यूचुरित्यग्रिमश्लोकेनान्वयः हे वामे! प्रतिकूलवर्त्तिनि लोके चाऽद्विषे मधुरेण माधुर्य्यगुणेन स्वभावसिद्धोपायेन प्रियवचनेन वा जितेऽपि पराभूतेऽपि वशीकृतेऽपि सोढुमशक्यं भ्रूरूपधनुः किमर्थमुद्यतमुत्क्षिप्तम् अयञ्च लोचनरूपशरः स्वयमेवास्मान् हन्तुं क्षमः समर्थः तत् किं विषेणेवाञ्जनेन वा दिग्धो लिप्तः तत्त्वं वद वदेति पाठे खेदे स्वभावैरेव कार्य्यस्य सिद्धौ किमधिक-कल्पनया भाविकत्वमत्र गुणः अहं तदायत्त एवेत्यभिप्रायप्रकाशात् साभिप्रायोक्ति-विन्यासो भाविकत्वं प्रचक्षते इति ॥ ३२ ॥ भ०

दन्तच्छद इत्यादि। प्रज्वलिताग्निकल्पे स्वभावलोहितत्वात् दन्तच्छदे ओष्ठे ताम्बूलरागः किमिति न्यस्तः तृणभारतुल्यः निष्प्रयोजनत्वात् इत्येवम् ऊचुर्युवानः प्रातरित्यर्थात् उपेतभावाः जातानुरागाः गोष्ठीषु स्थिता नारीस्तरुणी इति ॥ ३३ ॥ ज० म०

दन्तेत्यादि। दन्तच्छदे ओष्ठे ताम्बूलरागः किमर्थं न्यस्तः कीदृशे प्रज्वलित-वह्निसदृशे स्वभावतो लोहितत्वादस्मद्दाहकत्वाच्च कीदृशः तृणभारसमो निष्प्रयो-जनत्वात् अत्युद्दीपकत्वाच्च वह्नौ तृणप्रक्षेपो भृशमुद्दीपको भवति इत्येवं युवानस्तरुणा-उपेतभावा उपगतरागाः सन्तस्तरुणीः नारीः गोष्ठीषु स्त्रीसभासु स्थिता ऊचुः ॥ ३३ ॥ भ०

सुखावगाह्यानीत्यादि। प्रातः प्रभाते गृहाणि सरांसीव रेजुः सुखावगाह्यानि निरुपद्रवत्वात् सुखेनावगाह्यन्ते युतानि लक्ष्म्या देवतारूपया शुचीनि पवित्राणि

संमृष्टसिक्तार्चितचारुपुष्पैरामोदवद्द्रव्यसुगन्धभागैः।
लक्ष्मीर्विजिग्ये भवनैः सभृङ्गैः सेव्यस्य देवैरपि नन्दनस्य ॥३५॥
अक्ष्णोः पतन्नीलसरोजलोभाद्भृङ्गः करेणाल्पधिया निरस्तः।
ददंश ताम्राम्बुरुहाभिसन्धिस्तृष्णातुरः पाणितलेऽपि धृष्णुः॥३६

सन्तापहराणि धर्म्मादिक्लेशापहारीणि उरूणि महान्ति प्रबुद्धानि विनिद्राणि नारीमुखान्येव पङ्कजानि यत्रे ति ॥ ३४ ॥ ज० म०

सुखेत्यादि। प्रातः प्रभातकाले गृहाणि सरांसीव रेजुः शोभन्ते स्म कीदृशानि सुखहेतुरवनाशो यत्र तानि लक्ष्म्या सम्पत्त्या शोभया वा युतानि शुचीनि पवित्राणि सन्तापहराणि धर्म्मादिक्लेशापहारीणि उरूणि महान्ति प्रबुद्धानि विनिद्राणि नारीमुखान्येव पक्षे तानीव पङ्कजानि येषु ॥ ३४ ॥ भ०

संमृष्टेत्यादि। देवैः सेव्यस्यापि नन्दनस्य लक्ष्मीर्भवनैः प्रातर्विजिग्ये विजिता आदौ संमृष्टरजांसि अपनीतरजांसि पश्चात् सिक्तानि पूर्वापरकालसमासः अर्चितानि पूजितानि प्रशस्तानि चारूणि शोभनानि पुष्पाणि येषु भवनेषु संमृष्टसिक्तानि च तानि अर्चितचारुपुष्पाणि चेति विशेषणसमासः आमोदवन्ति यानि द्रव्याणि चन्दनादीनि तैः सुगन्धभाग एकदेशो येषां तैः गन्धस्य तदेकान्तग्रहणादित्वं न भवति सभृङ्गैरामोदभृतत्वात् ॥ ३५ ॥ ज० म०

संमृष्टेत्यादि। देवैरिन्द्रादिभिरपि सेव्यस्य नन्दनवनस्य लक्ष्मीः सम्पत्तिः शोभा वा भवनैः गृहैः प्रातर्विजिग्ये जिता कर्म्मणि ठौ कीदृशैः पूर्वं संमृष्टानि अपनीतरजांसि पश्चात् सिक्तानि संमृष्टसिक्तानि पूर्वकालस्यापरकालेनेति कर्मधारय इति परः स्वमते एकार्थतास्त्येव अर्चितानि पूजितानि चारूणि शोभमानानि पुष्पाणि येषु तानि पश्चात् संमृष्टसिक्तानि अर्चितचारुपुष्पाणि चेति पुनः कर्मधारयः आमोदवद्भिर्द्रव्यैश्चन्दनादिभिः सुगन्धा भागा एकदेशा येषां सूत्सुरभिपूतेरित्यादौ गन्धशब्दो गुणवाचीति टीकाकृद्वचनादभिधानाद्वा इप्रत्ययाभावः भृङ्गैरामोदानुसारित्वाद् भ्रमरैः सह वर्त्तमानानि नन्दनमप्येवं भवति उदात्तता गुणोऽसंमृष्टसिक्तेत्यादिभिर्विशेषणैर्योगात् उक्तैर्विशेषणैर्योगो यस्य साम्यादुदात्तता ॥ ३५ ॥ भ०

अक्ष्णोरित्यादि। 'नीलसरोजलोभात् नीलकमलमेतदित्यक्ष्णोः पतन्निलीयमानो भृङ्गः अल्पधिया अल्पबुद्ध्या कयाचित् करेण निरस्तः क्षिप्तः सन् ताम्राम्बुरु-

विलोलतां चक्षुषि हस्तवेपथुं भ्रुवोर्विभङ्गं स्तनयुग्मवल्गितम्।
विभूषणानां क्वणितञ्च षट्पदो गुरुर्यथा नृत्यविधौ समादधे ॥३७

अथानुकूलान् कुलधर्म्मसम्पदो विधाय वेशान् सुदिवः पुरोजनः।
प्रबोधकाले शतमन्युविद्विषः प्रचक्रमे राजनिकेतनं प्रति ॥३८॥

---

ह्याभिसन्धिः रक्तपद्ममेतदित्यभिसन्धिः अभिप्रायो यस्य भृङ्गस्य स धृष्णुः प्रगल्भः पाणितलेऽपि ददंश दष्टवान् तामित्यर्थात् ॥ ३६ ॥ ज० म०

अक्ष्णोरित्यादि। नीलसरोजमेतदिति मत्वा तल्लोभात् चक्षुषोः पतन् भृङ्गः कयाचिदल्पधिया मुग्धया करेण निरस्तः सन् पाणितलेऽपि तां ददंश दष्टवान् यतः करं दृष्ट्वा रक्तपद्ममित्यभिसन्धिरभिप्रायो यस्य कीदृशः तृष्णातुरः तृष्णाव्यग्रः धृष्णुः प्रगल्भः सौकुमार्य्यमत्र गुणः अक्ष्णोः करस्य चोत्पलत्वेन निरूपणात्। अनिष्ठुरत्वं यत् प्राहुः सौकुमार्य्यं तदुच्यते ॥ ३६ ॥ भ०

विलोलतामित्यादि। यथा गुरुर्नृत्याचार्य्यो नृत्यकर्मणि कस्याश्चित् चक्षुषि विलोलतां चलतां हस्तवेपथुं हस्तकम्पं भ्रुवोर्विभङ्गं नतोन्नतिं स्तनयुग्मवल्गितं प्रचलितं भूषणानां क्वणितं शिञ्जितं जनयति तद्वद् दृष्ट्वा षट्पदोऽपि तत्समादधे विहितवान् ॥ ३७ ॥ ज० म०

विलोलतामित्यादि। तथा गुरुर्नृत्याचार्य्यो नृत्यकर्मणि शिक्षायां कस्याश्चित् चक्षुषि विलोलतां चाञ्चल्यं हस्तयोर्वेपथुं कम्पं भ्रुवोर्विभङ्गमन्यथाकरणं स्तनयुगलस्य वल्गितं चलनं विभूषणानामलङ्काराणां क्वणितं शिञ्जितं समादधे जनयति तथा षट्पदोऽपि समादधे कृतवान् भ्रमरबाधया काचित् नृत्यमिव चकारेत्यर्थः प्रौढ़िरत्र गुणश्चक्षुर्विलोलताप्रभृतिभिर्नृत्यस्य निर्वाहात् विवक्षितार्थनिर्वाहः काव्ये प्रौढ़िरिति स्मृता ॥ ३७ ॥ भ०

अथानुकूलानित्यादि। अथानन्तरं पुरोजनो लङ्कानिवासिजनः प्रतिदिनमवाप्तकल्याणत्वात् सुदिवः सुप्रातेत्यादिना समासान्तनिपातनं यथास्वं कुलधर्मस्य पुरस्य या सम्पद्विभूतिः तस्या अनुकूलान् वेशान्नेपथ्यानि विधाय कृत्वा शतमन्युविद्विषो रावणस्य प्रबोधकाले राजनिकेतनं प्रत्यभिलक्ष्य प्रचक्रमे गन्तुं प्रवृत्तः प्रोपाभ्यां समर्थाभ्यामिति तङ् ॥ ३८ ॥ ज० म०

अथेत्यादि। अनन्तरं पुरोजनो लङ्कानिवासिजनो वेशान् विधाय कृत्वा शतमन्युविद्विषः इन्द्रशत्रोः रावणस्य प्रबोधकाले निद्राभङ्गसमये राजगृहं प्रति

शैलेन्द्रशृङ्गेभ्य इव प्रवृत्ता वेगाज्जलौघाः पुरमन्दिरेभ्यः ।
आपूर्य रथ्याः सरितो जनौघा राजाङ्गनाम्भोधिमपूरयन्त ॥३९॥
प्रबोधकालात् त्रिदशेन्द्रशत्रोः प्रागूर्ध्वशोषं परिशुष्यमाणाः ।
क्षीणा महान्तश्च समत्वमीयुर्द्वाःस्थैरवज्ञापरुषाभिदृष्टाः ॥ ४० ॥

तन्त्यौकृत्य प्रचक्रमे गन्तुं प्रवृत्तः प्रोपादारम्भे इति मं कीदृशान् कुलधर्मस्य कुलाचारस्य या सम्पद्विभूतिस्तस्या अनुकूलान् सदृशान् कुलोचितानित्यर्थः । कीदृशः सुदिवः प्रतिदिनं प्राप्तकल्याणत्वात् शोभनं दिवा यस्य दिवाशब्दः सप्तम्यन्ताव्यय इति ये वदन्ति तन्मते शोभनं दिवा दिवसे कर्म यस्येति विग्रहः राजादित्वात् सुदिवो निपातित इति कालापाः स्वादिभ्यो दिवादेरिति सूत्रेण डप्रत्ययमाह क्रम-दीश्वरः स्वमते स्वार्थे णः तस्यात्वविवक्षया वृद्धेरभावः ॥ ३८ ॥ भ०

शैलेन्द्रशृङ्गेभ्य इत्यादि । यथा जलानां पूराः शैलेन्द्रशृङ्गात् प्रवर्त्तन्ते तद्वत् पुरमन्दिरेभ्यः प्रवृत्ताः जनौघा रथ्याः सरित इवापूर्य राजाङ्गनमम्भोधिमिवापूरयन्त पूरितवन्तः ॥ ३९ ॥ ज० म०

शैलेन्द्रेत्यादि । यथा जलानां वारीणामोघाः पूराः प्रवाहाः शैलेन्द्रशृङ्गेभ्यः प्रवृत्ताः सरितो नदीः आपूर्य वेगात् सागरं पूरयन्ति तथा जनौघाः लोकसमूहाः पुरमन्दिरेभ्यो लङ्कागृहेभ्यः प्रवृत्ता रथ्याः प्रतोलीरापूर्य वेगात् राजाङ्गनं राज्ञो रावणस्य चत्वरमपूरयन् तवर्गपञ्चमोपान्तमङ्गनमिति विश्वः । पृषोदरादित्वात् णत्वमिति पाणिनीयाः स्वमते मनोषादित्वाद्विभाषया णत्वम् ॥ ३९ ॥ भ०

प्रबोधकालादित्यादि । त्रिदशेन्द्रशत्रोः रावणस्य प्रबोधकालात् प्राक् पूर्वम् ऊर्ध्वशोषं परिशुष्यमाणाः राजाङ्गने ऊर्ध्वकृता एव प्रबोधकाले शोषं नीयमाना इति अन्तर्भावितण्यर्थो द्रष्टव्यः एवञ्च कृत्वा कर्मण्यात्मनेपदम् अन्ये परिशोष्यमाणा इति णिचं पठन्ति ऊर्ध्वशुषीति णमुल् क्षीणाः महान्तश्च सेवकाः समत्वं तुल्यत्व-मीयुः प्राप्ताः दौवारिकैः द्वारि तिष्ठन्तीति सुपिस्थ इति कः खरवसानयोर्विसर्ज-नीय इति विसर्जनीयस्य सः अवज्ञया अनादरेण परुषमस्निग्धं यदक्षि तेनाभि-दृष्टाः ॥ ४० ॥ ज० म०

प्रबोधेत्यादि । त्रिदशेन्द्रशत्रोः रावणस्य प्रबोधकालात् निद्राभङ्गसमयात् प्राक् पूर्वं क्षीणा महान्तश्च जनाः समत्वं तुल्यताम् ईयुः प्राप्ताः दौवारिकैः सर्वेषां प्रवेशनिषेधात् कीदृशाः ऊर्ध्वशोषं परिशुष्यमाणाः ऊर्ध्वशोषमिति यदुक्तं तद्विशेषेण

गुरूरुचञ्चत्करकर्णजिह्वैरवज्ञयाग्राङ्गुलिसंगृहीतैः ।
रक्षांस्यनायासहृतैरुपास्थुः कपोललीनालिकुलैर्गजेन्द्रैः ॥ ४१ ॥
निकृत्तमत्तद्विपकुम्भमांसैः संपृक्तमुक्तैर्हरयोऽग्रपादैः ।
आनिन्यिरे श्रेणीकृतास्तथान्यैः परस्परं बालधिसन्निबद्धाः ॥ ४२॥

सुमुखादिशोषणं सूचनार्थं जल्पात् शुषिपुरैः स्वार्थैका णमिति परः किमयं करिष्यतीति त्रासात् शुष्कास्यकण्ठतालुका आमन्त्रितव्यर्थः द्वास्थैः दौवारिकैरवज्ञया अनादरेण यत्परुषं रूक्षमपि चक्षुर्भ्यां न दृष्टा द्वारि तिष्ठतीति द्वास्थः इनजनादिति डः मनीषादित्वाद्विभाषया विसर्गलोपः कादियुक्तशषसैलुर्गेति क्रमदीश्वरसूत्रम् ॥ ४० ॥ भ०

गुरूरुचञ्चदित्यादि। गुरवोऽलघवः उरवो महान्तः चञ्चन्तश्चलन्तः कराः कर्णा जिह्वाश्च येषां गजेन्द्राणां तैरवज्ञया अग्राङ्गुलिसंगृहीतैः पदाङ्गुल्यग्रेण यत्नस्थाने परिगृहीतैः अङ्गुलेरग्रमिति राजदन्तादित्वात् पूर्वनिपातः अनायासहृतैः शनैः शनैः प्रचोदितैः मत्तत्वात् कपोललीनालिकुलैः रक्षांसि उपास्थुः सेवाञ्चक्रुः ॥ ४१ ॥ ज० म०

गुर्वीत्यादि। कतिचिद्रक्षांसि राक्षसा गजेन्द्रैरुपास्थुः मत्तहस्तिनो गृहीत्वा रावणं सेवितवन्तः कीदृशैर्गुरवोऽलघवः उरवो महापरिमाणाः चञ्चन्तः चञ्चलाः कराः शुण्डाः कर्णाः जिह्वाश्च येषां तैः अवज्ञया अनादरेण अङ्गुल्यग्रेण संगृहीतैः धृतैः अङ्गुलेरग्रम् अग्राङ्गुलिरिति राजदन्तादिरिति परः स्वमते एकदेशेऽपि समुदायोपचारात् कर्मधारयः अग्रे अग्रतः स्थाने अङ्गुल्या पादाङ्गुष्ठेन संगृहीतैरिति केचित् अनायासेन हृतैः शनैः शनैः प्रेरितैर्मत्तत्वात् कपोले लीनानि भ्रमरकुलानि येषां तैः ॥ ४१ ॥ भ०

निकृत्तेत्यादि। अन्यैः सेवार्थं हरयः सिंहाः आनिन्यिरे आनीताः निकृत्तानि मत्तद्विपकुम्भमांसानि यैरग्रपादैः अतएव संपृक्तमुक्तैः लग्नकुम्भमुक्ताफलैः उपलक्षिताः श्रेणीकृता अश्रेणयः श्रेणयः कृताः श्रेण्यादयः इति सः परस्परं बालधिसंनिबद्धाः अन्योन्यस्य पुच्छेन संयताः ॥ ४२ ॥ ज० म०

निकृत्तेत्यादि। अन्यैः राक्षसैर्हरयः सिंहाः आनिन्यिरे आनीताः तथा पूर्वापेक्षया अग्रपादैः पादाग्रैरुपलक्षिताः कीदृशैः निकृत्तानि छिन्नानि मत्तद्विपानां कुम्भमांसानि यैः संपृक्ताः संयुक्ताः गजकुम्भस्थमुक्ता यत्र कीदृशाः श्रेणीकृता अश्रेणयः

उपेक्षिता देवगणैस्त्रसद्भिर्निशाचरैर्वीतभयैर्निकृत्ताः।
तस्मिन्नदृश्यन्त सुरद्रुमाणां सजालपुष्पस्तवकाः प्रकीर्णाः ॥४३॥
निराकरिष्णुर्द्विजकुञ्जराणां तृणीकृताशेषगुणोऽतिमोहात्।
पापाशयानभ्युदयार्थमार्चीत् प्रागब्रह्मरक्षःप्रवरान् दशास्यः ॥४४

शेषयः कृता अभिधानं नियामकमित्युक्तेः चूर्ये शेषणादेः कृतादिना समासः इति बोध्यं परस्परमन्योन्यस्य पुंक्तेन बह्वाः षष्ठ्या अमादेशो लोकोपचारादिति विद्यासागरः क्रियाविशेषणमिति केचित् स्वमते मनीषादित्वात् ॥ ४२ ॥ भ०

उपेक्षितेत्यादि। सुरद्रुमाणां पारिजातानां सजालाः कलिकासहिताः पुष्पस्तवकाः वीतभयैर्निशाचरैर्निकृत्ताः छिन्नाः वीतदर्पैरिति पाठान्तरं तत्र किमितैः स्थितैरिति निर्दयैः सजाला एव छिन्नाः छिद्यमानाश्च देवगणैस्त्रसद्भिरुपेक्षिताः वाभाशेत्यादिना विकल्पेन श्यन् तस्मिन् राजाङ्गने प्रकीर्णा अदृश्यन्त सेवकजनेन ॥ ४३ ॥ ज० म०

उपेक्षितेत्यादि। तस्मिन् राजाङ्गने सुरद्रुमाणां पारिजातादीनां प्रकीर्णा विक्षिप्ताः जालेन कलिकया सहिताः पुष्पस्तवका अदृश्यन्त दृष्टाः सेवकैरित्यर्थात् कीदृशाः त्रसद्भिस्त्रासं गच्छद्भिर्देवगणैरुपेक्षिता अरक्षिता क्रमकमित्यादिना वसेर्विकल्पेन श्यन् विहित इति पक्षे शप् वीतभयैर्विगतत्रासैर्निशाचरैर्निकृत्ताः छिन्नाः वीतदर्पैरिति पाठे किमितैः स्थितैरिति निर्दयैः जालं गवाक्षे आनाये कोरके दम्भेदयोरिति विश्वः ॥ ४३ ॥ भ०

निराकरिष्णुरित्यादि। दशास्यो विबुद्धः सन् अतिमोहादत्यन्ताज्ञानात् निराकरिष्णुर्निराकरणशीलः द्विजवरानित्यर्थात् द्विजकुञ्जराणां प्रशस्तद्विजानाम् अभ्युदयहेतूनां सम्बन्धिनोऽशेषाः गुणाः तृणीकृता येन स तृणीकृताशेषगुणः प्राक् पूर्वं सभाप्रवेशात् पापाशयान् पापचित्तवर्त्तीन् ब्रह्मरक्षःप्रवरान् अभ्युदयार्थमार्चीत् ॥ ४ ॥ ज० म०

निराकरिष्णुरित्यादि। दशास्यो रावणः प्रबुद्धः सन् सभाप्रवेशात् प्राक् पूर्वं पापाशयान् पापचित्तवर्त्तीन् ब्रह्मराक्षसश्रेष्ठान् ज्ञातीनभ्युदयार्थमार्चीत् पूजितवान् कीदृशः अतिमोहात् अत्यज्ञानात् द्विजकुञ्जराणां विप्रश्रेष्ठानां निराकरिष्णुः द्विजश्रेष्ठान्निराकृत्य ब्रह्मराक्षसान् पूजितवानिति मोहः उपे कृतीन्यादिना उदन्त

मायाविभिस्त्रासकरैर्जनानामाप्तैरुपादानपरैरुपेतः ।
सतां विघातैकरसैरविक्षत् सदः परिक्षोभितभूमिभागम् ॥ ४५ ॥
विधृतनिशितशस्त्रैस्त्वयुतं यातुधानै-
रुरुजठरमुखीभिःसङ्कुलं राक्षसीभिः ।
श्वगणिकशतकीर्णं वागुरावन् मृगीभि-
र्वनमिव सभयाभिर्देववन्दीभिरासीत् ॥ ४६ ॥

ऽयोगे षष्ठी न भवतीति सम्बन्धे षष्ठी यद्वा द्विजकुञ्जराणां तृणीकृता अवधीरिताः सकला गुणा येनेति सम्बन्धः अतएव निराकरिष्णुस्तानित्यर्थात् ॥ ४४ ॥ भ०

मायाविभिरित्यादि । आप्तैरव्यभिचारिभिर्मायाविभिर्वञ्चकैः परेषां त्रासकरैः जनानामतिरौद्रत्वात् उपादानपरैः सतां, सन्मार्गे स्थितानां विघातैकरसैर्विनाशैकस्वभावैः उपेतो दशास्यः सदः सभामविक्षत् प्रविष्टः शल इगुपधादनिटः क्सः कोदृशं राक्षसेश्वरस्य-भारेण परिक्षोभितभूमिभागम् ॥ ४५ ॥ ज० म०

मायाविभिरित्यादि । दशास्यः सदः सभामविक्षत् प्रविष्टवान् इगुपधोऽनिमिति क्सः कोदृशः आप्तैः आत्मीयैराक्षसैरुपेतः उपगतः सन् कोदृशैर्मायाविभिर्वञ्चकैर्जनानां त्रासकरैः अतिरौद्रत्वात् उपादानपरैः स्वार्थ्यर्थसम्पादनपरैः सतां साधूनां विघातमात्रेच्छुभिः सदः कीदृशं रावणचरणभरेण परिक्षोभितः सञ्चलितो भूमिभागो यत्र ॥ ४५ ॥ भ०

विधृतेत्यादि । तत्सदो यातुधानैः विधृतनिशितशस्त्रैः गृहीतशस्त्रैर्युतं युक्तमासीत् तथा राक्षसीभिः उरुजठरमुखीभिः सङ्कुलं व्याप्तं यथा वनं वागुरावत् सवागुरं श्वगणिकशतकीर्णम् आखेटकशतच्छन्नं मृगीभिः सभयाभिः श्वगणिकेभ्यो जातभयाभिः व्याप्तमासीत् श्वगणा विद्यन्ते येषामिति श्वगणिका अत इति ठक् ॥ ४६ ॥ ज० म०

विधृतेत्यादि । तत्सदो वनमिवासीत् कोदृशं सदः विधृततीक्ष्णशस्त्रैर्यातु-धानैराक्षसैर्युक्तं तथा राक्षसीभिः सङ्कुलं व्याप्तं कोदृशीभिः उरु महत् जठरमुदरं मुखञ्च यासां ताभिः तदा देववन्दीभिर्हठात् हृतदेवस्त्रीभिः सङ्कुलमिति सम्बन्धः श्वगणिकशतकीर्णमाखेटकशतच्छन्नं वागुरावत् वागुरा मृगबन्धनी रज्जुस्तद्युक्तं मृगीभिः सङ्कुलं सभयाभिर्भययुक्ताभिरिति मृगीणां देववन्दीनाञ्च विशेषणं तत्सदोऽपि

जलद इव तड़िलान् प्राज्यरत्नप्रभाभिः
प्रतिककुभमुदस्यन्निस्वनं धीरमन्द्रम्।
शिखरमिव सुमेरोरासनं हैममुच्चैः
विविधमणिविचित्रं प्रोन्नतं सोऽध्यतिष्ठत् ॥४७॥

इति भट्टिकाव्ये एकादशः सर्गः।

---

कुक्कुरधारिभिर्युक्तं तथा रज्जुबद्धमृगीभिर्युक्तं वनमपि राक्षसैः राक्षसीभिश्च युक्तं श्वनां मृगो विद्यते येषां ते श्वगणिन आखेटिकाः ॥ ४६ ॥ भ०

जलद इत्यादि। प्राज्यानां प्रभूतानां रत्नानां मणीनां प्रभाभिः तड़िलानिव जलदः प्रोन्नतात्मा सर्वेषामुपरि स्थितत्वात् प्रतिककुभं दिशि दिशि धीरमन्द्रं मन्द्रगम्भीरं निस्वनम् उदस्यन्निक्षिपत् सुमेरोः शिखरमिव हैममासनमुच्चैरुच्चं विविधमणिविचित्रं नानारूपैर्मणिभिर्विचित्रं नानावर्णकमाध्यतिष्ठत् समारोहति स्म ॥ ४७ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां प्रसन्नकाण्डे माधुर्य्यप्रदर्शनो
नाम द्वितीयोऽध्यायः।
काव्यस्य प्रभातवर्णनो नामैकादशः सर्गः।

जलद इत्यादि। स रावणः सुमेरोः शिखरमिवोच्चैरुच्चं हैमं हिरण्मयमासनमध्यतिष्ठत् किं कुर्वन् विद्युद्युक्तो मेघ इव प्रतिककुभं दिशि दिशि धीरमन्द्रं गभीरतरं निस्वनं ध्वनिमुदस्यन् क्षिपन् प्रोन्नतः सर्वेषामुपरि स्थितः उन्नताकारो वा प्राज्यानां प्रभूतानां रत्नानां प्रभाभिरुपलक्षितः प्राज्यरत्नप्रभाभिः करणभूताभिस्तड़िलान् जलद इव इति वा आसनं कीदृशं विविधैर्नानावर्णैर्मणिभिर्विचित्रं सुमेरुशिखरमप्येवं प्रोन्नतमिति पाठे उच्चैरिति रावणविशेषणं प्रतिककुभमिति अपनदीति पक्षे अप्रत्ययः तड़िलानिति तद्वत्साहित्यमात्रमत्र विवक्षितमुपमेये प्राज्यरत्नप्रभासाहित्यादतो नात्र पौनरुक्त्यम् ॥ ४७ ॥ भ०

इति सहृदयहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मज श्रीभरतसेनकृतायां
भट्टिकाव्यटीकायां मुग्धबोधिन्यां प्रसन्नकाण्डे गुणदर्शनं नाम
द्वितीयः परिच्छेदः।
काव्यस्य प्रभातवर्णनं नामैकादशः सर्गः।

# द्वादशः सर्गः ।

**ततो विनिद्रं कृतदेवतार्चं दृष्ट्वैव चित्तप्रशमं किरन्तम् ।**
**आविष्कृताङ्गप्रतिकर्म्मरम्यं विभीषणं वाचमुवाच माता ॥ १ ॥**

---

भाविकत्वमलङ्कारं प्रबन्धविषय उक्तः नैकदेशिकं तस्य चित्रादयोऽर्थाः प्रवृत्तिहेतवः तथा चोक्तम् ।

भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम् ।
प्रत्यक्षा इव दृश्यन्ते पदार्था भूतभाविनः ॥
चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता ।
शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते ॥

इति सत्सर्वं मल्लिनिर्णयप्रबन्धे द्रष्टव्यमिति दर्शयन्नाह

तत इत्यादि । ततः प्रभातकालानन्तरं विभीषणं विनिद्रं प्रबुद्धं कृतदेवतार्चं कृतेष्टदेवतापूजनं दृष्ट्वैव स्निग्धया कायव्यापारेण चित्तप्रशमं किरन्तं प्रकाशयन्तम् आविष्कृतं प्रदर्शितं यदङ्गस्य प्रतिकर्म प्रसाधनं तेन रम्यं माता नैकषी नाम वाचं वक्ष्यमाणामुवाच ॥ १ ॥ ज० म०

भाविकनामा गुणः प्रबन्धविषय एव न तु श्लेषादिवदेकदेशविषयोऽपि तदुक्तं दण्डिना

तं भाविकमिति प्राहुः प्रबन्धविषयं गुणम् ।
भावः कवेरभिप्रायः काव्येष्वासिद्धश्रवस्थितः ॥
परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम् ।
विशेषणानां व्यर्थानामक्रियास्थानवर्णना ॥
व्यक्तिरुक्तिक्रमवशाद्गम्भीरस्यापि वस्तुनः ।
भावयितुमिदं सर्वमिति तं भाविकं विदुः ॥

इति कण्ठाभरणे तु भावतो वाक्प्रवृत्तिर्या भाविकं तदुदाहृतमिति शब्दगुणः साभिप्रायोक्तिविन्यासो भाविकत्वं निगद्यते इत्यर्थगुणः इति अन्यत्रापि ।

भाविकत्वमलङ्कारप्रबन्धविषयो गुणः ।
प्रत्यक्षा इव दृश्यन्ते पदार्था भूतभाविनः ॥
चित्रोदात्ताद्भुतार्थत्वं कथाया अतिशीलता ।
शब्दानां कोमलत्वापि तस्य हेतुः प्रचक्षते ॥

**प्रबाधमानस्य जगन्ति धीमंस्त्वं सोदरस्यातिमदोद्धतस्य।**
**आनन्दनो नाकसदां प्रशान्तिं तूर्णं विषस्यामृतवत् कुरुष्व ॥२॥**

इति स एवाधुना प्रदर्श्यते।

तत इत्यादि। ततः प्रातःकालादनन्तरं माता नैकषी वक्ष्यमाणां वाचं विभीषणम् उवाच कथितवती कीदृशं विगतनिद्रं विहितदेवार्चनं दृष्टिमात्रेण चित्तस्थितां प्रशान्तिं किरन्तं प्रकाशयन्तं शान्तमूर्त्तित्वात् आविष्कृतेन प्रकाशितेनाङ्गप्रतिकर्मणा शरीरसाधनेन रम्यम् एतेन सर्ववैज्ज्वल्यमुक्तं संतुकखपफेवेति अस्य वाशब्दस्य व्यवस्थावाचित्वादव नित्यं वेः सकारः तस्य निष्पतन्त्य इति वत् मूर्द्धन्यत्वं दुर्निरावविर्बहिःप्रादुश्चतुरां षः कखपफे इति परसूत्रम् उवाचेत्यादिप्रयोगे वाचमित्यादिप्रयोगो व्यर्थत्वेऽपि न दुष्यति यदुक्तं कण्ठाभरणे—

> यदप्रयोजकं यच्च गतार्थं व्यर्थमेव वा।
> तस्यापि क्वापि निर्दोषः प्रयोगो दृश्यते यथेति ॥ १ ॥ भ०

प्रबाधमानस्येत्यादि। हे धीमन्! त्वं नाकसदां देवानाम् आनन्दनः प्रमोदयिता सन् सोदरस्य भ्रातुर्दशाननस्य गर्भावस्थायां समानमुदरं यस्येति योगविभागात्सभावः अतिबलोद्धतस्य महता सामर्थ्येन दृप्तस्य जगन्ति लोकं प्रबाधमानस्य पीड़यतः प्रशान्तिं प्रशमनं तूर्णं कुरुष्व अमृतवत् यथा अमृतं देवानामानन्दनं विषस्य कालकूटनाम्नः सोदरस्य एतस्मिन् समुद्रोदरं स्थितत्वात् जगन्ति प्रबाधमानस्य प्रशान्तिं कृतवदिति ॥ २ ॥ जं० म०

किमुवाचेत्याह।

प्रबाधमानस्येत्यादि। हे धीमन्! प्रशस्तबुद्धियुक्त! त्वम् अमृतवदमृतमिव विषस्य कालकूटस्य इव सोदरस्य रावणस्य प्रशान्तिं तूर्णं शीघ्रं कुरुष्व कीदृशस्य सोदरस्य जगन्ति लोकत्रयं प्रबाधमानस्य पीड़यतः अतिबलेन महासामर्थ्येन उद्धतस्य तीव्रस्य विषमपि मथनकाले जगन्ति प्रबाधमानं स्वतेजसा उद्धतस्य कीदृशः नाकसदां देवानामानन्दनः प्रमोदयिता अमृतमपि देवानामानन्दकम् एकस्मिन् समुद्रोदरे स्थितत्वात् विषामृतयोरपि सोदरत्वं समानमुदरं यस्येति सोदरः समानार्थस्य सहशब्दस्य सहःसोवेत्यनेन पक्षे सादेशः एवं यत्र भ्राता सहोदर इत्यपि स्यात् रूपनामगोत्रेत्यादौ उदर्य्यशब्देनोदरशब्दोऽपि गृह्यते इति केचित् समानस्य सभावो लोकोपचारादित्यन्ये ॥ २ ॥ भ०

कुर्य्यास्तथा येन जहाति सीतां विषादनीहारपरीतमूर्त्तिम् ।
स्थितां क्षितौ शान्तशिखाप्रतानां तारामिव त्रासकरीं जनस्य॥३
यावन्न सन्त्रासितदेवसङ्घः पिण्डो विषस्येव हरेण भीष्मः ।
संग्रस्यतेऽसौ पुरुषाधिपेन द्रुतं कुलानन्द ! यतस्व तावत् ॥४॥
हता जनस्थानसदो निकायाः कृता जितोत्खातभटद्रुमा पूः ।

कुर्य्या इत्यादि। तथाप्रकारमनुतिष्ठ त्वं येन सीतां जहाति विषादनीहारपरीतमूर्त्तिं विषादो नीहार इव तेन परिगतदेहां क्षितौ स्थितां निमग्नां शान्तशिखाप्रतानाम् अनुज्ज्वलवेणीबन्धां जनस्य त्रासकरीं भयहेतुभूतां हेतौ टः तारामिव यथा काचित्तारा क्षितौ स्थिता पतिता नीहारपरीतमूर्त्तिः शान्तशिखाप्रताना ध्वस्तरश्मिजाला लोकत्रासकरी तद्वत्तामिति ॥ ३ ॥ ज० म०

कुर्य्या इत्यादि। त्वं तथा तं प्रकारं कुर्य्याः यथा येन प्रकारेण स सीतां जहाति त्यजति जनस्य त्रासकरीं त्रासहेतुमुत्पाततारामिव प्रकरणात् राक्षसस्य त्रासं करिष्यतीति भावः। विषादो नीहार इव तेन परिगतमूर्त्तिं क्षितौ स्थितां भूमिशयनात् नक्षत्रस्यापि भूमौ पाते उत्पातः प्रसिद्धः यद्वा तारापक्षे क्षितौ क्षयनिमित्तं स्थितामित्यर्थः। शान्तशिखाप्रतानां ध्वस्तकेशप्रतानां केशोल्लुञ्चनात् तारापक्षे ध्वस्तकिरणजालाम् ॥३॥ भ०

यावदित्यादि। यथा सन्त्रासितदेवसङ्घः विषस्य कालकूटस्य पिण्डो भीष्मोऽतिरौद्रो हरेण संग्रस्तः पीतः तद्वत् यावदसौ रावणः पुरुषाधिपेन रामेण न संग्रस्यते न विनाश्यते तावत् हे कुलानन्द ! कुलानि आनन्दयतीति कर्मण्यन् द्रुतं यतस्व सीतात्यजनायां यत्नं कुरु ॥ ४ ॥ ज० म०

यावदित्यादि। हे कुलानन्द ! यावत्पुरुषाधिपेन रामेणासौ रावणो न संग्रस्यते न हन्यते यथा हरेण महादेवेन विषस्य कालकूटस्य पिण्डो ग्रस्तः तावत्त्वं द्रुतं यतस्व यत्नं कुरु सीतात्यजनायेत्यर्थात्। कीदृशो रावणो विषपिण्डश्च सन्त्रासितो देवगणो येन स तथा भीष्मो भयजनकः अतिरौद्र इत्यर्थः। कुलमानन्दयतीति कुलानन्दः ढात् षश्चिति षण् कुलस्यानन्दो यस्मादिति वा ॥ ४ ॥ भ०

हता इत्यादि। जनस्थानसदो दण्डकारण्यवासिनः निकायाः खरदूषणादीनां सङ्घा हताः सङ्घे चानौत्तराधर्य्ये इति चिनोतेः घञ् ककारश्चादेशः। पूश्च

सदांसि दग्धानि विधेयमस्मिन् यद्दन्धुना तद्घटयस्व तस्मिन् ॥५॥
चिकीर्षिते पूर्व्वतरं स तस्मिन् क्षेमङ्करेऽर्थे मुहुरीर्य्यमाणः।
मात्रातिमात्रं शुभयैव बुद्ध्या चिरं सुधीरभ्यधिकं समाधात् ॥६॥
दौवारिकाभ्याहतशक्रदूतं सोपायनोपस्थितलोकपालम्।

---

लङ्का जितभटा उत्खातद्रुमा कृता सदांसि गृहाणि दग्धानि इति सर्व्वमेतत्त्वया ज्ञातमेव अनेन प्रकारेण अस्माकमपि विनाशः स्यात् तदेतस्मिन् वस्तुनि यद्दन्धुना विधेयम् अनुष्ठेयं तद्विधातुं घटयस्व यतस्व तस्मिन् वस्तुनि ॥ ५ ॥ ज० म०

हता इत्यादि। जनस्थानसदो दण्डकारण्यवासिनो निकायाः खरदूषणादीनां समूहाः हता मारिताः स्वेदेधावोरित्यादिना निपूर्व्वचिञो घञि समूहार्थे निकायो निपातितः पूः लङ्का जितभटा उन्मूलितवृक्षा च कृता सदांसि गृहाणि दग्धानि एवमपरस्यापि विनाशः स्यात् तस्मात् एतस्मिन् वस्तुनि बन्धुना यद्विधेयं विधातुं योग्यं तत् घटयस्व कुरु तस्मिन् वस्तुनि रावणविषये वा ॥ ५ ॥ भ०

चिकीर्षित इत्यादि। तस्मिन् सीताप्रत्यर्पणलक्षणेऽर्थे मातुरुपदेशात् पूर्व्वतरं पूर्व्वमेव चिकीर्षिते कर्त्तुमीप्सिते मात्रा शुभयैव बुद्ध्या कल्याण्या अतिमात्रमत्यर्थं मुहुः क्षणमीर्य्यमाणः प्रवर्त्तमानः स विभीषणः सुधीः प्राज्ञः चिरकालमभ्यधिकं समाधात् चिन्तितवान्। इदमतिन्याय्यमिति गातिस्थेति सिचो लुक् इयता प्रबन्धेन उदात्तार्थाभिधानादुदात्तार्थत्वमुक्तम् इत उत्तरं प्रहस्तरावणविभीषणमातामह-कुम्भकर्णादीनां वचनप्रबन्धेषु चित्राद्भुतार्थत्वं द्रष्टव्यम्। स्वविनीतता सुबोधता शब्दानाकुलता चेत्येतदुभयं कथायामेव मन्त्रनिर्णयाख्यायां द्रष्टव्यम् ॥ ६ ॥ ज० म०

चिकीर्षित इत्यादि। तस्मिन् सीताप्रत्यर्पणरूपेऽर्थे पूर्व्वतरं मातुरुपदेशात् पूर्व्वमेव स्वयं चिकीर्षितं कर्त्तुमिष्टे यतः क्षेमङ्करे शुभदायके मात्रापि शुभया शोभनयैव बुद्ध्या अतिमात्रमत्यर्थं मुहुः पुनः पुनः प्रेर्य्यमाणः सुधीः प्राज्ञः स विभीषणः चिरमभ्यधिकं समाधात् न्याय्यमेवैतदिति चिन्तितवान्। भूस्थापिबेति दासंज्ञकात् सेर्लुक् इयता प्रबन्धेन उदात्तार्थत्वमुक्तम्। इत उत्तरं रावणविभीषणप्रहस्तादीनां वचनप्रबन्धेन चित्राद्भुतार्थत्वं द्रष्टव्यम् अतिशीलता शब्दानां कुशलता चेत्येतदुभयं मन्त्रनिर्णयकथायां द्रष्टव्यम् ॥ ६ ॥ भ०

दौवारिकेत्यादि। स विभीषणः रावणमन्दिरस्य द्वारं ययौ दौवारिकाः द्वारे नियुक्ताः द्वारादीनामित्यौच्। तैः अभ्याहताः शक्रदूता यस्मिन् द्वारे सोपायनाः

साशङ्कभीषात्मविशन्निशाटं द्वारं ययौ रावणमन्दिरस्य ॥७॥
दूरात् प्रतीहारनतः स वार्त्तां पृच्छन्ननावेदितसम्प्रविष्टः ।
सगौरवं दत्तपथो निशाटैरैचिष्ट शैलाग्रमिवेन्द्रशत्रुम् ॥८॥
कृशानुवर्ष्मण्यधिरूढमुच्चैः सिंहासने संचयमेघभीमम् ।
निसर्गतीक्ष्णं नयनस्फुलिङ्गं युगान्तवह्नेरिव धूमराशिम् ॥९॥

गृहीतकौशलिकाः उपस्थिता औपढौकिता लोकपाला यत्र साशङ्काः सभयाः भीषा भयानकाः आत्मा विशन्तो निशाटा यत्रेति तदिति ॥ ७ ॥ ज० म०

दौवारिकेत्यादि । विभीषणो रावणमन्दिरस्य द्वारं ययौ कीदृशं द्वारं दौवारिकैः द्वारपालैः अभ्याहता निवारिताः शक्रदूता यस्मिन् सोपायनाः सोपहाराः सन्तः उपस्थिता लोकपाला यत्र साशङ्काः सभयाः सन्तो भीषा भयजनका आत्मा आत्मीया विशन्तो निशाटा राक्षसा यत्र तेन परेष्वात्मीयेष्वपि तस्य धृष्टत्वं दर्शितं द्वारि नियुक्तो दौवारिकः । ढक्षेकादिति णिकः द्वारस्वरेति उम् विते व्रिरिति वृद्धिः ॥ ७ ॥ भ०

दूरादित्यादि । स विभीषणः दूरादेव प्रतीहारेण नतः स्वामिनीव तत्र गौरवात् वार्त्तां पृच्छन् कुशली महाराज इति विभीषणो द्वारि तिष्ठतीति राज्ञो अनावेदित एव सम्प्रविष्टो निशाटैः सगौरवञ्च सविनयं दत्तपथो दत्तमार्गः इन्द्रशत्रुं रावणम् ऐचिष्ट दृष्टवान् शैलाग्रमिव सिंहासनारूढस्य तस्योच्चत्वात् ॥८॥ ज० म०

दूरादित्यादि । दूरादेव प्रतीहारेण द्वारपालेन नतो नमस्कृतः राजा कुत्र तिष्ठति किं वा करोतीति वार्त्तां पृच्छन् विभीषणो द्वारि तिष्ठतीति राज्ञोऽनावेदित एव सम्प्रविष्टः निशाटैः राक्षसैः सगौरवं यथा स्यात्तथा दत्तः पन्था यस्य स विभीषण इन्द्रशत्रुं रावणम् ऐचिष्ट दृष्टवान् शैलाग्रमिव पर्वतशिखरमिव सिंहासनस्थत्वात् गुरोर्भावो गौरवं विकारसङ्घे ति ष्णः ॥ ८ ॥ भ०

कृशानुवर्ष्मणीत्यादि । सिंहासने उच्चैस्तुङ्गे कृशानुवर्ष्मणि अग्नितुल्ये अधिरूढम् उपविष्टं सञ्चयमेघवत् भीमम् अतिभयङ्करं निसर्गतीक्ष्णं स्वभावरौद्रं नयनानि स्फुलिङ्गा इव यस्य तमैचिष्ट युगान्तवह्नेरिव धूमराशिम् अग्नितुल्यसिंहासने उपरि स्थितत्वात् सोऽपि सञ्चयमेघवत् भीमः स्वभावतः कटुकत्वात् स्वभावतीक्ष्णः नयनानि विस्फुलिङ्गा यत्रेति ॥ ९ ॥ ज० म०

कृशान्वित्यादि । कीदृशं रावणम् ऐचिष्ट कृशानुवर्ष्मणि अग्न्याकारे अग्निसुन्दरे

प्रीत्यापि दत्तेक्षणसन्निपातं भयं भुजङ्गाधिपवद्दधानम्।
तमः समूहाकृतिमप्यशेषानूर्जा जयन्तं प्रथितप्रकाशान्॥ १०॥
स रत्नदायं जितमृत्युलोका रात्रिञ्चराः कान्तिभृतोऽन्वसर्पन्।
प्रमुक्तमुक्ताफलमम्बुवाहं सञ्जाततृष्णा इव देवमुख्याः॥ ११॥

वा उद्दीप्तत्वात् उच्चैस्तुङ्गे सिंहासनेऽधिरूढम्। वर्ष्म देहे प्रमाणे च सुन्दराकारयोरपि इति विश्वः। प्रलयकालीनमेघवत् भीममतिक्रूरत्वात् निसर्गेण स्वभावेन तीक्ष्णं रौद्रं नयनानि स्फुलिङ्गा अग्निकणा इव यत्र युगान्तवह्नेः प्रलयकालीनवह्नेर्धूमराशिमिव अग्नितुल्यसिंहासनस्थत्वात् धूमोऽपि मेघतुल्यः कटुत्वात्तीक्ष्णः स्फुलिङ्गवांश्च भवति॥ ९॥ भ०

प्रीत्येत्यादि। यथा भुजङ्गाधिपः शेषः प्रीत्या स्नेहेन दत्तेक्षणसन्निपात समर्पितनेत्रनिवहो भयमादधाति तद्वत् भयमादधानं तमःसमूहस्येवाकृतिर्यस्य तमपि प्रथितप्रकाशानशेषानर्कादीन् ऊर्जा बलेन जयन्तम् ऐविष्ट ऊर्जेति भ्राजभासेत्यादिना क्विप्॥ १०॥ ज० म०

प्रीत्येत्यादि। पुनः कीदृशं भुजङ्गाधिपः शेषः प्रीत्यापि दत्तेक्षणसन्निपातः समर्पितनेत्रसमूहः सन् यथा भयं जनयति तथा भयं दधानं तमःसमूहस्य राहुवृन्दस्येव अन्धकारचयस्येव वा आकृतिर्यस्य तथाभूतमपि ऊर्जा बलेनाप्यशेषान् प्रसिद्धप्रकाशान् सूर्यादीन् जयन्तमभिभवन्तं ऊर्जबलप्राणधारणयोः वासुसिति भावे क्विप्। तमोऽन्धकारे स्वर्भानौ तमः क्लेशे गुणान्तरे इति विश्वः॥१०॥ भ०

तं रत्नदायमित्यादि। यथा देवमुख्याः अमरत्वाज्जितमृत्युलोकाः कान्तिभृतो दीप्तिधराः सञ्जाततृष्णाः सन्तः प्रमुक्तमुक्ताफलमम्बुवाहमुपसर्पन्ति तद्वत् तं विभीषणं रत्नदायं रत्नं दास्यतीति अण् कर्मणि चेति भविष्यत्काले क्रियायां क्रियार्थायामित्यण् तत्र एककर्तृके भिन्नकर्तृके वेति विशेषाभावात् अथवा दयदानगत्योरित्यस्मात् कर्मण्यण् रत्नं दयते ददातीति कृत्वा रात्रिञ्चरा भग्नयमलोकाः अन्वसर्पन्॥११॥ ज० म०

तमित्यादि। रात्रिञ्चरा. सञ्जाताभिलाषाः सन्तो रत्नदायं तं विभीषणमन्वसर्पन् अनुगतवन्तः यथा देवमुख्या देवश्रेष्ठा जितमृत्युलोकाः कान्तिभृतः सञ्जाततृष्णाः सन्तः शुक्तिषु तोयप्रक्षेपेण प्रमुक्तमुक्ताफलं मेघमनुसर्पन्ति तद्वत्

स किङ्करैः कल्पितमिङ्गितज्ञैः सम्बाधकं पूर्वसमागतानाम् ।
सिंहासनोपाश्रितचारुबाहुरध्यास्त पीठं विहितप्रणामः ॥१२॥
ततो दशास्यः क्षुभिताहिकल्पं दीप्राङ्गुलीयोपलरूढरत्नम् ।
अनेकचञ्चन्नखकान्तिजिह्वं प्रसार्य्य पाणिं समितिं बभाषे ॥१३॥

कीदृशा रात्रिञ्चराः जितमृत्युलोकाः अभिभूतयमलोकाः कान्तिं बिभ्रतीति क्विप् कान्तिभृतः तेजस्विनः देवमुख्याः अपि अमरत्वात् जितमृत्युलोकाः कान्तिभृतश्च रत्नदायमिति रत्नं दास्यतीति भविष्यत्काले ढातुषत्विति षण् तस्य कालविशेषानुक्तेः त्रिषु कालेषु भवति अन्यकालेऽपि न च्यतिः यन्निदिति यन् दयदाने इत्यस्य रूपं वा यद्वा श्वसत्यर्थेत्यादिना णः ततः षष्ठीसमासः ॥११॥ भ०

स किमित्यादि। स विभीषणः विहितप्रणामः कृतप्रणतिः पीठमध्यास्त निषण्णवान् किङ्करैः भृत्यैः इङ्गितज्ञैरभिप्रायवेदिभिः कल्पितमुपनीतं पूर्वसमागतानां प्रथमप्रविष्टानां सम्बाधकं सङ्कटकृत् सम्बाधत इति ण्वुन् रावणस्य सिंहासने उपाश्रितः स्थितः चारुर्बाहुर्यस्य विभीषणस्येति सः ॥१२॥ ज० म०

स किङ्करैरित्यादि। स विभीषणो विहितप्रणामः कृतभक्त्यतिशयव्यञ्जकनतिः सन् पीठमध्यास्त अधिरूढवान् किम्भूतमासनमिङ्गितज्ञैः रावणाशयवेदिभिः किङ्करैः भृत्यैः कल्पितमुपनीतं पूर्वसमागतानां प्रथमोपविष्टानाम् अन्येषां मन्त्रिणां सम्बाधकं सङ्कोचकारकं तेषां स्थाने अस्य पीठस्यार्पणात् स कीदृशः रावणसिंहासने उपाश्रितः स्थितः चारुबाहुर्यस्य सः ॥१२॥ म०

तत इत्यादि। विभीषणनिवेदनानन्तरकालं दशास्यः पाणिं क्षुभिताहिकल्पं क्रुद्धविस्तृतफणेन सर्पेण तुल्यं दीप्ती दीपनशीलोऽङ्गुलीयोपलोऽङ्गुलीयरत्नं यत्र अतएव ऊढरत्नम् अनेकाः चञ्चन्त्यः चलन्त्यो नखकान्तयो जिह्वा इव यस्य तं प्रसार्य्य समितिं राक्षससमूहं बभाषे ॥१३॥ ज० म०

तत इत्यादि। विभीषणोपवेशनादनन्तरं दशास्यः पाणिं प्रसार्य्य समितिं राक्षसानां सभां वक्ष्यमाणप्रकारेण बभाषे उवाच। कीदृशं पाणिं क्षुभिताहिकल्पं क्रुद्धविस्तृतफणसर्पतुल्यं दीप्ती दीपनशीलोऽङ्गुरीयोपलो मुद्रिकारत्नं यत्र अतएवोढरत्नम् अनेन सर्पसादृश्यं सूचितम् अनेकाः चञ्चन्त्यः चपला नखकान्तयो जिह्वा इव यस्य तम् ॥१३॥ भ०

शक्तैः सुहृद्भिः परिदृष्टकार्य्यैराम्नातिभिर्नीतिषु बुद्धिमद्भिः।
युष्मद्विधैः सार्द्धमुपायविद्भिः सिध्यन्ति कार्य्याणि सुमन्त्रितानि १४
उपेक्षिते वालिखरादिनाशे दग्धे पुरेऽक्षे निहते सभृत्ये।
सैन्ये द्विषां सागरमुत्तितीर्षावनन्तरं ब्रूत यदत्र युक्तम् ॥१५॥

---

शक्तैरित्यादि। शक्तैः समर्थैः सुहृद्भिः मित्रैः परिदृष्टकार्य्यैः मा भूत् अदृष्टकर्मणां कर्मसु विषाद इति आम्नातिभिः अभ्यस्तनीतिशास्त्रैरित्यर्थः इष्टादिभ्यश्चेति इनि क्तस्येन्विषयेति कर्मणि सप्तमी। बुद्धिमद्भिः ज्ञानवद्भिः उपायविद्भिः सामादिकुशलै-रित्यर्थः। युष्मद्विधैः सह कार्य्याणि सुमन्त्रितानि सिध्यन्ति ॥ १४ ॥ ज० म०

शक्तैरित्यादि। मन्त्रिणां प्रोत्साहनार्थमिदमुच्यते युष्मद्विधैर्भवादृशैः सह सुमन्त्रि-तानि कार्य्याणि सिध्यन्ति सिद्धिं गच्छन्ति तत्र हेतुमाह। शक्तैः समर्थैः न केवलं युष्माभिर्मन्त्रणा दीयते मन्त्रणां दत्त्वा तन्निर्णीतकर्त्तव्यमपि क्रियते इति भावः। स्वय-मसमर्थो हि न स्वामिनी युद्धाद्यर्थं मन्त्रणां ददातीति वा सुहृद्भिर्मित्रैः नतु शक्त-त्वेनाहङ्कारः नतु वा कुमन्त्रणा दीयते इति भावः। परिदृष्टकार्य्यैः अदृष्टकर्माणो हि शास्त्रविदोऽपि मुह्यन्ति नीतिषु आम्नातिभिरभ्यस्तनीतिशास्त्रैः न केवलं दर्शना-देव कार्य्यज्ञानं क्त नादे इति कर्मणि सप्तमी। विषयविवक्षयेत्यन्ये बुद्धिमद्भिः ऊहा-पोहक्षमैः न शुकादिवत् अधीतवक्तृत्वम् उपायविद्भिः सामदानादिकुशलैः उपायाज्ञानात् बुद्धिमन्तोऽपि मुह्यन्ति परिकरालङ्कारोऽयम्। विशेषणैर्यत्साकूते-क्तिः परिकरस्तु सः ॥ १४ ॥ भ०

उपेक्षित इत्यादि। वालिखरादिनाशेषु उपेक्षितेषु द्विषाञ्च सैन्ये सागरमुत्ति-तीर्षावुत्तरीतुमिच्छाशीले अनन्तरमिदानीं ब्रूत वदत यदत्र युक्तमिति उत्तितीर्षाविति इकोचिम् विभक्ताविति नुम् न भवति तृतीयादिषु भाषितपुंस्कमिति पुंवद्भावः ॥ १५ ॥ ज० म०

उपेक्षित इत्यादि। वालिनः खरादेश्च नाशे उपेक्षिते स त पुरे लङ्कायां दग्धे सति भृत्यैः सह अक्षनाम्नि कुमारे हते सति शत्रूणां सैन्ये समुद्रमुत्तितीर्षौ उत्तरीतु-मिच्छ[illegible] सति अनन्तरमिदानीं यूयं ब्रूत अत्र यद्युक्तमिति बभाषे इति पूर्वेणान्वयः। उत्तितीर्षाविति स्वाद्यृदृद्भुरिति पक्षेऽनिम् पुंवद्भावार्थोक्तं पुंस्कमिति पक्षे पुंवद्भावात् शस्निक इति न नुम् ॥१५॥ भ०

भुजांसवक्षःस्थलकार्मुकासीन् गदाश्च शूलानि च यातुधानाः।
परामृशन्तः प्रथिताभिमानाः प्रोचुः प्रहस्तप्रमुखा दशास्यम् ॥१६
अखण्ड्यमानं परिखण्ड्य शक्रं त्वं पण्डितम्मन्यमुदीर्णदण्डः।
नराभियोगं नृभुजां प्रधान! मन्त्रोन्मुखः किं नयसे गुरुत्वम् ॥१७
निर्य्यत्स्फुलिङ्गाकुलधूमराशिं किं ब्रूहि भूमौ पिनषाम भानुम्।

---

भुजांसेत्यादि। यदि वयं शत्रून् न व्यापादयामस्तदा किमेतैः भुजादिभिरिति प्रथिताभिमानाः प्रकाशिताहङ्कारा भुजादीन् परामृशन्तः प्रहस्तप्रमुखा यातुधाना दशास्यं प्रोचुः वक्तु मारब्धाः वचपरिभाषणे लिट् उस् ॥१६॥ ज० म०

भुजामित्यादि। प्रहस्तप्रभृतयो यातुधाना दशास्यं वक्ष्यमाणं प्रोचुः किं कुर्वन्तः बाहून् स्कन्धान् वक्षःस्थलानि धनूंषि खड्गान् गदाः शूलानि च परामृशन्तः स्पृशन्तः प्रथिताभिमानाः प्रकाशिताहङ्काराः ॥१६॥ भ०

अखण्ड्यमानमित्यादि। शक्रमखण्ड्यमानम् अनभिभवनीयाहङ्कारम् अतश्च पण्डितम्मन्यं पण्डितमात्मानं मन्यमानं नान्यः पण्डितोऽस्तीति तादृशं परिखण्ड्य जित्वा त्वं नृभुजां राक्षसानां प्रधान! उदीर्णदण्डः अभ्यर्चितबलः सन् किमर्थं मन्त्रोन्मुखो मन्त्रप्रवणः नराभियोगं गुरुत्वं नयसे प्रापयसि सुमन्त्रितानि कार्य्याणि सिध्यन्तीति अत्र कर्त्तृगुणाभियोगेन क्रियाफलेन योगादात्मनेपदम् ॥१७॥ ज० म०

किं प्रोचुरित्याह

अखण्ड्येत्यादि। हे नृभुजां राक्षसानां प्रधान! अखण्ड्यमानं परैरनभिभवनीयमात्मानं पण्डितं मन्यमानं नान्यः पण्डितोऽस्तीति साहङ्कारं शक्रमपि परिखण्ड्य जित्वा त्वं उदीर्णदण्डो महाबलोऽपि स्वमन्त्रोन्मुखः सन् मन्त्रणां कुर्वन् नरस्याभियोगं युद्धं गुरुत्वं कथं नयसे प्रापयसि। अनन्तरं ब्रूत यदत्र युक्तमिति वचनेऽत्र गौरवप्रसङ्गात् मन्यात् स्वार्थे इति खश्। "दण्डो यमे मानभेदे लगुडे दमसैन्ययोः। व्यूहभेदे प्रकाण्डेऽश्वे कोषस्याखोरपि स्मृतः। अभिमानाग्रहे दण्डशण्डांशौः पारिपार्श्विके" इति। प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायाञ्च प्रधानं स्यादेकत्वे च सदैव तु इति च विश्वः। प्रधाना हरितांगजा इति प्रयोगात् पुंलिङ्गोऽपि प्रधानशब्द इति श्रीपतिः ॥१७॥ भ०

निर्य्यदित्यादि। ब्रूहि समादिश आस्तां तावन्नराभियोगः किं भानुं क्षितौ पिनषाम चूर्णयाम प्रश्ने लोट् रुधादिभ्यः श्नम्। निर्य्यता निर्गच्छता स्फुलिङ्गेन

आदन्तनिष्पीड़ितपीतमिन्दुं ष्ठीवाम शुष्केक्षुलतास्थिकल्पम् ॥१८॥
सराघवैः किं बत वानरैस्तैर्यैः प्रातराशोऽपि न कस्यचिन्नः।
सस्थाणुकैलासधराभिधत्स्व किं द्यौरधोऽस्तु क्षितिरन्तरीक्षे ॥१९

आकुली धूमराशिर्यस्य तं भानुं वा इति विकल्पे वर्त्तते दन्तनिष्पीड़ितपीतम् इन्दुं वा पूर्वं दन्तैर्निष्पीड़ितं पश्चात्पीतं ष्ठीवाम निरस्याम। ष्ठीवुपधाया इति दीर्घः शुष्केक्षुयष्टेरस्थीव तत्सदृशम् ॥१८॥ ज० म०

निर्य्यदित्यादि। आर्त्ता तावन्नराभियोगः ब्रूहि आदिश किं भूमौ भानुं पिनषाम चूर्णयाम पीपिषलचूर्णने विधिनिमन्त्रणेत्यादिना संप्रश्ने गौ। कीदृशं भानुं निर्य्यता निर्गच्छता स्फुलिङ्गेन आकुलोधूमराशिर्यत्र आः किं वा इन्दुं ष्ठीवाम ष्ठिवुक्लमाचम इति दीर्घः ष्वायादिष्ठ इत्यादौ ष्ठिववर्जनात् न दन्त्यसकारत्वम् कीदृशम् इन्दुं पूर्वं दन्तैर्निष्पीड़ितं पश्चात्पीतं सुधापानात् नीरसमिक्षुयष्टेर्यदस्थि-दृढ़मागलत्तुल्यं वा इत्यव्ययं विकल्पे वर्त्तते इति जयमङ्गला। आस्तु स्यात् कोप-पीड़योरित्यमरः। आ सम्यक् दन्तैर्निष्पीड़ितमिति केचित् ॥१८॥ म०

सराघवैरित्यादि। सस्थाणर्यः कैलासः तस्य धर इति सः धारयतीति धरः कर्त्तर्य्यच् हे सस्थाणुकैलासधर! नोऽस्माकं मध्ये कस्यचिदेकस्य यैः सराघवैः प्रातराशोऽपि प्रातर्भोजनमपि न भवति तैः सराघवैर्वानरैः किं प्रयोजनं बतशब्दो-ऽनुशोचने अतोऽभिधत्स्व आदिश किं द्यौः आकाशम् अधोऽस्तु भवतु क्षितिर्वा अन्त-रीक्षे उपरिष्टादस्त्विति ॥२९॥ ज० म०

सराघवैरित्यादि। हे सस्थाणुकैलासधर! नोऽस्माकं मध्ये कस्यचिदेकस्यापि यैर्वानरैः राघवाभ्यां सहितैः प्रातराशः प्रातर्भोजनमपि न भवति तैः किङ्कर्त्तव्य-मवागत्येति शेषः बतेति खेदे आमन्त्रणे वा अतोऽभिधत्स्व आदिश किं द्यौः आकाशं स्वर्गो वा अधो भवतु क्षितिरन्तरीक्षे उपरिष्टादस्तु तत्रैव कर्म्मणि सर्वे वयं भवद्भिर्नियोक्तुमुचिताः नत्वल्पकार्य्ये रामादिवधे इति भावः। प्रलयेऽपि तिष्ठतीति स्थाणुः शिवः नाम्न्यन्ये इति मूर्द्धन्यणुप्रत्ययः तेन सह वर्त्तमानं कैलासपर्वतं धरतीति पचादित्वादच् लमद्भुतकर्म्मणि किं राममिया मन्त्रणां करोषीति भावः। अन्तरी-क्ष्यते जगदस्मिन्निति अन्तरीक्षं छन्दसि इक्षे कारमिति सर्वधरः शब्दभेदे त्वन्तरीक्ष-मिति द्वयमुक्तम् ॥१९॥ म०

**चापल्ययुक्तस्य हरेः कृशानुः समेधितो बालधिभाक् त्वदीयैः।**
**शस्त्रेण वध्यस्य गलन्नधाक्षीद्राजन्! प्रमादेन निजेन लङ्काम्॥२०**
**अथाञ्चितोरस्कमुदीर्णदृष्टिः कृत्वा विवक्षाप्रवणं शरीरम्।**
**विन्यस्तपाणिर्विहितोत्तरार्थं विभीषणोऽभाषत यातुधानान्॥२१॥**

यत्पुरं दग्धं तद्युष्मत्प्रमादेनैव न शत्रुशक्त्येति दर्शयन्नाह

चापल्येत्यादि। चपलस्य भावश्चापल्यं ब्राह्मणादित्वात् ष्यञ्युवादिष्वपि दृश्यते तव चापलमिति रूपं तेन युक्तस्य हरेर्मर्कटस्य हे राजन्! शस्त्रेण वध्यस्य सतः यो बालधिः पुच्छं तद्भाक् समाश्रितः कृशानुस्त्वदीयैः भृत्यैः समेधितो वर्द्धितः तैलघृतादिभिर्गृहात् गृहं गच्छतो गलन् पुच्छात्पतन् लङ्कामधाक्षीत् दग्धवान् एकाचोवशोभषित्यादिना धत्वं हलन्तलक्षणावृद्धिः ढोढः षोढः कः सि। निजेन आत्मीयेन प्रमादेन ज्वालादर्शितलक्षणेन तदानीं तस्य शस्त्रव्यापादनमेव युक्तमिति॥ २०॥ज० म०

लङ्कादाहोऽप्यस्माकमनवधानादेव न तु शत्रुसामर्थ्यादिति सूचयितुमिदमुच्यते चापल्येत्यादि। हे राजन्! तव निजेनात्मीयेन प्रमादेनानवधानेन कृशानुरग्निर्लङ्कामधाक्षीत् दग्धवान्। कीदृशः कृशानुर्हरेर्मर्कटस्य बालधिभाक् पुच्छमाश्रितः त्वदीयैर्भृत्यैः स्वयमेधितस्तैलवस्त्रादिभिर्दीपितः गलन् हरेः गृहात् गृहान्तरगमनेन पतन् हरेः कीदृशस्य चापल्ययुक्तस्य चञ्चलतया युक्तस्य शस्त्रेण वध्यस्य वधार्हस्य चञ्चलस्य वध्यस्य वधमकृत्वा पुच्छे अग्निदानादेव एवं तव प्रमादः चपलस्य भावश्चापल्यं विकारसङ्केति ष्यञ् दहरनिमत्वात् व्रजवदेत्यादिना टाां सौ त्रिः॥२०॥ भ०

अथेत्यादि। प्रहस्तादिवचनान्तरम् अञ्चितोरस्कं विन्यस्तहारत्वात् पूजितोरस्कम् उरः प्रभृतिभ्यः कप् अञ्चेः पूजायामितीट नाञ्चेः पूजायामित्यनुनासिकलोपप्रतिषेधः तादृशं शरीरं विवक्षाप्रवणं वक्तुमिच्छाभिमुखं कृत्वा शरीरस्य सौष्ठवम् उत्पाद्येत्यर्थः उदीर्णदृष्टिस्तदभिमुखदृष्टिः विन्यस्तपाणिस्तदभिमुखीकृतदक्षिणपाणिः विभीषणो यातुधानानभाषत विहितोत्तरार्थं विहितः प्रतिषिद्धः परैर्कदितस्य वचनस्यार्थो यत्र भाषणे इति॥२१॥ ज० म०

अथेत्यादि। प्रहस्तादिवचनान्तरं विभीषणो विहितोत्तरार्थं यथा स्यात्तथा

युद्धाय राज्ञा सुभृतैर्भवद्भिः सम्भावनायाः सदृशं यदुक्तम्।
तत्प्राणपण्यैर्वचनीयमेव प्रज्ञा तु मन्त्रेऽधिकृता न शौर्य्यम् ॥२२॥
यत्रापि यत्नाहृतमन्त्रवृत्तिर्गुरुत्वमायाति नराभियोगः।
वशीकृतेन्द्रस्य कृतोत्तरोऽस्मिन् विध्वंसिताशेषपुरो हनूमान् ॥२३

---

यातुधानान् अभाषत वक्ष्यमाणप्रकारेणोक्तवान् किं कृत्वा शरीरं देहं विवक्षा-प्रवणं वक्तुमिच्छया अभिमुखं कृत्वा शरीरसौष्ठवमुत्पाद्येत्यर्थः शरीरं कीदृश-मञ्चितोरस्कं विन्यस्तहारत्वात् पूजितवक्षसं सुधवसपूजार्थाच्च इति इम् नेदित् पूजार्थाञ्चेरिति नलोपाभावः। अञ्चितं विस्तारितम् उरो यत्रेति अग्नत्वात् क इति केचित् पुंवत्स्युक्तपुंस्क इति ज्ञापकात् युतीऽन्यत्रादपि बहुव्रीहौ क्वचित् कः स्यादिति गम्यते तेनात्र कः स्वार्थे क इत्यन्ये उरःप्रभृतिभ्यो बहुव्रीहौ नित्यं क इति परसूत्रं विशेषणः कीदृशः उदीर्णदृष्टिः प्रहस्तादीनाम् अभिमुखं दत्त-दृष्टिर्विहस्तपाणिः तदभिमुखीकृतदक्षिणपाणिः विहितः प्रतिषिद्धः उत्तरस्य प्रतिवाक्यस्यार्थो येन भाषणेन ॥ २१ ॥ भ०

युद्धायेत्यादि। युद्धार्थं राज्ञा भवन्तः सुभृताः सम्वर्द्धिताः तैः सुभृतैर्यदुक्तं भानुं पिनषामित्यादि कीदृशं सम्भावनायाः सदृशं तत्प्राणपण्यैर्वचनीयमेव मन्त्रे तु प्रज्ञाधिकृता न शौर्य्यम् ॥२२॥ ज० म०

युद्धायेत्यादि। राज्ञा युद्धार्थमेव सुभृतैः परिपुष्टैर्भवद्भिः सम्भावनाया अध्य-वसायस्य सदृशं योग्यं यदुक्तं पिनषाम भानुमित्यादिकं तद्वचनीयमेव वचन-योग्यमेव यतः प्राणा एव पण्या राजकृतेन भरणेन विक्रेया येषां तैः किन्त्विदं वचनं मन्त्रे नोपयुज्यते यतः प्रज्ञा बुद्धिर्मन्त्रेऽधिकृता नतु शौर्य्यम् ॥२२॥ भ०

नराभियोगं किं नयसे गुरुत्वमित्यतोत्तरमाह

यत्रेत्यादि। वशीकृतेन्द्रस्य निर्जितशक्रस्य रावणस्य नराभियोगो यत्नाहृत-मन्त्रवृत्तिर्यत्नेनाहृता मन्त्रवृत्तिर्यस्य सः तादृशो गुरुत्वमायातीति यत्राप्युक्तम् अस्मिन् वस्तुनि हनूमान् कृतोत्तरो दत्तोत्तरः यतः प्रध्वंसिताशेषपुरः पुरं लङ्का पूः शब्दो वा कृतसमासान्तः यच्च कपिनाथभृत्येन ईदृशमनुष्ठितं तत्र कथं नरा-भियोगो मन्त्रोन्मुखेन न निरूप्यत इति ॥ २३ ॥ ज० म०

नराभियोगं किं नयसे गुरुत्वमित्यत्रेदमुत्तरम्

यत्रेत्यादि। वशीकृतेन्द्रस्य निर्जितशक्रस्य रावणस्य यत्नेन आहृता मन्त्रवृत्तिर्यत्र

अग्निः प्रमादेन ददाह लङ्कां वध्यस्य देहे स्वयमेधितश्चेत्।
विमृश्य तद्देवधियाभिधत्त ब्रह्मास्त्रबन्धोऽपि यदि प्रमादः ॥२४॥
जगन्त्यमेयाद्भुतभावभाञ्जि जिताभिमानाश्च जना विचित्राः।

साहस्यो नराभियोगो गुरुत्वमायातीति यच्चोक्तम् अस्मिन् वस्तुनि हनूमानेव कृतो-त्तरः दत्तप्रतिवाक्यो यतो विध्वंसितमशेषं पुरं येन यस्य दूतमात्रेणैव कृतं तस्य पराभियोगः कथं लघुः स्यादतस्तव मन्त्रणा युक्तैव ॥ २३ ॥ भ०

प्रमादेनाग्निः लङ्कामधाक्षीदित्यत्रोत्तरमाह

अग्निरित्यादि। वध्यस्य वधार्हस्य देहे तदेकदेशेषु पुच्छादिषु प्रमादेन स्वयं युष्माभिरग्निरेधितो दीपितः लङ्कां ददाह चेत्तथा त्वाह अवध्योऽपि यदि प्रमादः तद्देवधिया दैवबुद्ध्या देवानां सात्त्विकत्वान्निर्मला बुद्धिः तया विमृश्य निरूप्या-भिधत्त ब्रूत सोऽपि प्रमाद इति यतोऽसावमोघोऽपि विशेषितः अभिधत्तेति दध-स्तथोश्चेत्यभ्यासदकारस्य भष धातोश्च खरि चत्वम् ॥ २४ ॥ ज० म०

अग्निरित्यादि। निजेन प्रमादेन कृशानुर्लङ्कामधाक्षीदित्यत्रेदमुत्तरं वध्यस्य वधार्हस्य कपेर्देहे स्वयमेधितो दीपितोऽग्निर्लङ्कां प्रमादेन ददाहेति चेत् यदि तदा यदि ब्रह्मास्त्रबन्धोऽपि प्रमादोऽनवधानकृतो भवति तद्देवधिया देवानां सात्त्विकत्वान्निर्मला तत्त्वग्राहिणी या बुद्धिस्तादृशधिया विमृश्य निरूप्य अभि-धत्स्व ब्रूहि देवेति पृथक् पदं रावणसम्बोधनं वा यदि च ब्रह्मास्त्रबन्धो न प्रमादः तदा अग्निं दत्त्वा ब्रह्मास्त्रबन्धस्य स्थापितत्वात् कुतोऽग्निदानप्रमादो येन च स्वयमेव तादृशबन्धनं खण्डितं तस्य किमशक्यं कुतो वा वधः स्यादिति भावः। डुधाञ्लि धारणे पुष्टौ दाने अभिपूर्वो भाषणार्थः कादीरेदिरिति विलं खेर्भभस्त्वेति खेर्दत्वं श्नाद्योरित्यालोपः भभान्तस्येति खेर्धत्वं भपभसोरिति तः अभिधत्तेति पाठे धीदधोऽन्तलोपे तथि ॥ २४ ॥ भ०

पराभियोगः सर्वथा निरूप्यत इति दर्शयन्नाह

जगन्तीत्यादि। असंख्यविचित्रभावभाञ्जि जगन्ति तत्रत्या अपि जनाः विचित्राः शक्तिदेशकालवशात् जिताभिमानाश्च अन्यैः उत्कृष्टैर्जीयतेऽभिमानस्तेषां तेनात्मन्य-भिमानो न कर्त्तव्य इति दर्शयति कार्य्यं तु प्रकृष्टमुत्तमं यत्नं कुरुत येन तत्तत्कार्य्यं सिध्यति तत्र च ये युक्तिमभिदधति तान्नीतिगर्भान् नीतिरेव षाड्गुण्यादिज्ञानं

कार्य्ये तु यत्नं कुरुत प्रकृष्टं मानीतिगर्भान् सुधियोऽवमध्वम् ॥२५

वृद्धिक्षयस्थानगतामजस्रं वृत्तिं जिगीषुः प्रसमीक्षमाणः।
घटेत सन्ध्यादिषु यो गुणेषु लक्ष्मीर्न तं मुञ्चति चञ्चलापि ॥२६॥

---

गर्भं येषाम् अतएव सुधियो मावमध्वं मा परिभूत तदयुक्तानुष्ठानात् इनसिंजिति विकल्पविधानसामर्थ्यात् अनुनासिकलोपाभावः धिचेति सिचोलोपः ॥ २५ ॥ ज० म०

पराभियोगः सर्वथा निरूपणीय इति दर्शयितुमिदमुच्यते

जगन्तीत्यादि। जगन्ति भुवनानि अमेयानसंख्यान् अद्भुतानाश्चर्य्यान् भावान् भजन्ति सवत्याश्च जना अपि विचित्राः शक्तिदेशकालवशान्नानाविधा जिताभिमानाश्च भवन्ति अन्यैस्तत्कृष्टैर्जनैर्जितोऽभिमानोऽहङ्कारो येषां ते तथा तस्मादभिमानो न कर्त्तव्य इति कार्य्येषु प्रकृष्टमुत्तमं यत्नं कुरुत तेनैव कार्य्यं सिध्यति नत्ववज्ञया नीतिरेव गर्भोऽन्तर्गतो येषां तान् अतएव सुधियः पण्डितान् मा अवमध्वं तदवज्ञां न कुरुत मनेर्घें सिलोपो वेति सिलोपे वनतनाद्यनिमानिति नकारलोपः। २५ ॥ भ०

यथा च विजिगीषुणा वर्त्तितव्यं तथोपदिशन्नाह

वृद्धीत्यादि। आत्मद्रव्यप्रकृतिसम्पन्नो न यस्याधिष्ठानं विजिगीषुः तस्य च वृद्धिक्षयस्थानमिति त्रीणि फलानि गुणाश्च सन्धिविग्रहयानासनसंश्रयद्वैधीभावाः षट् तत्र यस्मिन् गुणे स्थितः पश्येदिहस्थः पश्यामीति दुर्गसेतुवणिक्कृषिशून्यनिवेशवान् द्रव्यहस्तिवनकर्माण्यात्मनः प्रवर्त्तयितुं परस्य चैतानि हन्तुं गुणमातिष्ठेत् सा वृद्धिः यस्मिन् गुणे स्थितस्य कर्मणामुपघातं पश्येत् नेतरस्य तस्मिन् तिष्ठेत् स क्षयः स्वकर्मणां वृद्धिगुणेनाभिपश्येदेतत् स्थानमित्यनेन मार्गेण यो विजिगीषुः वृद्धिक्षयस्थानगतामात्मनः परस्य च वृत्तिमजस्रं शश्वत् प्रसमीक्षमाणो निरूपयन् सन्ध्यादिषु षड्गुणेषु घटेत यतेत तं विजिगीषुं लक्ष्मीः राज्यश्रीः चञ्चलापि न मुञ्चति गुणप्रकृत्लाबहुलात् ॥ २६ ॥ ज० म०

नीतिरेव कीदृशीत्यपेक्षायामिदमुच्यते

वृद्धीत्यादि। यो जिगीषुः सन्धिर्वा विग्रहो यानमासनं द्वैधमाश्रय इति षड्गुणा एषु घटेत चेष्टेत तं लक्ष्मीश्चञ्चलापि न मुञ्चति गुणबहुलात् चञ्चलशब्दो रूढः जिगीषुः कीदृशः अजस्रं सततं वृद्धिक्षयस्थानगतां तत्सम्बन्धिनीमात्मनः परस्य च वृत्तिं प्रसमीक्षमाणः विचारयन् वृद्धिर्वर्द्धनं कोषादेः क्षयोऽपचयः परकोषादेः स्थानं स्थितिर्भिन्नदुर्गवणिक्पथादेः ॥ २६ ॥ भ०

**उपेक्षणीयैव परस्य वृद्धिः प्रनष्टनीतेरजितेन्द्रियस्य ।**
**मदादियुक्तस्य विरागहेतुः समूलघातं विनिहन्ति यान्ते ॥२७॥**
**जनानुरागेण युतोऽवसादः फलानुबन्धः सुधियात्मनोऽपि ।**
**उपेक्षणीयोऽभ्युपगम्य सन्धिं कामादिषड्वर्गजिताधिपेन ॥२८॥**

अस्ति स कालो यत्र विजिगीषुणा परवृद्धिरुपेक्षणीयेति दर्शयन्नाह

उपेत्यादि । परः शत्रुः प्रनष्टनीतित्वादजितेन्द्रियः न मदादिषड्वर्गं त्यजति किन्तु तेनैव युज्यते तस्यैवंविधस्य या वृद्धिः सा सर्वस्यैव लोकस्य विरागहेतुः वैमुख्यकारणमुपेक्षणीयैव न तदभावाय तेनेदृशी यान्ते अवसाने समूलघातं सर्वं सर्वेण विनिहन्ति विनाशयति ॥ २७ ॥ ज० म०

वृद्ध्यादिगतां वृत्तिमेव निरूपयितुमिदमुच्यते

उपेक्षणीयेत्यादि । अजितेन्द्रियस्य अतएव प्रनष्टनीतेर्मदादियुक्तस्य षड्रिपुवश्यस्य परस्य वृद्धिरुपेक्षणीयैव यतः सा विरागहेतुः सर्वस्यैव लोकस्य वैमुख्यकारणं या वृद्धिरन्ते अवसाने समूलघातं विनिहन्ति समूलं नाशयति तव वृद्धिः समूलं विनिहन्ति सर्वेषां विरागहेतुत्वादजितेन्द्रियत्वात् दोषवत्त्वाच्च इति सूचितम् ॥२७॥ भ०

तथास्ति स कालो यत्र विजिगीषुणाप्यात्मक्षय उपेक्षणीय इत्याह

जनेत्यादि । आत्मनोऽप्यवसादः क्षयः जनानुरागेण युतः सम्बद्धः अनुरक्तप्रकृतिमण्डलत्वाद्विजिगीषोः फलानुबन्धः फलमनुबध्नाति सुधिया विदुषा अधिपेन राज्ञा कामादिषड्वर्गजिता कामक्रोधलोभमोहमदेर्ष्याणां षण्णां वर्गः तज्जिता उपेक्षणीयः तत्रापि परैः सन्धिमभ्युपगम्य कृत्वा अन्यथा क्षीणोऽयमिति परोऽभियुञ्जीत ॥ २८ ॥ ज० म०

जनेत्यादि । अधिपेन राज्ञा आत्मनोऽप्यवसादः क्षयः उपेक्षणीयः किं कृत्वा सन्धिमभ्युपगम्य शत्रुणा सन्धिमनुकृत्वा अन्यथा क्षीणोऽयमिति परेणाभियुक्तः स्यात् अवसादः कीदृशः जनानामनुरागेण युतो बद्धोऽनुरक्तप्रकृतिमण्डलत्वात् फलानुबन्धः फलं वृद्धिमनुबध्नातीति ज्ञातव्यम् । कीदृशेनाधिपेन कामादीनां षण्णां वर्गं जितवता अतएव सुधिया नीतिज्ञेन कामक्रोधौ लोभमोहौ मद ईर्ष्या इतीह षाड़ति षड्वर्गस्तं जयतीति कर्त्तरि क्विप् ॥ २८ ॥ भ०

**यदा विगृह्णन् च सन्दधानो वृद्धिं क्षयश्चानुगुणं प्रपश्येत्।**
**आसीत राजावसरप्रतीक्षस्तदा प्रयासं वितथं न कुर्य्यात्॥२९॥**
**सन्धौ स्थितो वा जनयेत् स्ववृद्धिं हन्यात् परं वोपनिषत्प्रयोगैः।**
**आस्रावयेदस्य जनं परैर्वा विग्राह्य कुर्य्यादवहीनसन्धिम्॥३०॥**

---

यदा च विजिगीषुः सन्धिविग्रहाभ्यां फलं न पश्येत् तदा स्ववृद्धिप्राप्त्यर्थमासनं कुर्य्यादित्युपदिशन्नाह

यदेत्यादि। यदा हि राजा विजिगीषावस्थितः विगृह्णन् विग्रहं कुर्वन् आत्मनोऽनुगुणामनुकूलां वृद्धिं न पश्येत् क्षयं वा परस्यात्मनोऽनुगुणं न पश्येत् सन्दधान इति सन्धिञ्च कुर्वन्नात्मनोऽनुगुणं न पश्येत् तदा आसीत स्ववृद्ध्यर्थमासनं कुर्य्यात् न विग्रह सन्धिं वा अवसरः कालस्तं प्रतीक्षत इति अवसरप्रतीक्षः कर्मण्यण् सन्धेर्विग्रहस्य वा स्वपरवृद्धिक्षयानुकूलं कालं प्रतीक्षमाणः इत्यर्थः। न पुनः प्रयासं सन्धिविग्रहोद्यमं वितथं निष्फलं निष्प्रयोजनं कुर्य्यात् यदा तु परं विग्रहीतुमशक्तः तदा आवराहकलहं समानमुपदेक्ष्यति॥ २९॥ ज० म०

यदेत्यादि। यदा राजा विगृह्णन् विग्रहं कुर्वन् सन्दधानः सन्धिं कुर्वाणोऽपि अनुगुणामनुकूलामात्मनो वृद्धिं न पश्येत् न चानुगुणमनुकूलं परस्य क्षयं पश्येत् तदा आसीत आसनं कुर्य्यात् अिलासङ उपवेशे विधौ स्वौ। अवसरप्रतीक्षः अवसरं वृद्धियोग्यकालं प्रतीक्षमाण इति क्षमीक्षाक्षरिभ्यो ण इति परसूत्रेण णः स्वमते पचादित्वादन् किं वा अवसरे प्रतीक्षा यस्येति समासः वितथं निष्प्रयोजनं प्रयासं सन्धिविग्रहोद्यमं न कुर्य्यात्॥ २९॥ भ०

सन्धिं कृतवतोऽपि विजिगीषोः परेण वा वियुज्यमानस्य विधिमुपदिशन्नाह

सन्धावित्यादि। सन्धौ स्थितो वर्त्तमानः जनयेत् स्ववृद्धिं यया अत्युच्छ्रितः तामभियुञ्जीत परं वा शत्रुम् उपनिषत्प्रयोगैः रहस्यप्रयोगैः विषादिदानैः हन्यात् विनाशयेत् सन्धिना जातविश्वासत्वात् आस्रावयेदस्य जनं देशादिदानेनाकर्षयेत् बलवता अभियुज्यमानः परैः विग्राह्य कलहं कारयित्वा अवहीनसन्धिं आक्रान्तसन्धिं कुर्य्यात् तस्योपतापितत्वात्॥ ३०॥ ज० म०

सन्धावित्यादि। सन्धिं कृत्वापि विजिगीषुर्न निश्चेष्टस्तिष्ठेत् किन्तु सन्धौ स्थितः सन् स्ववृद्धिं जनयेत् उत्पादयेत् यथा वृद्धिं प्राप्य परं हन्तुं क्षमते उपनिषत्प्रयोगैरभिचारैरहःप्रयुक्तैर्विषादिदानैर्वा परं हन्यात् सन्धिना जातविश्वासत्वात्।

सन्दर्शितस्नेहगुणः स्वशत्रून् विद्वेषयन्मण्डलमस्य भिन्द्यात् ।
इत्येवमादि प्रविधाय सन्धिर्वृद्धेर्विधेयोऽधिगमाभ्युपायः ॥३१॥
मत्वा सहिष्णूनपरोपजप्यान् स्वकानधिष्ठाय जनान्तदुर्गान् ।
द्रुमाद्रिदुर्लङ्घ्यजलाप्रधृष्यान् वर्द्धेत राजा रिपुविग्रहेण ॥३२॥

---

भवेदुपनिषद्धर्मे वेदान्ते च रहस्यपीति विश्वः । अस्य परस्य जनं वंशलोकम् आश्रावयेत् देशादिदानेन आकर्षयेत् परैस्तदीयशत्रुभिर्वा विग्रहं कलहं कारयित्वा अवहीनसन्धिं त्यक्तसन्धिं कुर्य्यात् येन सह सन्धिः प्रागासीत् तेन सह सन्धिभङ्गं कुर्य्यादित्यर्थः ॥ ३० ॥ भ०

सन्धिस्तोर्विजिगीषोः शत्रुमण्डलभेदं कुर्व्वतः सुकरः सन्धिरित्युपदिशन्नाह

सन्दर्शितेत्यादि । अस्मच्छत्रवोऽनेन सन्धानं मा कार्षुरिति तान् विद्वेषयन् विमुखानुत्पादयन् दर्शितस्नेहगुणः प्रकटीकृतानुरागगुणः अस्य शत्रोर्मण्डलममात्यादिप्रकृतिं भिन्द्यात् इत्येवमादि प्रविधाय सन्दर्शितेत्येवमादिवाक्यार्थं कृत्वेत्यर्थः वृद्धेरधिगमाभ्युपायः प्राप्तिहेतुः सन्धिर्विधेयोऽनुष्ठेयः ॥ ३१ ॥ ज० म०

सन्दर्शितेत्यादि । मण्डलभेदे सन्धिमुपदिशति अस्मच्छत्रवोऽनेन सन्धिं न कुर्य्युरिति तान् विद्वेषयन् विमुखान् कुर्वन् सन्दर्शितस्नेहगुणः प्रकटितानुरागः सन् अस्य शत्रोर्मण्डलं सामादिभिर्भिन्द्यात् इत्येवमादि उक्तप्रकारादि प्रविधाय कृत्वा वृद्धेरधिगमाभ्युपायः प्राप्तिहेतुभूतः सन्धिर्विधेयः ॥ ३१ ॥ भ०

विग्रहोऽपि विशिष्टस्यैव विजिगीषोर्न यस्य कस्यचिदित्युपदिशन्नाह

मत्वेत्यादि । स्वकानात्मीयाननुजीविनः सहिष्णून् समर्थान् अपरोपजप्यान् परैरभेद्यान् जनान्ते ये दुर्गाः प्रदेशाः तान् अधिष्ठाय तत्र स्थापयित्वा अधिशीङ्स्थेति कर्मसंज्ञा । कीदृशान् द्रुमैरद्रिभिर्दुर्लङ्घ्यजलैश्चाप्रधृष्यान् अगम्यान् वनपर्वतजलभेदात् त्रिविधं दुर्गं रिपुणा सह यो विग्रहः तेन हेतुना राजा वर्द्धेत वृद्ध्युपचितः स्यात् ॥ ३२ ॥ ज० म०

सन्धेर्वृद्धिहेतुत्वमुपदर्श्य विग्रहस्य वृद्धिहेतुत्वं कथ्यते

मत्वेत्यादि । अपरोपजप्यान् परैरभेद्यान् सहिष्णून् समर्थान् स्वकानात्मीयान् अनुजीविनो मत्वा निश्चित्य जनान्तदुर्गान् जनान्ते लोकान्ते दुर्गप्रदेशान् अधिष्ठाय तत्र स्थित्वा राजा रिपुविग्रहेण हेतुना वर्द्धेत उपचितः स्यात् न तु सहसा विग्रहमात्र वृद्धिहेतुः । कीदृशान् दुर्गान् द्रुमैरद्रिभिर्दुर्लङ्घ्यजलैश्च करणभूतैः अप्रधृष्यान्

**शक्नोति यो न द्विषतो निहन्तुं विहन्यते नाप्यबलैर्द्विषद्भिः।**
**स श्वावराहं कलहं विदध्यादासीत दुर्गादि विवर्द्धयंश्च ॥३३॥**
**प्रयाणमात्रेण परे प्रसाध्ये वर्त्तेत यानेन कृताभिरक्षः।**

---

परैरगम्यान् वृक्षपर्वतवारिभेदात् त्रिविधं दुर्गम् उक्तं दुःखेन गम्यते यत्र तद् दुर्गं दुर्जनगमार्द्दैरिति आधारे डः कर्त्तोः कभाव इत्युक्तेः ॥ ३२ ॥ भ०

यदा अरिविजिगीषू परस्परं हन्तुं न शक्तौ तदा विजिगीषोरासनमुपदिशन्नाह शक्नोतीत्यादि। यो विजिगीषुः अबलत्वात् द्विषतः शत्रूनभिहन्तुं विग्रहीतुं न शक्नोति अबलैर्द्विषद्भिर्न विहन्यते स विजिगीषुः श्वावराहं कलहं विदध्यात् अनुतिष्ठेत् श्वा च वराहश्च श्वावराहं तदीयमिव कलहं तस्येदमित्यण्। यथा चण्डाला वराहं हन्तुमशक्ताः श्वानं विमुच्य योधयन्ति यद्ययं हतोऽनेन वा अय-मिति तयोर्भक्ष्यत्वादुभयथा कार्य्यसिद्धिः तद्वद् द्वयोर्विद्विषतोः कलहं विदध्यात् स्वयञ्च दुर्गादि विवर्द्धयन् दुर्गसेतुवणिक्शून्यनिवेशनद्रव्यहस्तिवनकर्माण्युपचिन्वन् आसीत तिष्ठेत् ॥ ३३ ॥ ज० म०

आसनकालः कथ्यते

शक्नोतीत्यादि। यो जिगीषुर्द्विषतः शत्रून् न निहन्तुं शक्नोति बलरहितै-र्द्विषद्भिरपि न हन्यते च स श्वावराहं कुक्कुरशूकरसम्बन्धिनं कलहं कुर्य्यात् तत्तुल्ययोर्युद्धं सम्पादयेदित्यर्थः। यथा चण्डालाः स्वयं वराहं हन्तुमशक्ताः श्वानं विमुच्य योधयन्ति तत्र यदि शुना वराहो हन्यते वराहेण वा श्वा हन्यते उभयथापि तेषां कार्य्यसिद्धिर्द्वयोरपि तेषां भक्ष्यत्वात् तथा उभयोर्द्विषतोः कलहैर्जिगीषोरिति भावः। स्वयं दुर्गादि अष्टवर्गं विवर्द्धयन् आसीत विग्रहञ्च त्यक्त्वा तिष्ठत्। कृषिर्वणिक् पथो दुर्गं सेतुः कुञ्जरबन्धनम्। खन्याकरधनादानं शून्यानाञ्च निवेशनम् इत्येषोऽष्ट-वर्गः। श्वा च वराहश्चेति द्वन्द्वे श्वावराहेवेति परसूत्रेण पूर्वपदस्य विकल्पेन दीर्घत्वं स्मरन्ते विश्वराजोऽदेत्यस्य योगविभागात् पक्षे पूर्वपदस्यादन्तत्वं सिद्धम् अत्र तु तदकरणेऽपि न क्षतिः विकारसङ्घेत्यादिना इदमर्थे णे वृद्ध्यैवेष्टसिद्धेः विदध्यादि-त्यत्रान्तर्भूतण्यर्थो बोध्यः ॥ ३३ ॥ भ०

यदा विजिगीषुर्यानमात्रसाध्यं शत्रुमात्मानं वा शक्तिहीनं पश्येत् तदा यायात् आश्रयेतेति गुणद्वयमुपदिशन्नाह

प्रयाणमात्रेत्यादि। प्रयाणमात्रेण प्रसाध्ये परे शत्रौ नापरं विग्रहमपेक्षते

अशक्नुवन् कर्त्तुमरेर्विघातं स्वकर्मरक्षाञ्च परं श्रयेत ॥३४॥
एकेन सन्धिः कलहोऽपरेण कार्य्योऽभितो वा प्रसमीक्ष्य वृद्धिम् ।
एवं प्रयुञ्जीत जिगीषुरेता नीतिर्विजानन्नहितात्मसारम् ॥३५॥
त्वया तु लोके जनितो विरागः प्रकोपितं मण्डलमिन्द्रमुख्यम् ।

---

यानेन वर्त्तेत स्ववृत्तौ यतेत कृताभिरक्षः अभियास्यतः कर्मणां द्विविधत्वप्रतिविधानात् अरेर्विघातं दुर्गादिकर्मोपघातान् स्वकर्मरक्षां स्वेषां दुर्गादिकर्मणाम् अपरेणोपहन्यमानानां रक्षां कर्त्तुम् अशक्नुवन् शक्तिहीनत्वात् परं श्रयेत यमाश्रित्य क्षयस्थानात् स्थानवृद्धिमाप्नुयात् परो द्विविधः अभियोक्ता तद्विशिष्टबलोऽपरोऽन्य इति ॥ ३४ ॥ ज० म०

यानाश्रययोः कालः कथ्यते

प्रयाणेत्यादि। परे शत्रौ प्रयाणमात्रेण प्रसाध्येऽभिभवनीये सति राजा यानेन वर्त्तेत स्ववृद्धौ यतेत। कीदृशः सन् आत्मदेशस्य कृतोऽभितः सर्वतोभावेन रक्षा येन तादृशः। अरेः शत्रोर्विघातं स्वेषां दुर्गादिकर्मणां परैरुपहन्यमानानाञ्च रक्षां कर्त्तुम् अशक्नुवन् असमर्थो भवन् परं श्रयेत यतो वृद्धिमाप्नोतीत्यर्थः ॥ ३४ ॥ भ०

यदा तु सहायसाध्यं कार्य्यं पश्येत् तदा सन्धिविग्रहासनद्वैधीभावं गच्छेदित्युपदिशन्नाह

एकेनेत्यादि। अभित उभयपार्श्वयोः सन्धिना विग्रहेण वा वृद्धिं प्रसमीक्ष्य पश्चादेकेन शत्रुणा स्वयमभियुक्तेन सन्धिः अपरेण सहायाभियुक्तेन विग्रहः कार्य्यः एवमुक्तेन प्रकारेण अहितस्य शत्रोरात्मनश्च सारं बलाबलं विजिगीषुर्विजानन् एता नीतीः षाड्गुण्यलक्षणाः प्रयुञ्जीत ॥ ३५ ॥ ज० म०

द्वैधीभावप्रकारः कथ्यते

एकेनेत्यादि। अभित उभयपार्श्वयोः सन्धिविग्रहाभ्यां स्ववृद्धिं प्रसमीक्ष्य निरूप्य पश्चादेकेन शत्रुणा स्वयमभियुक्तेन सन्धिः अपरेणाभियुक्तेन स्वयं विग्रहश्च कार्य्यः वाशब्दः समुच्चये पूर्वश्लोकापेक्षया पक्षान्तरे वा एवमुक्तप्रकारेणाहितस्य शत्रोरात्मनश्च सारं बलं विजानन् विजिगीषुरेता नीतीः षाड्गुण्यरूपाः प्रयुञ्जीत ॥ ३५ ॥ भ०

त्वया पुनरेवं प्रयुक्ता इति दर्शयन्नाह

त्वयेत्यादि। त्वया पुनश्चतुर्वर्णोच्छेदकारिणा लोके जनितो विरागः इन्द्र-

**रामे तु राजन् ! विपरीतमेतत् पश्यामि तेनाभ्यधिकं विपक्षम्॥३६॥**
**एकेन बाली निहतः शरेण सुहृत्तमस्ते रचितश्च राजा ।**
**यदैव सुग्रीवकपिः परेण तदैव कार्य्यं भवतो विनष्टम् ॥३७॥**
**प्राकारमात्रावरणः प्रभावः खरादिभिर्यो निहतैस्तवाभूत् ।**
**लङ्काप्रदाहाक्षवधद्रुभङ्गैः क्राम्यत्यसावप्यधुनातिमात्रम् ।३८॥**

सुख्यश्च शक्रप्रधाने मण्डले प्रकोपितं रामे तु सर्वमेतद्विपरीतम् अनुरागेण जनितं मण्डलस्यानुरञ्जितं तेनाभ्यधिकं विपक्षं रामं पश्यामि ॥ ३६ ॥ ज० म०

उक्तरीत्या नीतितत्त्वं प्रदर्श्य रावणे तद्वैपरीत्यात् सन्धिरेव युक्त इति प्रकृतमभिधीयते

त्वयेत्यादि । त्वया पुनर्लोके विरागो जनितः परद्रोहित्वात् इन्द्रादिकं राजमण्डलं प्रकोपितं तेनेयं भवती ऋद्धिरपि न शुभोदर्केति भावः । हे राजन् ! रामे पुनः सर्वमिदं विपरीतं धार्मिकत्वेन सर्वजनानुरागस्य जनितत्वात् रक्षोहन्तृत्वेनेन्द्रादिसम्मतत्वाच्च तेन विपक्षं शत्रुं रामं त्वत्तोऽभ्यधिकं पश्यामि विराग इति रञ्जेर्घञन्तस्य स्यदेधावोदेत्यादिना निपातितम् ॥ ३६ ॥ भ०

न चेदानीं भवतः कार्य्यं विनष्टम् अपि तु प्रागेवेति दर्शयन्नाह

एकेनेत्यादि । तव सुहृत्तमो बाली यदैव परेण रामेण कर्त्रा शरेणैकेन निहतः सुग्रीवश्च कपित्वच्छत्रू राजा रचितः स्थापितः तदैव विनष्टमिति ॥ ३७ ॥ ज० म०

रावणस्य मित्रक्षयं रामस्य मित्रोपचयं कार्मणासामाधिक्यञ्च दर्शयितुमिदमुच्यते

एकेनेत्यादि । परेण शत्रुणा रामेण कर्त्रा एकेन शरेण तव सुहृत्तमो बाली यदैव निहतो मारितः सुग्रीवश्च कपिर्यदैव राजा रचितः कृतः तदैव भवतः कार्य्यं विनष्टं येन भवतो जेता बाली अल्पायासेन हतस्तेन भवज्जयस्यातिसुकरत्वात् ॥ ३७ ॥ भ०

अथ प्रतापवतो मम कथं कार्य्यं विनश्यति प्रतापादेव शत्रवो नश्यन्तीति चेदाह

प्राकारेत्यादि । तव त्रैलोक्यप्रमाथी प्रताप आसीत् पुनः खरादिभिर्निहतः प्राकारमात्रावरणो जातः लङ्कायामेव समर्थत्वात् असावप्यधुना लङ्कादाहेन

षड्वर्गवश्यः परिमूढबन्धुरुच्छिन्नमित्रो विगुणैरुपेतः ।
मा पादयुद्धं द्विरदेन कार्षीर्नम क्षितीन्द्रं प्रणतोपभोग्यम् ॥३९॥
रामोऽपि दाराहरणेन तप्तो वयं हतैर्बन्धुभिरात्मतुल्यैः ।

अक्षवधेन द्रुमभङ्गेन अशोकवनिकाभङ्गेन च अतिमात्रम् अत्यर्थं क्लाम्यति ग्लानि-मुपगच्छति ॥ ३८ ॥ ज० म०

मत्प्रतापादेव कार्य्यं सिध्यतीत्याशङ्कामपनेतुमिदमुच्यते

प्राकारेत्यादि । यस्तव प्रभावः निहतैः खरादिभिः प्राकारमात्रावरणोऽभूत् प्राकारमात्रमावरणं यस्य तादृशो जातः पूर्वं त्रैलोक्यव्यापिनोऽपि तस्य इदानीं लङ्कामात्रे पर्य्याप्तत्वात् असावपि अधुना इदानीं लङ्कायाः प्रदाहेन अक्षस्य वधेन वृक्षाणां भङ्गेन च अतिमात्रम् अत्यर्थं क्लाम्यति ग्लानिमुपयाति ॥ ३८ ॥ भ०

अतो रामेण सह युद्धं न घटते तदेव दर्शयन्नाह

षड्वर्गेत्यादि। वशं गतो वश्यः कामादेर्वश्यः परिमूढबन्धुः मूर्खामात्यादि-परिवारः उच्छिन्नमित्रः वर्गस्यासम्भवात् अरिगणैरुपेतः तद्विपरीतो रामः अतः द्विरदेन पादयुद्धमिव तेन ज्यायसा मा विग्रहं कार्षीः अपि तु क्षितीन्द्रं रामं नम प्रणतोपभोग्यम् अनेन हीनसन्धिमाह । तथा चोक्तं, प्रहत्तं मन्त्रिणाक्रान्तो राजा बलवतामलः । सन्धिनोपनमेतूर्णं दण्डकोषात्मभूमिभिरिति ॥ ३९ ॥ ज० म०

रामेण सह तव युद्धमनुचितमिति दर्शयितुमिदमुच्यते

षड्वर्गेत्यादि । त्वं द्विरदेन हस्तिना सह पादयुद्धं पादेन विग्रहं मा कार्षीः न कुरु षड्वर्गवश्यत्वादिदोषहीनेन रामेण सह कलहो द्विरदेन युद्धस्य तुल्य इत्यर्थः । द्विरदेन पादयुद्धमित्यनेन बलीयसा दुर्बलस्य युद्धमुपलक्ष्यते किन्तु क्षितीन्द्रं रामं नम प्रणम यस्मादसौ प्रणतैरेव जनैरुपभुज्यते वशीक्रियते त्वम् कीदृशः षड्वर्गस्य कामक्रोधलोभमोहमदेर्ष्यात्मकस्य वश्यः आयत्तः वशं गतो वश्यः इधेकादिति यः परिमूढबन्धुर्मूर्खपरीवारः उच्छिन्नमित्रः हतबालिखरादिमित्रः मित्ररहितो वा अतएव विगुणैरुपेतः येन गुणेन दोष उत्पद्यते तेन युक्तः नमेत्यत्र विधिनिमन्त्रणे-त्यादिना प्राप्तकाले लोट् ॥ ३९ ॥ भ०

युवयोः सन्धानकारणमस्त्येवेति दर्शयन्नाह

राम इत्यादि । यथा तप्तेनायसा तप्तस्यायसः सन्धिर्घटते तद्वत् अस्माकं तप्तानां तप्तेन रामेण सन्धिरस्त्विति मुञ्च सीतां सन्धिनिमित्तम् ॥ ४० ॥ ज० म०

**तप्तस्य तप्तेन यथायसो नः सन्धिः परेणास्तु विमुञ्च सीताम् ॥४०॥**
**सन्धुक्षितं मण्डलचण्डवातैरमर्षतीक्ष्णं क्षितिपालतेजः।**
**सामाम्भसा शान्तिमुपैतु राजन्! प्रसीद जीवाम सबन्धुभृत्याः॥४१॥**
**अपक्वकुम्भाविव भङ्गभाजौ राजन्नियातां मरणं समानौ।**

---

कथमावयोर्भिन्नधर्मयोः सन्धिः स्यादित्याशङ्कायामिदमुच्यते

राम इत्यादि। दाराहरणेन सीतापहारेण रामस्तप्तो वयमपि आत्मतुल्यैः हतै-र्बन्धुभिरक्षादिभिस्तप्ताः यथा तप्तेन लौहेन तप्तस्य लौहस्य सन्धिर्घटना भवति तथा परेण रामेणापि नोऽस्माकं सन्धिरस्तु उभयोः सन्तप्तयोः सन्धिरिति न्यायात् अतः सीतां विमुञ्च त्यज ॥ ४० ॥ भ०

यदि च तेन तप्तेनापि सता ज्यायसा न सन्धानं तदा सर्वे वयं न जीवामः तव तेजसो विनाशकत्वादिति दर्शयन्नाह

सन्धुक्षितमित्यादि। क्षितिपालतेजः सीतावियोगजं इन्द्रादिमण्डलैश्चण्डवातै-रिव सन्धुक्षितं दीपितम् अमर्षतीक्ष्णम् असहिष्णुतया असह्यं सामाम्भसा साम्ना सन्धिना अम्भसेव शान्तिमुपैतु। हे राजन्! प्रसीद किं संरम्भेण अन्यथा तमारण्यो-ऽग्निरिव दुःखामर्षजं तेजो विक्रमयतीति ॥ ४१ ॥ ज० म०

सन्धिं विनापि जीवनं नास्तीति दर्शयितुमिदमुच्यते

सन्धुक्षितमित्यादि। क्षितिपालस्य तेजः साम्ना सन्धिना अम्भसा जलेनेव शान्तिमुपैतु गच्छतु तेजःशब्देन अत्र सीताविरहमन्युजोऽग्निरुपलक्ष्यते। कीदृशं तेजः इन्द्रादिराजमण्डलैः प्रचण्डवातैरिव सन्धुक्षितं दीपितं अमर्षेण पराभवासहिष्णुतया तीक्ष्णम् असह्यं तस्मात् हे राजन्! प्रसीद किं क्रोधेन बन्धुभिः भृत्यैश्च सह वयं जीवाम विधिनिमन्त्रणेत्यादिना प्रार्थनायां लोट् ॥ ४१ ॥ भ०

समानयोरपि सन्धानमेव युज्यते न विग्रहः किं पुनर्ज्यायसोऽत्र हेतुं दर्शयन्नाह

अपक्वेत्यादि। हे राजन्! यथा कुम्भावपक्वौ भङ्गभाजौ परस्पराभिहतौ विनश्यतः तद्वत् समानौ युध्यन्तौ मरणमियातां सार्वधातुकप्रकारत्वादियो न दीर्घत्वं राजन्नियातामिति ओङ्गसादचिङ्मुट् किन्तु रामो वीर्ये स्थितः उत्साह-शक्तियुक्त इत्यर्थः। विक्रमबलं चोत्साहशक्तिः कृतानुरागश्च अनुरक्तमण्डलत्वात्

वीर्य्ये स्थितः किन्तु कृतानुरागो रामो भवांश्चोत्तमभूरिवैरी ॥४२
दण्डेन कोषेण च मन्यसे चेत् प्रकृष्टमात्मानमरेस्तथापि ।
रिक्तस्य पूर्णेन वृथा विनाशः पूर्णस्य भङ्गे बहु हीयते तु ॥४३॥

---

भवान् पुनः उत्तमभूरिवैरी उत्तमा इन्द्रादयो भूरयः प्रभूता वैरिणः शत्रवो यस्य अतस्तेन सन्धानमेव युक्तं न विग्रहः ननु च समज्यायोभ्यां सन्धीयेत हीनेनैव विगृह्णीयात् मन्त्रप्रभावोत्साहशक्तिभिर्युक्तो ज्यायान् अपचितो हीनः तुल्यशक्तिः समः तत्र ज्ञानबलं मन्त्रशक्तिः कोषदण्डबलं प्रभुशक्तिः विक्रमबलम् उत्साहशक्तिः ॥ ४२ ॥ ज० म०

समयोरपि विग्रहो न युक्तः सुतरां हीनाधिकयोरिति दर्शयितुमिदमुच्यते

अपक्वकुम्भावित्यादि । हे राजन् ! यथा अपक्वकुम्भौ परस्पराभिघातभङ्गभाजौ तथा समानौ युध्यमानौ मरणमियाताम् इयः खौ समानयोर्विग्रहः कथञ्चित् युज्यतेऽपि किन्तु रामो वीर्य्ये स्थित उत्साहशक्तिसम्पन्नः कृतानुरागः सर्वलोकेष्विति शेषः । भवान् पुनरुत्तमानां भूरीणां बहूनाम् इन्द्रादीनां वैरी उत्तमा भूरयो बहवो वैरिणो यस्येति वा अतो हीनाधिकयोः सन्धिरेवोचित इति भावः ॥ ४२ ॥ भ०

सत्यामुत्साहशक्तौ शेषयोरभावात्तत्र हीनेन विग्रह एव युज्यत इत्याह

दण्डेनेत्यादि । दण्डेन चतुरङ्गेन बलेन कोषेण हेमरूप्यादिना यदि प्रकृष्टमात्मानमरेः सकाशान्मन्यसे :तथापि एवमपि न युक्तं यतो रिक्तस्य पूर्णेन भवता विनाशो भङ्गः वृथा निष्फलः पूर्णस्य पुनर्भवतो भङ्गे बहु हीयत इति हीनेन बलवतोऽपि सन्धानं युक्तं रिक्तस्य भङ्गो माप्यभूत् ॥४३ ॥ ज० म०

शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजा इति कोषः । दण्डबलं प्रभुशक्तिः अधिकविक्रम उत्साहशक्तिः ज्ञानबलं मन्त्रशक्तिस्तत्र यद्यपि राम उत्साहशक्तिशाली तथापि प्रभुशक्तिहीनः अहन्तु उत्साहप्रभुमन्त्रशक्तिभिर्युक्तः अतो हीनेनाधिकस्य विग्रह एवोचितो न तु सन्धिरित्याशङ्क्येदमुच्यते

दण्डेनेत्यादि । दण्डेन चतुरङ्गबलेन कोषेण च हेमरूप्यादिना चेत् यदि अरेः शत्रोः सकाशादात्मानं प्रकृष्टं मन्यसे तथापि रिक्तस्य कोषदण्डहीनस्य रामस्य पूर्णेन भवता हेतुना विनाशो वृथा निष्फलः पूर्णस्य भवतो रिक्तेन रामेण भङ्गे सति पुनर्बहु हीयते अतो यस्मिन् जिते किमपि फलं नास्ति तेन हीनेनापि

क्लिष्टात्मभृत्यः परिमृग्यसम्पन्मानी यतेतापि ससंशयेऽर्थे ।
सन्देहमारोहति यः कृतार्थो नूनं रतिं तस्य करोति न श्रीः ॥४४॥
शक्यान्यदोषाणि महाफलानि समारभेतोपनयन् समाप्तिम् ।
कर्माणि राजा विहितानुरागो विपर्यये स्याद्वितथः प्रयासः ॥४५॥

सन्धिः कर्त्तुमुचितः तथा सङ्कटप्रवेशानौचित्यात् । दण्डो यमे मानभेदे लगुडे दम-
सैन्ययोरिति विश्वः ॥ ४३ ॥ भ०

अन्यद्विजयफलमस्तीति चेदाह

क्लिष्टेत्यादि । यो मानी क्लिष्टात्मभृत्यः चिरकालक्लिष्टशरीरः क्लिष्टभृत्यश्च
परिमृग्यसम्पत् प्रार्थनीया विभूतिर्येन मृगयते: स्वार्थिकण्यन्तादयो यत् संशयेऽर्थे
स्यान्न स्यादिति यतेतापि यत्नं कुर्य्यात् यः कृतार्थो भवादृशः त्रैलोक्यविजयित्वात्
सन्देहमारोहति सन्देहे प्रवर्त्तते तस्य नूनम् अवश्यं श्रीर्विभूतिः रतिं स्थितिं न
करोति ॥ ४४ ॥ ज० म०

रिक्तस्य भङ्गे मा भूदन्यत् किञ्चित् फलं विजयी वैरिनिर्य्यातनञ्च फलमस्तीत्या-
शङ्क्येदमुच्यते

क्लिष्टात्मेत्यादि । क्लिष्टो दुःखित आत्मा शरीरं भृत्यश्च यस्य सः परिमृग्य-
सम्पत् प्रार्थनीयविभूतिर्मानी संशयेऽर्थे सन्दिग्धे अर्थे यतेतापि यत्नं कुर्य्यादपि
यः पुनः कृतार्थो भवादृशस्त्रैलोक्यविजयित्वात् सन्देहमारोहति सम्भाव्यमान-
विनाशे सन्दिग्धकर्मणि प्रवर्त्तते तत्र नूनम् अवश्यं श्रीः लक्ष्मी रतिं स्थितिं प्रीतिं
वा न करोति तस्येति क्वचित् पाठः मृगत्वाङ्कुशे मार्गणे तत्यागीयया इति कर्मणि
यः ।४४ ॥ भ०

कदा तर्हि विग्रह इत्याह

शक्यानीत्यादि । शक्यानि यानि कर्त्तुं पार्य्यन्ते अदोषाणि शुद्धानि महा-
फलानि कार्य्याणि राजा समारभेत विग्रहंणेत्यर्थात् उपनयन् समाप्तिं नयन्
विहितानुरागोऽनुरक्तप्रकृतिः विपर्य्यये उक्तस्य अशक्यानि दोषाधिकानि स्वल्प-
फलानि राजा समारभेत समाप्तिं च न नयति स वितथः प्रयासः निष्फलो
विग्रहः ॥ ४५ ॥ ज० म०

**जेतुं न शक्यो नृपतिः सुनीतिर्दोषः क्षयादिः कलहे ध्रुवश्च।**
**फलं न किञ्चिन्न शुभा समाप्तिः कृतानुरागं भुवि संत्यजारिम्॥४६॥**
**त्वन्मित्रनाशो निजमित्रलाभः समेतसैन्यः स च मित्रकृच्छ्रे।**
**भोग्यो वशः पश्य शरेण शत्रोः प्रसाधितो बालिबधे न कोऽर्थः॥४७॥**

तर्हि कदा विग्रहः कर्त्तव्य इत्याशङ्केदमुच्यते

शक्यानीत्यादि। राजा समाप्तिमुपनयन् फलान्तत्वमुपगच्छन् कर्माणि समारभेत प्रस्तुतानि कुर्य्याद्विग्रहणेत्यर्थात् यदि विहितानुरागोऽनुरक्तप्रकृतिमण्डलो भवेत्। कीदृशानि शक्यानि कर्त्तुमित्यर्थात् अदोषाणि पर्य्यन्तशुद्धानि महाफलानि बहुप्रयोजनानि विपर्य्यये उक्तस्य वैपरीत्ये विरक्तप्रकृतिमण्डलो राजा समाप्तिम् अकुर्वन् यदि अशक्यानि सदोषाणि निष्फलानि कर्माणि समारभेत तदा प्रयासो वितथो मिथ्या निष्फलः स्यात् समस्तपाठे वितथाः प्रयासा यस्य तादृशो राजा स्यात्॥ ४५॥ भ०

ममापि रामविग्रहेण सर्वमस्तीति चैवाह

जेतुमित्यादि। नृपतिः रामः जेतुं न शक्यः विग्रहेण उत्साहशक्तियुक्तत्वात् तेन सह कलहे दोषः क्षयादिः ध्रुवोऽवश्यम्भावी विग्रहे वा सति क्षयस्य प्रयासप्रयवाया भवन्तीत्युक्तं फलं न किञ्चित् न शुभा समाप्तिः स्ववन्धुविनाशहेतुत्वात् अतो यीद्रुम् अरिं ज्यायांसं सन्त्यज भुवि कृतानुरागं त्वं पुनरकृतानुराग इति॥ ४६॥ ज० म०

ममापि रामविग्रहे सर्वमेतदस्तीत्याशङ्केदमुच्यते

जेतुमित्यादि। नृपतिः रामो जेतुमभिभवितुं न शक्यो यतः सुनीतिस्तेन सह कलहे विग्रहे बन्धुक्षयादिर्दोषो ध्रुवः अवश्यम्भावी फलन्तु न किञ्चित् रत्नादिलाभशून्यत्वात् समाप्तिरपि न शुभा न साध्वी विनाशहेतुत्वात् समाप्तिरशक्या वा तत्सैन्यस्याप्यनेकत्वात् अतो भुवि कृतानुरागम् अरिं रामं सन्त्यज॥४६॥ भ०

अन्यच्च वालिबध एव तस्यार्थसम्पज्जयायेति दर्शयन्नाह

त्वन्मित्रेत्यादि। वालिबधे सति शरेण रामस्य कोऽर्थो न प्रसाधितः अपि तु सर्व एव पश्य तथा हि त्वन्मित्रनाशः तस्य च मित्रलाभः मित्रञ्च तल्लाभश्चेति समेतसैन्यः कृच्छ्रे सङ्कटप्राप्तौ मतः भोग्यः उपजीव्यः वशोऽनुकूल इति॥४७॥ ज० म०

**लोभाद्भयाद्वाभिगतः कपीन्द्रो न राघवं येन भवेद्विभेद्यः।**
**स्थितः सतां कर्मणि लब्धराज्यः प्रतिप्रियं सोऽभ्यगमच्चिकीर्षुः॥४॥**
**फलाशिनो निर्झरकुञ्जभाजो दिव्याङ्गनानङ्गरसानभिज्ञाः।**

---

रामस्य सुनीतित्वं दर्शयितुमिदमुच्यते

त्वन्मित्रेत्यादि। पश्य निरूपय शरेण वालिवधे सति शत्रोः रामस्य कोऽर्थो न प्रसाधितः न सम्पादितः अपि तु सर्व एव प्रथमं त्वन्मित्रस्य वालिनो नाशः निर्जामित्रस्य सुग्रीवस्य लाभः प्राप्तिः स चेति बुद्धिस्थं परामृशति मित्रस्य क्लीवत्वात् किं वा लाभ इति कर्मणि घञ् मित्रञ्च तल्लाभश्चेति समासः स च मित्ररूपी लाभः मित्रस्य रामस्य कृच्छ्रे व्यसने समेतसैन्यः भोग्यः उपजीव्यः वश्योऽनुकूलः॥ ४७॥ भ०

तं विभिद्य साधयिष्यामीति चेदाह

लोभादित्यादि। क्रुद्धलुब्धभीतावमानिताश्चत्वारो भृत्याः परस्य भेद्याः तत्र कपीन्द्रो राघवं लोभाद्भयाद्वा वासाद्वा नाभिगतः येन हेतुनाऽयं विभेद्यः स्यात् यस्मादसौ सतां मार्गे स्थितः सन् लब्धराज्यो लाभरतः प्रतिप्रियं चिकीर्षुः ॥ ४८॥ ज० म०

अनेन मित्रभेदं कृत्वा तं जेष्यामीत्याशङ्क्येदमुच्यते

लोभादित्यादि। क्रुद्धलुब्धभीतापमानिताश्चत्वारो भेद्या भवन्ति तत्र कपीन्द्रः सुग्रीवः सम्प्रति लोभाद्भयाद्वा राघवं रामं नाभिगतो येन लोभ्यमानो भीतो वा सन् विभेद्यो भेदार्हो भेत्तुं शक्यो वा भवेत् ते त्याः शक्यार्ह इति ण्यण्। स कपीन्द्रः प्राप्तराज्यः साध्वाचारत्वात् सतां मार्गे धर्मे स्थितः सन् प्रतिप्रियं प्रत्युपकारं कर्तुमिच्छुः अभ्यागमत् राममभिगतः लब्धराज्यत्वेन निर्लोभत्वं रामाभिगमेन निर्भयत्वं क्रोधोऽपमानश्चासम्भवान्नोक्तः॥ ४८॥ भ०

तदनुजीविनोऽपि न भेद्या इति दर्शयति

फलाशिन इत्यादि। कपीनामपि मुख्या नीलकुमुदादयोऽपि नोपजप्याः नोपजपितुं शक्याः यतः फलाशिनो मिष्टान्ननिरपेक्षाः निर्झरकुञ्जभाजः न रम्यप्रासादवासिनः दिव्याङ्गनानङ्गरसानभिज्ञाः दिव्याङ्गनासु योऽनङ्गरसः सुरतरसः तदनभिज्ञा मृगजातयः अश्नन्तीति कृत्लिगित्यादिना क्विन्॥ ४९॥ ज० म०

न्यग्जातयो रत्नवरैरलभ्या मुख्याः कपीनामपि नोपजप्याः ॥४९॥
कृताभिषेको युवराजराज्ये सुग्रीवराजेन सुताविशेषम् ।
ताराविधेयेन कथं विकारं तारासुतो यास्यति राक्षसार्थम् ॥५०॥
पश्यामि रामादधिकं समं वा नान्यं विरोधेऽन्यमुपाश्रयेम ।
दत्त्वा वरं सानुशयः स्वयम्भूरिन्द्रादयः पूर्वतरं विरुद्धाः ॥ ५१ ॥

तदनुजीविनोऽपि न भेद्या इति दर्शयन्नाह

फलाशिन इत्यादि। कपीनां मुख्याः श्रेष्ठा हनूमन्नीलकुमुदादयो न उपजप्या न भेदार्हा भेत्तुं न शक्या वा, यतः फलाशिनः मिष्टान्ननिरपेक्षाः निर्झरकुञ्जभाजः न सुवासितजलप्रासादसेविनः दिव्याङ्गनासु योऽनङ्गरसः कामभोगस्तदनभिज्ञाः न्यग्जातयस्तिर्यग्योनयः, अत एव रत्नवरैः इन्द्रनीलपद्मरागादिभिरपि न लभ्याः, अपिशब्दः पूर्वश्लोकापेक्षया ॥ ४९ ॥ भ०

युष्मन्मित्रपुत्रोऽङ्गदोऽप्यभेद्य इति दर्शयन्नाह

कृतेत्यादि। सुग्रीवराजेन ताराविधेयेन ताराचित्तानुवर्त्तिना तारासुतोऽङ्गदः युवराजराज्ये यौवराज्ये कृताभिषेकः, सुताविशेषमिति क्रियाविशेषणं, सुतनिर्विशेषं ममैवायं सुतो न बालिन इति तत्कथं राक्षसार्थे विकारं भेदं यास्यति ? नैवेत्यर्थः ॥५०॥ ज० म०

अस्मन्मित्रपुत्रोऽङ्गदः पितृवधामर्षात् राज्यलोभाच्च भेद्यः, अन्येऽपि कपयस्तत्सेवका एवेत्याशङ्क्येदमुच्यते

कृतेत्यादि। तारासुतोऽङ्गदः कथं राक्षसार्थं राक्षसहेतुकं राक्षसप्रीत्यर्थं वा विकारं भेदं यास्यति ? यतः सुताविशेषं यथा स्यात्तथा सुग्रीवराजेन युवराजराज्ये कृताभिषेकः, कीदृशेन सुग्रीवराजेन ?—ताराविधेयेन ताराचित्तानुवर्त्तिना ; एतेन लब्धैश्वर्य्यत्वात् सुग्रीवायत्ततया मातुरधीनत्वाच्चाभेद्य एवायमिति दार्ढ्यं प्रतिपादितं, सुतोऽविशेषो यत्रेत्यभिषेकक्रियाविशेषणं, ममैवायं पुत्रो न बालिन इत्येवंरूपेणेत्यर्थः। विधेयो विनयग्राहीत्यमरः। अर्थोऽभिधेये शब्दानां धनकारणवस्तुषु। प्रयोजने निवृत्तौ च विषये च प्रवर्त्तते ॥ ५० ॥ भ०

अन्यसमाश्रयादपि रामेण विग्रहो न युज्यते इति दर्शयन्नाह

पश्यामीत्यादि। रामादधिकं ज्यायांसं समानं वा न पश्यामि यं विरोधे विग्रहनिमित्तम् उपाश्रयेम आश्रयं गच्छेम, संप्रश्ने लिङ्। स्वयम्भूः ब्रह्मा तावन्नाश्रयः

**दुर्गाश्रितानां बहुनापि राजन्! कालेन पार्ष्णिग्रहणादिहेतुः।**
**दुर्गोपरोधं न च कुर्वतोऽस्ति शत्रोश्चिरेणापि दशास्य! हानिः॥५२**
**शस्त्रं तरूर्वीधरमम्बु पानं वृत्तिः फलैर्नो गजवाजिनार्थ्यः।**

थतो वरं दत्त्वा सानुशयः विप्रतीसारवान् जातः, किमिदमकार्य्यमनुष्ठितं मया इति, इन्द्रादयस्तु पूर्वतरं विरुद्धाः॥ ५१॥ ज० म०

अन्यमाश्रित्य रामं जेष्यामीत्यत्रेदमुच्यते

पश्यामीत्यादि। रामादधिकं श्रेष्ठं समं तुल्यं वा अन्यं न पश्यामि, विरोधे विग्रहनिमित्तं यम् उपाश्रयेम आश्रयं गच्छेम, विधिनिमन्त्रणेत्यादिना संप्रश्ने स्त्री। तर्हि देवा एवाश्रीयन्तामित्यत आह—स्वयम्भूः ब्रह्मा वरं दत्त्वा सानुशयः पश्चात्तापान्वितः किमिदमकार्य्यं मया कृतमिति, अन्ये इन्द्रादयो देवाः पूर्वकालमेव विरुद्धा व्यरोधयन्त॥ ५१॥ भ०

एवं दुर्गसमाश्रयोऽपि न युज्यत इति दर्शयन्नाह

दुर्गेत्यादि। दुर्गाश्रितानाम् अस्माकं दुर्गोपरोधं कुर्वतः शत्रोः बहुनापि कालेन हे राजन्! पार्ष्णिग्रहणादेः आदिशब्दादाटविकान्तपालादिप्रकोपस्य हेतुर्नास्ति यस्मादुपरोधो न भविष्यति अत्र स्थितानां क्षय एव केवलं न च शत्रोरुपरोधं कुर्वतः चिरेणापि हानिः॥ ५२॥ ज० म०

दुर्गमाश्रित्य रामं वञ्चयिष्यामि इत्यत्रेदमुच्यते

दुर्गाश्रितानामित्यादि। हे राजन्! हे दशास्य! दुर्गमाश्रितानामपि अस्माकं बहुनापि कालेन पार्ष्णिग्रहणमित्रोद्यमादिरूपो हेतुरस्ति तस्मात् दुर्गस्थितानामपि क्षय एव। यद्वा दुर्गाश्रितानामपि अस्माकं पार्ष्णिग्रहणादिहेतुका हानिरवश्यं बहुनापि कालेन भविष्यति जगद्वैरित्वादस्माकमस्मिन्नवसरे अन्येऽपि पार्ष्णिग्राहादयो हानिं करिष्यन्तीत्यर्थः। पार्ष्णिः स्यात् दुर्गमस्त्रियाम्। स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रहे धनेऽपि चेति कोषः। अस्मद्दुर्गोपरोधं कुर्वतस्तु शत्रोश्चिरेणापि कालेन न हानिर्नोपचयो भविष्यति, अस्मदतिरिक्तस्य तद्वैरिणोऽसत्त्वात्। अतो दुर्गाश्रयोऽपि न युज्यते॥ ५२॥ भ०

युद्धशरीरोपयोगिनां सर्वदा सम्भवात् तदेव दर्शयन्नाह

शस्त्रमित्यादि। तरवश्च उर्वीधराश्चेति जातिरप्राणिनामिति एकवद्भावः, तच्छस्त्रं न शूलखड्गादि पानमम्बु, न मैरेयादि, फलैर्वृत्तिर्नौदनादिभिः, नो गजवाजिनार्थ्यः

राष्ट्रं न पश्चान्न जनोऽभिरक्ष्यः किं दुःस्थमाचक्ष्व भवेत्परेषाम् ॥५३॥
सन्धानमेवास्तु परेण तस्मात् नान्योऽभ्युपायोऽस्ति निरूप्यमाणः ।
नूनं विसन्धौ त्वयि सर्वमेतन्नेष्यन्ति नाशं कपयोऽचिरेण ॥ ५४ ॥
विभीषणोक्तं बहु मन्यमानः प्रोन्नम्य देहं परिणामनम्रम् ।
स्खलद्गलिर्वार्द्धककम्प्रमूर्द्धा मातामहो रावणमित्युवाच ॥ ५५ ॥

शरीरमात्रत्वान्निश्चिन्ताः, राष्ट्रं देशो न, पश्चात् अत एव तत्स्थो जनो नाभिरक्ष्यः। एवं च सति परेषां किं दुःस्थम् इत्याचक्ष्व कथय ॥ ५३ ॥ ज० म०

चिरेण युद्धोपयोगिनो वस्तुनः क्षयात्तेषामपि कथं न हानिरित्यत्रेदमुच्यते

शस्त्रमित्यादि। तरूर्वीधरं वृक्षपर्वतं सर्वेषां सुग्रीवादीनां शस्त्रं न खड्गादि, तरवश्च उर्वीधराश्चेति समाहारद्वन्द्वः, अप्राणिजातित्वात् समाहारः इति परः। शस्यते हन्यते अनेनेति शस्त्रम्। उ शस् बधे चासुसिति त्रः। अम्बु जलं पानं पेयं न मद्यादि, पीयते इदमिति कर्मणि अनट्। फलैर्वृत्तिर्जीविका नौदनादिभिः, हस्तिनोऽश्वाः स्त्रियश्च न सन्ति अतः शरीरमात्रत्वान्निश्चिन्ताः, राष्ट्रं देशोऽपि न पश्चादस्ति अत एव अत्रस्थो जनोऽपि रक्षणीयो नास्ति यदर्थं देशगमनं स्यात्। एवं सति परेषां सुग्रीवादीनां किं दुःस्थं भवेत् तत् आचक्ष्व कथय। एतद्विपरीतमस्माकं सर्वमिति भावः ॥ ५३ ॥ भ०

अतो रामेण ज्यायसा सन्धिरेवास्तु न विग्रह इति तदेव दर्शयन्नाह

सन्धानमित्यादि। तस्मात्परेण सन्धिरेवास्तु अन्य उपायो नास्ति, अन्यथा त्वयि विरुद्धबुद्धौ सर्वं कपयो विनाशयिष्यन्तीति ॥ ५४ ॥ ज० म०

सन्धानमित्यादि। तस्मात् पूर्वोक्तकारणात् परेण रामेण सह सन्धिरेव भवतु निरूप्यमाणः चिन्त्यमानोऽन्योऽभ्युपायो नास्ति, त्वयि विसन्धौ सन्धिमकुर्वाणे सति एतत् सर्वं स्वाम्यादिकं कपयोऽचिरेणैव कालेन नाशं नेष्यन्ति प्रापयिष्यन्ति ॥ ५४ ॥ भ०

विभीषणोक्तमित्यादि। बहु मन्यमानः श्लाघमानो मातामहो मातुः पिता माल्यवान् नाम देहं परिणामनम्रं वयसः परिणामान्नमनशीलं प्रोन्नम्य उत्क्षिप्य अत एव स्खलद्गलिः वार्द्धकेन वृद्धभावेन। मनोज्ञादित्वात् वुञ्। कम्प्रः कम्पनशीलो मूर्द्धा यस्य सः रावणमिति वक्ष्यमाणमुवाच ॥ ५५ ॥ ज० म०

विभीषणोक्तमित्यादि। विभीषणस्य उक्तं वाक्यं बहु मन्यमानः श्लाघमानो

एकः पदातिः पुरुषो धनुष्मान् योऽनेकमायानि वियद्गतानि।
रक्षःसहस्राणि चतुर्दशार्दीत् का तत्र वो मानुषमात्रशङ्का ॥५६॥
ब्रह्मर्षिभिर्नूनमयं सदेवैः सन्तापितै रात्रिचरक्षयाय।
नराकृतिर्वानरसैन्यशाली जगत्यजय्यो विहितोऽभ्युपायः ॥ ५७ ॥

मातामहो माल्यवान् इदं प्रोन्नम्य उत्क्षिप्य रावणमिति वक्ष्यमाणमुवाच। कीदृशं इदं?—परिणामनम्रं वयसः परिणामाद्वार्द्धकान्नमनशीलम्। स कीदृशः? स्खलद्वलिः देहोत्क्षेपात् स्खलन्ती वलिर्जराश्लथचर्म यस्य सः। वलिश्चामरदण्डे स्यात् जरसा श्लथचर्मणि। वार्द्धकेन वृद्धत्वेन कम्प्रः कम्पनशीलो मूर्द्धा मस्तको यस्य सः। नमिकम्पिभ्यां हिंसदीपियादिना रः। कम्पमूर्द्धेति पाठे—कम्पते इति कम्पः पचादित्वादच्। वृद्धस्य भावो वार्द्धकं विकारसङ्केति कण् णित्ते वृद्धिरिति वृद्धिः, मातुः पितेत्यर्थे मातृपितृभ्यां तत्पितरि डामहचोऽभिधानात् ॥ ५५ ॥ भ०

एक इत्यादि। एकः असहायः पदातिः न हस्त्याद्यारूढः पुरुषो मनुष्यः धनुष्मान् धनुर्मात्रायुधः चतुर्दश रक्षःसहस्राणि अनेकमायानि वियद्गतानि प्रयातुमशक्यानि परेषामित्यर्थात् आर्दीत् हिंसितवान्। का तत्र वः युष्माकं मानुषमात्रशङ्का? नैवेत्यर्थः ॥ ५६ ॥ ज० म०

एक इत्यादि। यो रामो राक्षसानां चतुर्दश सहस्राणि आर्दीत् जघान तत्र वो युष्माकं का मानुषमात्रशङ्का? मनुष्योऽयमिति को वितर्कः? नैवेत्यर्थः। कीदृशः? एकः असहायः, तत्रापि पदातिः न हस्त्यश्वाद्यारूढः, पुरुषः मनुष्यो न देवादिः, धनुष्मान् धनुर्मात्रायुधः। कीदृशानि?—अनेकमायानि बहुकपटयुक्तानि, वियद्गतानि आकाशे स्थितत्वात् हन्तुमशक्यानि, सहस्रशब्दस्यासंख्यमात्रवाचित्वेऽपि परम्परया गुणगुणिनोरभेदविवक्षया वा हननकर्मत्वं चतुर्दशसहस्रावच्छिन्नरक्षांसि आर्दीत् इत्यर्थः ॥५६॥ भ०

किन्तु दिव्योऽसाविति तदेव दर्शयन्नाह

ब्रह्मेत्यादि। सदेवैः ब्रह्मादिभिः सन्तापितैः रात्रिचरक्षयाय नूनमयं रामः उपायो विहितः उत्पादितः, नराकृतिः आकृत्यैव केवलं नरः वानरसैन्यशाली अपि अजय्यो जेतुमशक्यः ॥ ५७ ॥ ज० म०

यदि न मानुषमात्रं तर्हि कीदृशोऽयमित्यत्र भेद उच्यते

ब्रह्मर्षिभिरित्यादि। ब्रह्मर्षिभिः ऋष्यशृङ्गादिभिः रात्रिचराणां राक्षसानां

वज्राभिघातैरविरुग्णमूर्त्तेः फेनैर्जलानामसुरस्य मूर्द्धः।
चकार भेदं मृदुभिर्महेन्द्रो यथा तथैतत्किमपीति बोध्यम् ॥५८॥
क्व स्त्रीविषह्याः करजाः क्व वक्षो दैत्यस्य शैलेन्द्रशिलाविशालम्।
सम्पश्यतैतत् द्युषदां सुनीतं बिभेद तैस्तन्नरसिंहमूर्त्तिः ॥ ५९ ॥

क्षयाय नाशाय नूनमयं रामोऽभ्युपायो विहितः कृतः। कीदृशैः ? सदेवैः देवतासहितैः, सन्तापितैः पीड़ितैस्त्वयेत्यर्थात् उपायविधाने बीजमिदम्। कीदृशः ? नराकृतिः मनुष्यरूपी देवविशेषः, वानरसैन्येन युक्तः शोभमान इति विद्यासागरः। जगति अजय्यः जेतुं न शक्यः ॥ ५७ ॥ भ०

दृष्टश्चैवंप्रकारी देवानां मयेति दर्शयन्नाह

वज्रेत्यादि। असुरस्य नमुचेः वज्राभिघातैरपि अविरुग्णमूर्त्तेः अचूर्णितशरीरस्य सम्बन्धिनी मूर्द्धा जलफेनैर्मृदुभिः भेदं चकार यथा तथेदमपि शमे स्थितानामपि देवानां नराकृति वस्तु किमपीति बोद्धव्यम् ॥ ५८ ॥ ज० म०

दृष्टश्चैवंविधप्रकारी देवानामिति दर्शयितुमिदमुच्यते

वज्रेत्यादि। वज्रस्याभिघातैरपि अविरुग्णमूर्त्तेः अभग्नावयवस्य असुरस्य नमुचिनाम्नः सम्बन्धिनी मूर्द्धा मस्तकस्य भेदं छेदं मृदुभिरपि जलानां फेनैर्महेन्द्रश्चकार यथा तथा इदमपि नराकृति किमपि वस्तु देवानामपि बोध्यं ज्ञेयं भवद्भिरित्यर्थात् ॥५८॥ भ०

अन्यथा कथं फेनपिण्डैर्विनाश इत्याह

क्व स्त्रीत्यादि। स्त्रीविषह्याः स्त्रीभिः सोढुं शक्याः करजाः नखाः क्व ? दैत्यस्य हिरण्यकशिपोः शैलेन्द्रशिलाविशालं वक्षः क्व ? च वक्षःकरजयोरपि दूरमन्तरं तथापि द्युषदां देवानाम् एतत्सुनीतं सुनयं सम्पश्यत यत् तैर्नखैर्नरसिंहमूर्त्तिः तद्वक्षो बिभेद ॥ ५९ ॥ ज० म०

क्व स्त्रीत्यादि। स्त्रीभिरपि विशेषेणाक्लेशेन सोढुं शक्याः करजा नखाः क्व ? दैत्यस्य हिरण्यकशिपोः शैलेन्द्रशिलावद्विशालं वक्षश्च क्व ? अत्यन्तासम्भवे क्वद्वयं, तथापि द्युषदां देवानामेतत् सुनीतं सुनयं यूयं पश्यत यतस्तैः करजैस्तद्वक्षो नरसिंहमूर्त्तिः देवो बिभेद, तद्वन्मनुष्योऽपि राक्षसान् हनिष्यतीति भावः। दितेरपत्यमिति वाहाद्यतीऽञ्चावादेरित्यादिना गर्गादित्वात् ण्यः ॥ ५९ ॥ भ०

प्रमादवांस्त्वं च्युतधर्मवर्त्मा गतो मुनीनामपि शत्रुभावम्।
कुलस्य शान्तिं बहु मन्यसे चेत् कुरुष्व राजेन्द्र! विभीषणोक्तम्॥६०॥
घोषेण तेन प्रतिलब्धसंज्ञो निद्राविलाक्षः श्रुतकार्य्यसारः।
स्फुरन्घनः साम्बुरिवान्तरीक्षे वाक्यं ततोऽभाषत कुम्भकर्णः॥६१॥
क्रियासमारम्भगतोऽभ्युपायो नृद्रव्यसम्पत् सह देशकालौ।
विपत्प्रतीकारयुतार्थसिद्धिर्मन्त्राङ्गमेतानि वदन्ति पञ्च॥ ६२॥

यत्रैवमुपायेन देवैर्निहन्यते तत्र त्वं कथं प्रमादी मुह्यसीत्याह

प्रमादवानित्यादि। त्वं यतः प्रमादी अजितेन्द्रियत्वात् च्युतधर्मवर्त्मा त्यक्ताचारः अतो मुनीनामपि शमे स्थितानां शत्रुत्वं गतः, ईदृशोऽपि कुलस्य शान्तिं बहु मन्यसे चेत् श्लाघसे यदि हे राजेन्द्र! कुरुष्व विभीषणोक्तम्॥ ६०॥ ज० म०

प्रमादवानित्यादि। हे राजेन्द्र! कुलस्य शान्तिं कल्याणं त्वं चेत् यदि बहु मन्यसे तदा विभीषणोक्तं कुरुष्व। कीदृशस्त्वं? प्रमादवान् असावधानस्त्यक्तधर्म्मपथो-ऽजितेन्द्रियत्वात् मुनीनां समदर्शिनामपि शत्रुत्वं प्राप्तः। यदेव देवैरुपायेन हिरण्यकशिपु-प्रभृतयोऽपि हन्यन्ते स्म तदा प्रमादिनस्ते कथं रक्षा स्यादिति भावः॥ ६०॥ भ०

घोषेणेत्यादि। प्रहस्तविभीषणमातामहानां वदतां यो घोषः तेन प्रतिलब्धसंज्ञो विबुद्धः कुम्भकर्णो निद्राविलाक्षः निद्रया कषायितचक्षुः श्रुतकार्य्यसारः श्रुतकार्य्यशरीरः ततः कार्य्यसारश्रवणानन्तरं वाक्यम् अभाषत। यथा घनः साम्बुः सजलोऽन्तरीक्षे वियति स्फूर्जति तद्वत् स्फूर्जन्निति॥ ६१॥ ज० म०

घोषेणेत्यादि। मातामहवचनानन्तरं कुम्भकर्णो वाक्यं वक्ष्यमाणम् अभाषत उक्त-वान् सजलो मेघ इव अन्तरीक्षे स्फुरन् अत्युच्चत्वादासनस्यान्तरीक्षतुल्यत्वाद्वा तेन प्रहस्तविभीषणमातामहानां घोषेण शब्देन प्रतिलब्धसंज्ञः विबुद्धः अत एव निद्राविलाक्षः निद्रया कलुषीकृतचक्षुः श्रुतकार्य्यसारः अवगतकार्य्यसारः॥ ६१॥ भ०

कार्य्यं निश्चित्य सदसि भाषणानि न पञ्चाङ्गमन्त्रं विनेति साङ्गं तं तावदुपदर्शय-न्नाह

क्रियेत्यादि। क्रियाणां दुर्गादिकर्म्मणां यः समारम्भस्तं गतः प्राप्तो योऽभ्युपायः कर्म्मणामारम्भोपायः इत्यर्थः। इदमेकमङ्गं नृद्रव्यसम्पत् पुरुषाणां द्रव्याणाञ्च सम्प-दिति द्वितीयं, द्वयोः सहवचनं योगवाहित्वज्ञापनार्थं सह देशकालेति यस्मिन् देशे

**न निश्चितार्थं समयञ्च देशं क्रियाभ्युपायादिषु योऽतियायात् ।**
**स प्राप्नुयान्मन्त्रफलं न मानी काले विपन्ने क्षणदाचरेन्द्र ! ॥६३॥**
**औष्ण्यं त्यजेन्मध्यगतोऽपि भानुः शैत्यं निशायामथवा हिमांशुः ।**

काले च कार्य्यसिद्धिस्ताभ्यां सह वर्त्तते इति तृतीयम् । अत्रापि सहवचनं योगादेव कर्म्मणामनुष्ठीयमानानां या विपत् तस्याः प्रतीकारस्तेन युक्तेति चतुर्थम्, अर्थसिद्धिः कार्य्यसिद्धिरिति पञ्चमम् । एतानि पञ्च मन्त्रस्याङ्गानि वदन्ति नीतिज्ञाः ॥६२॥ ज०म०

मन्त्रणां विना कथनमयुक्तमिति साङ्गं मन्त्रमुपदिशति

क्रियेत्यादि । एतानि पञ्च मन्त्राङ्गं वदन्ति नीतिविदः, क्रियाणां दुर्गादिकर्म्मणां यः समारम्भस्तदङ्गतस्तत्सम्बन्धी योऽभ्युपायः येन कर्मारम्भो भवतीत्येकमङ्ग', नृणां मनुष्याणां द्रव्याणाञ्च सम्पदिति द्वितीयं, द्वयोः सहकथनं परस्परोपयोगसूचनार्थं सह-देशकाला देशकालाभ्यां सहिता सम्पदित्यन्वयः । तेन यस्मिन् देशे यस्मिन् काले च सिद्धिस्तदुभयविशिष्टं तृतीयम् । अत्र सहवचनं योगवाहित्वसूचनाय अनुष्ठीयमानानां कर्म्मणां या विपत् तस्या यः प्रतीकारः तेन युक्ते सति चतुर्थम् । अस्य कार्य्यस्य सिद्धिरिति पञ्चमं मन्त्राङ्गमित्येकवचनेन मिलितानामेषामङ्गत्व', न तु प्रत्येकमिति सूच्यते सामान्यविशेषभावः इत्यन्ये ॥ ६२ ॥ भ०

न निश्चितेत्यादि । विनिश्चितार्थोऽवश्यं सिध्यतीति यस्मिन् समये काले देशे च कार्य्यसिद्धिः तादृशं समयं देशं च यो विजिगीषुर्नातियायात् नातिक्रामेत् प्रतिषेध्यस्य द्वित्वात् प्रतिषेधद्वयं योज्यं समयं च देशमिति पाठान्तरे—समुच्चयेनैक एव योज्यः क्रियाभ्युपायादिषु सत्सु, आदिशब्दात् पुरुषद्रव्यसम्पद्विपत्प्रतीकारे च स प्राप्नुयान्मन्त्र-फलं हे क्षणदाचरेन्द्र ! न पुनर्मानी भवादृशः काले विपन्ने प्राप्नोति स हि देशकालौ हापयति ॥ ६३ ॥ ज० म०

न निश्चितार्थमित्यादि । क्रियाभ्युपायादिषु मध्ये निश्चितार्थं निश्चितोऽर्थोऽवश्यं सिध्यति यस्मिन् समये काले देशे च तादृशं समयं कालं देशञ्च यो जिगीषुर्नाति-यायात् नातिक्रामेत् हे राक्षसेन्द्र ! स एव मन्त्रफलमर्थसिद्धिं प्राप्नुयात् न पुनर्मानी भवादृशः काले विपन्नेऽतिक्रान्ते सति प्राप्नोति । यदैव सीताहरणं कर्त्तुमिष्टं तदैव मन्त्रणा युक्ता मानित्वान्न कृत्वा सम्प्रति किं मन्त्रेण साध्यमिति भावः ॥ ६३ ॥ भ०

औष्ण्यमित्यादि । हे पिशिताशिनाथ ! भानुर्मध्यगतोऽपि मध्याह्नेऽपि औष्ण्यम्

अनर्थमूलं भुवनावमानी मन्ये न मानं पिशिताशिनाथ ! ॥६४॥
तथापि वक्तुं प्रसभं यतन्ते यन्मद्विधाः सिद्धिमभीप्सवस्त्वाम्।
विलोमचेष्टं विहितावहासाः परैर्हि तत् स्नेहमयैस्तमोभिः ॥६५॥
क्रूराः क्रिया ग्राम्यसुखेषु सङ्गः पुण्यस्य यः संचयहेतुरुक्तः।
निषेवितोऽसौ भवतातिमात्रं फलत्यवल्गु ध्रुवमेव राजन् ! ॥६६॥

---

उष्णतां त्यजेत्। सम्भावने लिङ्। अथवा हिमांशुर्निशायामपि शैत्यं त्यजेत् भुवनावमानी पुनर्भुवनमवमन्तुं शीलमस्येति नास्ति मत्सम इति स भवादृशो मानं न त्यजेत् अनर्थमूलम् अनर्थस्य कारणम् एवं मन्ये जानामि ॥ ६४ ॥ ज० म०

औष्ण्यमित्यादि। हे पिशिताशिनाथ ! राक्षसानामीश्वर ! भानुर्नभोमध्ये गतोऽपि मध्याह्नस्थितोऽपि वा उष्णतां त्यजेत्, अथवा हिमांशुश्चन्द्रो निशायामपि शीतत्वं त्यजेत्। सम्भावने स्त्री। कदाचिदेवमपि सम्भाव्यते, न तु भुवनावमानी जगदवज्ञाशीलो भवादृशः अनर्थस्य मूलं कारणं त्यजेदित्यहं मन्ये। एतेन सम्प्रत्यपि सीतासमर्पणादेव रक्षा तच्च त्वया मानिना कदापि न कार्य्यमिति भावः। भुवनान्यवमन्यत इति ग्रहादित्वात् णिन् भुवनान्यवमन्तुं शीलं यस्येति परः ॥ ६४ ॥ भ०

तथापीत्यादि। तथापि एवमपि सति मद्विधाः सिद्धिं कार्य्यनिष्पत्तिमभीप्सवः आप्तुमेषणशीलाः यत्त्वां विलोमचेष्टं प्रतिकूलचेष्टितं प्रसभमाहृत्य वक्तुं यतन्ते परैः दूतजनैः शत्रुजनैर्वा विहितावहासा एवंविधा अप्युपदिशन्तीति। वाशब्दः पादपूरणे। तत् स्नेहमयैः स्नेहस्वभावैस्तमोभिरज्ञानैः स्नेहतमसावृता ब्रुवन्तीत्यर्थः ॥ ६५ ॥ ज० म०

तथापीत्यादि। यद्यपि त्वमेवंविधस्तथापि कार्य्यस्य सिद्धिं प्राप्तुमिच्छवो मद्विधा विभीषणादयः परैः अस्मदुक्तावज्ञापरैः प्रहस्तादिभिः शत्रुभिर्वा विहितावहासाः कृतोपहासा अपि सन्तः, विलोमचेष्टं प्रतिकूलकारिणं त्वां प्रसभं बलाद्वक्तुं यत् यतन्ते तत् स्नेहमयैः स्नेहरूपैस्तमोभिरज्ञानैर्हेतुभिरेव स्नेहादेवमपि त्वां वक्तुं यतन्ते इत्यर्थः। यद्वा यतो वक्तुं यतन्ते तस्मात् स्नेहमयैस्तमोभिरुपलक्षिता इत्यर्थः। हिशब्दोऽवधारणे, पादपूरणे इत्यन्ये ॥ ६५ ॥ भ०

क्रूरा इत्यादि। क्रूराः क्रियाः परहिंसादयः ग्राम्यसुखेषु परदारोपभोगादिषु सङ्गः प्रसक्तिः यः पुण्यस्यार्जितस्य संचयहेतुरुक्तः विद्यावृद्धैः असौ भवतातिमात्रं सुष्ठु निषेवितः सन्। हे राजन् ! इदानीं फलति फलं ददाति, अवल्गु असारं ध्रुवम् अविनाशम् ॥ ६६ ॥ ज० म०

दत्तं न किं के विषया न भुक्ताः स्थितोऽस्मि वा कं परिभूय नोच्चैः ।
इत्थं कृतार्थस्य मम ध्रुवं स्यान्मृत्युस्त्वदर्थे यदि किन्न लब्धम् ॥६७
किं दुर्नयैस्त्वय्युदितैर्मृषार्थैर्वीर्य्येण वक्तास्मि रणे समाधिम् ।
तस्मिन् प्रसुप्ते पुनरित्थमुक्त्वा विभीषणोऽभाषत राक्षसेन्द्रम् ॥६८॥

क्रूरा इत्यादि । क्रूराः क्रिया हिंसात्मिका ग्राम्यसुखेषु परदारोपभोगादिषु सङ्ग आसक्तिरिति पुण्यस्य संचयहेतुः विनाशकारणं य उक्तो वेदविद्भिः असौ भवता अतिमात्रम् अत्यर्थं निषेवितः सन् । हे राजन् ! अवल्गु अमनोहरं कुलक्षयं ध्रुवमेव फलति अवल्गु यथा स्यात्तथा फलति फलं दास्यतीति वा । भविष्यत्सामीप्ये क्तो अभिधानात् ॥ ६६ ॥ भ०

तस्मादिविलोमचेष्टस्य भवतो हितोपदेशे मम न किञ्चित् प्रयोजनं तावत्तु स्यात् त्वदर्थे मत्प्राणत्याग इति दर्शयन्नाह

दत्तमित्यादि । तव प्रसादादर्थिभ्यः किं न दत्तं ? के विषया न भुक्ताः ? सर्व एवानुभूताः । कं वा परिभूय तिरस्कृत्य उच्चैर्महति पदे न स्थितोऽस्मि इत्थमनेन प्रकारेण कृतार्थस्य लब्धजन्मफलस्य मम यदि त्वदर्थे मृत्युः अवश्यं स्यात् तदा किं न लब्धं ? सर्वमेव जन्मफलं लब्धमित्यर्थः ॥ ६७ ॥ ज० म०

किं विलोमचेष्टस्य भवतो मर्मोपदेशेन त्वदर्थे प्राणा एव त्याज्या इति दर्शयितुमिदमुच्यते

दत्तमित्यादि । किं न दत्तं ? बन्धुयाचकादिभ्यो मया अपि तु सर्वं दत्तं तव प्रासादादिति वाक्यशेषः,किं वा त्वया मह्यं किं न दत्तम् ? अपि तु सर्वं दत्तमेव । के विषया स्रक्चन्दनादयो मया न भुक्ताः ? अपि तु सर्व एवोपभुक्ताः । किंवा उच्चैर्महद्वस्तु परिभूय न स्थितोऽस्मि, किंवा परिभूय उच्चैर्महति पदे न स्थितोऽस्मीति वा । कं वेति पाठे—जनमिति शेषः । अपि तु सर्वमेव तिरस्कृत्य स्थितोऽस्मीत्यर्थः । इत्थम् अनेन प्रकारेण कृतार्थस्य लब्धजन्मफलस्य मम यदि त्वदर्थे मृत्युः ध्रुवम् अवश्यं स्यात् तदा किं न लब्धं ? सर्वमेव फलं प्राप्तमिति भावः ॥ ६७ ॥ भ०

तव पुनरद्यापि विभीषणोक्तं युक्तं न प्रहस्तमुखोक्तमिति दर्शयन्नाह

किं दुर्नयैरित्यादि । त्वय्यपि स्थिते किं यौरधोऽस्मीत्यादिना यान्युदितान्ययुक्तानि अलीकार्थानि तैर्दुर्नयैः किं न किञ्चित् फलं, कस्मादिति चेत् ? यस्मात्तेषां समाधिं प्रतीकारं संग्रामे रामसम्बन्धिना वीर्य्येण वक्तास्मि वदिताहं रामवीर्य्य-

निमित्तशून्यैः स्थगिता रजोभिर्दिशो मरुद्भिर्विकृतैर्विलोलैः।
स्वभावहीनैर्मृगपक्षिघोषैः क्रन्दन्ति भर्त्तारमिवाभिपन्नम्॥६९॥
उत्पातजं छिद्रमसौ विवस्वान् व्यादाय वक्त्राकृति लोकभीषम्।
अत्तुं जनान् धूसररश्मिराशिः सिंहो यथा कीर्णसटोऽभ्युदेति॥७०॥

प्रतीकारात् हि इत्यर्थः, इत्थमेवं तस्मिन् कुम्भकर्णे उक्त्वा पुनः भूयः प्रसुप्ते सति विभीषणो राक्षसेन्द्रम् अभाषत॥ ६८॥ ज० म०

किं दुर्नयैरित्यादि। प्रहस्तादीनामुदितैर्वाक्यैः किं द्यौरधोऽस्त्वित्यादिभिरपार्थैर्व्यलीकैर्दुर्नयैर्नीतिरहितैस्त्वयि विषये किं फलं यतस्तेषां वाक्यानां समाधिं प्रतीकारं रणे रामसम्बन्धिना वीर्य्येणाहं वक्तास्मि वदितास्मि। रामविक्रमेणैतद्वचनानां मिथ्यात्वं ज्ञास्यसि, अतो विभीषणवचनमेव उचितं न प्रहस्तादिवचनमित्यर्थः। इत्थम् एवमुक्त्वा तस्मिन् कुम्भकर्णे प्रसुप्ते निद्रिते सति विभीषणो राक्षसेन्द्रं पुनः अभाषत॥ ६८॥ भ०

निमित्तशून्यैरित्यादि। रजोभिर्निमित्तशून्यैः निर्निमित्तैः दिशः स्थगिताः सञ्छादिताः। स्थग संवरणे, मरुद्भिश्च विकृतैः परुषैर्विलोलैरनियतदिग्वर्त्तिभिः स्थगिताः मृगपक्षिणाञ्च घोषैः स्वभावहीनैर्भ्रष्टैर्भर्त्तारमिवाभिपन्नं मृतं शोकात् क्रन्दन्ति॥ ६९॥ ज० म०

सम्प्रति रावणस्य भयोत्पादनार्थं दुर्निमित्तं कथ्यते

निमित्तेत्यादि। दिशः स्वभावात् हीनैर्विकृतैर्मृगाणां पक्षिणाञ्च घोषैः शब्दैः अभिपन्नं मृतं भर्त्तारं शोकात् क्रन्दन्ति इव। कीदृश्यः दिशः? निमित्तशून्यैः प्राणिव्यापाररूपकारणशून्यैः रजोभिः धूलिभिः स्थगिताः आच्छादिताः। स्थगे संवृतौ। मरुद्भिश्च स्थगिताः, चकारोऽत्राध्याहार्य्यः। किं वा वायुभिः कर्तृभिर्धूलिभिः करणभूताभिः स्थगिताः। कीदृशैः मरुद्भिः?—विकृतैः प्रचण्डैः विलोलैः अनियतदिग्वर्त्तिभिः॥६९॥ भ०

उत्पातजमित्यादि। असौ विवस्वान् छिद्रम् उत्पातजं वक्त्राकृति लोकभीषं लोकस्य भयानकं व्यादाय प्रसार्य्य, व्याङ्पूर्वस्य ददातेः क्त्वो ल्यपि रूपम्। जनानत्तुं भक्षयितुं धूसररश्मिराशिः सन् अभ्युदेति उद्गच्छति, यथा सिंहः कीर्णसटः विक्षिप्तकेसरकलापः मुखं व्यादाय अत्तुम् उत्तिष्ठति तद्वदिति॥ ७०॥ ज० म०

उत्पातजमित्यादि। असौ धूसरकिरणजालो विवस्वान् सूर्य्यः छिद्रं व्यादाय

मार्गं गतो गोत्रगुरुर्भृगूणामगस्तिनाध्यासितविन्ध्यशृङ्गम्।
संदृश्यते शक्रपुरोहितोऽह्नि क्ष्मां कम्पयन्त्यो निपतन्ति चोल्काः॥७१॥
मांसं हतानामिव राक्षसानामाशंसवः क्रूरगिरो रुवन्तः।
क्रव्याशिनो दीप्तकृशानुवक्त्रा भ्राम्यन्त्यभीताः परितः पुरं नः॥७२॥
पयो घटोध्नीरपि गा दुहन्ति मन्दं विवर्णं विरसञ्च गोपाः।

प्रसार्य्य जनानत्तुं भक्षयितुम् अभ्युदेति। यथा सिंहः कीर्णसटः प्रसारितकेसरकलापः सन् मुखं व्यादाय भक्षयितुम् उत्तिष्ठति तद्वत्।:कीदृशं छिद्रम्?—उत्पातजमुत्पाते अनिष्टे सति जातं वक्राकृति मुखसदृशं लोकस्य तीक्ष्णं भयजनकं भीष्ममिति क्वचित् पाठः भीममपि क्वचित् सूर्य्ये छिद्रं लोकसङ्क्षयाय भवतीति प्रसिद्धिः॥७०॥ भ०

मार्गमित्यादि। अगस्तिना यदध्यासितं विन्ध्यशृङ्गं तन्मार्गं भृगूणां गोत्रगुरुः शुक्रो गतः दक्षिणमार्गचारी शुक्र इत्यर्थः। शक्रपुरोहितोऽपि वृहस्पतिः अह्नि दिवसे संदृश्यते उल्काश्च क्ष्मां पृथिवीं कम्पयन्त्यः निपतन्ति॥७१॥ ज० म०

मार्गमित्यादि। अगस्त्येन मुनिना अध्यासितम् अधिष्ठितं विन्ध्यपर्वतस्य शृङ्गं यत्र तदेव वर्त्म भृगूणां भृग्वपत्यानां गोत्रगुरुः कुलगुरुः शुक्रो गतः दक्षिणमार्गचारी शुक्रोऽनिष्टहेतुरिति प्रसिद्धिः। नामन्ये तिकचेति अस्यतेस्तिक् अगस्त्यास्तिरगस्तिः मनीषादित्वादकारलोपः अगस्त्योऽगस्तिरिति शब्दभेदः। भृगूणामिति भृग्वत्र्याङ्गिर इत्यादिना अपत्यप्रत्ययलोपः। शक्रपुरोहितो वृहस्पतिः अह्नि दिवसे संदृश्यते, उल्काः क्ष्मां पृथिवीं कम्पयन्त्यो निपतन्ति॥७१॥ भ०

मांसमित्यादि। राक्षसानां हतानामिव मांसम् आशंसवः आशंसनशीलाः सन्माशंसभिक्ष उः, मांसभुजः शृगालादयः क्रूरगिरः परुषस्वनाः ज्वलनसदृशवदनाः निर्भयाः परितो भ्रमन्ति॥७२॥ ज० म०

मांसमित्यादि। क्रव्याशिनः शृगालादयः निर्भयाः सन्तो रुवन्तो नदन्तो नोऽस्माकं पुरं लङ्कां परितः सर्वतो भ्राम्यन्ति, भमु ज ण चाले क्रमक्लमभ्रमेति पक्षे श्यन्, शमादित्वात् दीर्घः, धिक् समयेत्यादिना परितोयोगे द्वितीया। क्रव्याशिनः कीदृशाः?—हतानामिव राक्षसानां मांसं भक्षयितुम् आशंसवः आकाङ्क्षन्तः सनभिक्षाशंस उरित्युप्रत्ययः। क्रूरगिरो भीषणनादाः दीप्तकृशानुवक्त्राः उल्कामुखाः॥७२॥ भ०

पय इत्यादि। क्षीरं विवर्णं दुर्वर्णं विरसम् अस्वादु मन्दम् अल्पं पयस्विनीरपि

हव्येषु कीटोपजनः सकेशो न दीप्यतेऽग्निः सुसमिन्धनोऽपि॥७३॥
तस्मात् कुरु त्वं प्रतिकारमस्मिन् स्नेहान्मया रावण! भाष्यमाणः।
वदन्ति दुःखं ह्यनुजीविवृत्ते स्थिताः पदस्थं परिणामपथ्यम् ॥७४॥
विरुग्णसङ्कीर्णविपन्नभिन्नैः प्रक्षुस्संक्षीणमिताख्यवृक्णैः।

दुहन्ति अकथितं चेति द्विकर्म्मकता। तथा शोभनेन्धनोऽपि अग्निर्न दीप्यते हव्येषु हवनीयेषु घृतादिषु सत्सु अचो यत्, उपजननमुपजनः भावे घञ् जनिवध्योश्चेति न वृद्धिः। कीटानामुपजनोऽस्येति कीटोपजनः सह केशैः सकेशः दह्यमानकीटकेश इत्यर्थः॥ ७३ ॥ ज० म०

पय इत्यादि। गोपा घटोध्नीरपि पीवरस्तनीरपि गा मन्दम् अल्पं विवर्णं स्वाभाविकवर्णहीनं विरसमस्वादु पयो दुहन्ति मोचयन्ति। घट इव ऊधस्तनी यासां, स्वश्चोध इति ङीप् सस्य नकारश्च। गवां गणाः प्रस्नुतपीवरोधस इत्यादि प्रयोगास्तु ङीप्येव सस्य नकारभावात् सदानोऽल्लोपः इति अनोऽल्लोपः। गां पान्ति रक्षन्तीति गोपाः, हनजनादिति डः। हव्येषु हवनीयेषु घृतादिषु केशैः सह कीटोपजनः कीटजन्म भवति, घञि जनवध इति ह्रस्वः। शोभनसम्यगिन्धनयुक्तोऽपि अग्निर्न दीप्यते न ज्वलति। केचित्तु हव्येषु सत्स्वपि अग्निर्न दीप्यते, कीदृशः?—कीटस्योपजनो यत्रेति व्याचक्षते॥ ७३ ॥ भ०

तस्मादित्यादि। यस्मादेवं विनाशसूचकानि निमित्तानि दृश्यन्ते तस्मात् हे रावण! स्नेहात् मया त्वं भाष्यमाणः अस्मिन् वस्तुनि प्रतीकारं सीताप्रत्यर्पणेनैव सन्धानं कुरु। उपसर्गस्य घञीति बहुलं दीर्घः कस्मादेवं भाष्यत इति चेत्? यस्मादनुजीविवृत्तेऽवस्थिताः यद्वचनं दुःखं दुःखहेतु तदा कटुकत्वात् परिणामपथ्यम् आयत्यां हितं तत्पदस्थं स्वामिपदे स्थितं वदन्ति॥ ७४ ॥ ज० म०

तस्मादित्यादि। यत एवंविधानि विनाशसूचकानि निमित्तानि दृश्यन्ते तस्मात् हे रावण! मया स्नेहाद्भाष्यमाणस्त्वम् अस्मिन् प्रकृते वस्तुनि प्रतीकारं सीताप्रत्यर्पणं सन्धिं कुरु। कुत एवमप्रियं कथ्यत इत्याह—हि यस्मादनुजीविवृत्ते सेवककर्म्मणि स्थिता जना दुःखमापाततः कटुत्वात् दुःखजनकमपि परिणामपथ्यमुत्तरकाले हितं वचः स्वामिपदे स्थितं जनं वदन्ति दुःखहेतावपि दुःखशब्दप्रयोगो दृश्यते यथा कष्टं व्याकरणम्। पदे तिष्ठतीति हनजनादिति डः॥ ७४ ॥ भ०

विरुग्णेत्यादि। यावद्रिपुः नराशैः राक्षसैः शवाशान् गृध्रशृगालादीन्

यावन्नराग्र्यैर्न रिपुः शवाशान् सन्तर्पयत्यानम तावदस्य ॥ ७५ ॥
भ्रूभङ्गमाधाय विहाय धैर्य्यं विभीषणं भीषणरूक्षचक्षुः ।
गिरं जगादोग्रपदामुदग्रः स्वं स्फावयन् शक्ररिपुः प्रभावम् ॥७६॥

शवमश्नन्तीति कर्मण्यण् । न सन्तर्पयति न प्रीणयति तावदस्य रिपोः आनम चरणा-
वित्यर्थात् । कीदृशैः ? विरुग्णैर्भिन्नाङ्गैः ओदितश्चेति निष्ठानत्वं, रुक्षीर्णैः इतस्ततो
विचित्रैः विपन्नैर्मृतैर्भिन्नैर्विदारितदेहैः प्रक्षुण्णैः एषारदाभ्यामिति णत्वं, संक्रीणैः
लज्जितैः वयमेवमवस्थां नीता इति, शितेन तीक्ष्णेन अस्त्रेण वृक्णैः छिन्नैः ग्रहि-
ज्यादि इति सम्प्रसारणं संयोगादिलोपः कुत्वञ्च ओदित्त्वात् नत्वम् ॥ ७५ ॥ ज० म०

विरुग्णेत्यादि । यावत् रिपुः रामो नराग्र्यैः राक्षसैः शवाशान् मृतभक्षकान्
शृगालादीन्न सन्तर्पयति, तावदस्य रिपोस्त्वम् आनम प्रणम, अस्येति समार्थेनेत्यादिना
कर्मणि षष्ठी । अस्य समीपे आनम नम्रो भव—समीपलक्षणया षष्ठीयमिति
शिष्याधागरः, चरणावित्यध्याहरन्त्यन्ये । कीदृशैः ? विरुग्णैः भग्नाङ्गैः, रुजो भञ्जे
स्वाद्योरिति ओदित्त्वात् तस्य नत्वम् । सङ्कीर्णैः इतस्ततो विक्षिप्तैः कॄ श विक्षेपे
ऋदिरणावितीर् व्यनक्तयौति दीर्घः,पूर्वेण रफात् तस्य नत्वम् । विपन्नैर्मृतैः पदङ्गतौ
विपूर्वो विपत्तिमाह ; पूर्वेण दकारात् तस्य नत्वम् । भिन्नैर्विदारितदेहैः ञ धौ भिदिर्-
भिदि-भिद् विदारणे । प्रक्षुण्णैः संपिष्टैः ञ धौ क्षुदिर् क्षुदि क्षुत् संचूर्णनम् । संक्रीणै-
र्लज्जितैर्वयमपीदृशीं दशां प्राप्ता इति मत्वा । ह्री लज्जे,ह्रीघ्रार्त्तीन्देति तस्य पक्षे नत्वम्,
शितास्त्रेण वृक्णैश्छिन्नैः, व्रश्चश् छेदे, व्रश्चेः कङ् चेति तस्य नत्वं, कङ्चस्य कत्वे तन्नि-
मित्तस्य शस्य सत्वे स्यादेः सो लोपः ग्रहस्वपाद्योरिति जिः ॥ ७५ ॥ भ०

भ्रूभङ्गमित्यादि । शक्ररिपुर्दशानन: विभीषणवचनात् क्रुद्धः भ्रूभङ्गं भ्रूकुटि-
माधाय आबध्य धैर्य्यं विहाय त्यक्त्वा भीषणरूक्षचक्षुः भयानकपरुषचक्षुः उदग्रः
उन्नामितदेहः स्वं प्रभावं विक्रमं स्फावयन् वर्द्धयन् ; स्फायीव इति णौ वत्वं विभी-
षणं जगाद, गिरं वाचम्, उग्रपदां सुप्तिङन्तानां स्वरूपतोऽर्थतश्च परुषत्वात् ॥
७६ ॥ ज० म०

भ्रूभङ्गमित्यादि । एवं विभीषणवचनात् कोपेन भ्रूभङ्गं भ्रूकुटीम् आधाय
आबध्य धैर्य्यं विहाय त्यक्त्वा शक्ररिपुः रावणः प्रभावं स्वकीयं विक्रमं स्फावयन्
वर्द्धयन् विभीषणं गिरं वाचं जगाद । कीदृशः ?—भीषणं भयानकं रूक्षं परुषं
चक्षुर्यस्य तादृशः, उदग्रः उन्नमितदेहः । गिरं कीदृशीम् ?—उग्रपदां स्वरूपतोऽर्थतश्च

**शिला तरिष्यत्युदके न पर्णं ध्वान्तं रवेः स्रंस्यति वह्निरिन्दोः।**
**जेता परोऽहं युधि जेष्यमाणस्तुल्यानि मन्यस्व पुलस्त्यनप्तः!॥७७॥**
**अनिर्वृतं भूतिषु गूढवैरं सत्कारकालेऽपि कृताभ्यसूयम्।**
**विभिन्नकर्माशयवाक् कुले नो मा ज्ञातिचेलं भुवि कस्यचिद्भूत्॥७८॥**

---

कठोरत्वात् उग्राणि पदानि यत्र, स्फायी ऊ संहतौ पातिस्फायोरिति वक्॥ ७६॥ भ०

शिलेत्यादि। उदके शिला तरिष्यति न पुनः पर्णं, रवेः सूर्य्यात् ध्वान्तम् अन्धकारं स्रंस्यति स्रविष्यति स्रन्सू प्रस्रवणे इत्यस्मात् न वृद्भ्यश्चतुर्भ्यः इतीट् भवति स्यरि चेति चर्त्वं, तथा वह्निरिन्दोः स्रंस्यति अहमप्येष पर उत्कृष्टः जेता युधि संग्रामे जेष्यमाण इत्येतानि चत्वारि हे पुलस्त्यनप्तः! विभीषण! तुल्यानि मन्यस्व अवगच्छ। लोटि रूपम्। यदि जेताप्यहं परेण जीये शिलातरणादीन्यपि भविष्यन्ति॥ ७७॥ ज० भ०

शिलेत्यादि। उदके जले शिला प्रस्तरस्तरिष्यति न तु पर्णं पत्रं तरति, रवेः सकाशात् ध्वान्तं न स्रंस्यति गलिष्यति इन्दोः सकाशात् वह्निः स्रंस्यति स्रन्सू ऊ वृ स्रुतौ इड्गो नेम् पे स्यसनोरिति इमनिषेधः। अत एव युधि परोऽन्य उत्कृष्टो वा जेता, अहन्तु जेष्यमाणः, हे पुलस्त्यनप्तः! हे पुलस्त्यमुनिपौत्र! एतानि शिलातरणादीनि तुल्यानि मन्यस्व; यदि शिलातरणादिकं संभवेत् तदा मे पराजय इत्यर्थः। पुलस्त्यब्राह्मणस्य भीरुत्वान्नप्तृत्वमपि तादृशमिति नप्तृसम्बोधनेन सूच्यते॥ ७७॥ भ०

अनिर्वृतमित्यादि। भूतिषु ज्ञातिसम्बन्धिनीषु अनिर्वृतम् असुखिनं गूढवैरं काले हनिष्यामीति सम्भृतापकाराशयं सत्कारकालेऽपि पूजाकालेऽपि कृतामर्षं विभिन्नाः कर्माशयवाचो यस्य तद्विभिन्नकर्माशयवाक् आशयोऽन्यो वाक्कर्मणी चान्ये यस्येति ईदृशं ज्ञातिचेलं गर्हितज्ञातिः अस्माकं कुले मा भूत् कस्यचित् अन्यस्य वा मा भूत्। चेलशब्दो गर्हिते वर्त्तते॥ ७८॥ ज० भ०

अनिर्वृतमित्यादि। भुवि ईदृशं ज्ञातिचेलं गर्हितो ज्ञातिः नोऽस्माकं कुले कस्यचित् मा भूत् न भवतु, अस्माकमपि कस्यचित् कुले इत्यर्थो वा। कीदृशं?—भूतिषु ज्ञातिसम्बन्धिनीषु सम्पत्तिषु अनिर्वृतं सुखरहितं गूढवैरं काले हनिष्यामीति गुप्तद्वेषं सत्कारकालेऽपि पूजासमयेऽपि कृताभ्यसूयं कृतामर्षं गुणेऽपि दोषाविष्करणमसूया। विभिन्नाः परस्परविरोधिन्यः कर्माशयवाचो यस्य क्रूरत्वादाशयोऽन्यो वाक्कर्मणी चान्ये इत्यर्थः। चेलो नीचेऽन्यवच्चेलमंशुके गर्हितेऽन्यवदिति विश्वप्रकाशे।

इच्छन्त्यभीक्ष्णं क्षयमात्मनोऽपि न ज्ञातयस्तुल्यकुलस्य लक्ष्मीम् ।
नमन्ति शत्रून् न च बन्धुवृद्धिं सन्तप्यमानैर्हृदयैः सहन्ते ॥ ७९ ॥
त्वयाद्य लङ्काभिभवेऽतिहर्षात् दुष्टोऽतिमात्रं विवृतोऽन्तरात्मा ।
धिक्त्वां मृषा ते मयि दुःस्थबुद्धिर्वदन्निदं तस्य ददौ स पार्ष्णिम् ॥८०॥
ततः स कोपं क्षमया निगृह्णन् धैर्य्येण मन्युं विनयेन गर्वम् ।
मोहं धियोत्साहवशादशक्तिं समं चतुर्भिः सचिवैरुदस्थात् ॥८१॥

यद्यपि चेलशब्दस्य गर्हिते वाच्यलिङ्गत्वमुक्तं तथापि गर्हितेऽप्यवसाने च चेलमाच-त्यते बुधैरित्यनुशासनादत्र क्लीवत्वं सामान्यविवक्षया नपुंसकत्वमिति विद्यासागरः । विशेषणस्य क्वचित् परनिपातोऽभिधानात् ॥ ७८ ॥ भ०

किं मया कृतं येनैवमुच्यते, इति चेदाह

इच्छन्तीत्यादि । ज्ञातयः आत्मनः सुष्ठु क्षयं विनाशमिच्छन्ति, न पुनस्तुल्य-कुलस्य एकहेतुगोत्रस्य लक्ष्मीं श्रियं तथा शत्रून् कामं नमन्ति न पुनर्बन्धुवृद्धिं बन्धु-सन्ततिं सहन्ते, सन्तप्यमानैर्हृदयैः ईर्ष्यया दह्यमानैः ॥ ७९ ॥ ज० म०

किं मया कृतं येनैवमुच्यते, इति चेदाह

इच्छन्तीत्यादि । ज्ञातयो वरम् आत्मनोऽपि क्षयमभीक्ष्णं पुनःपुनरिच्छन्ति, न पुनः समानकुलोत्पन्नस्य भ्रात्रादेर्लक्ष्मीमिच्छन्ति, तथा वरं शत्रून् नमन्ति न पुनर्बन्धूनां वृद्धिं, सन्तप्यमानैः ईर्ष्यादह्यमानैर्हृदयैः सहन्ते ॥ ७९ ॥

त्वयेत्यादि । लङ्कापरिभवे लङ्कोपरोधे अतिहर्षात् हर्षेण दुष्टान्तरात्मा अति-मात्रं सुष्ठु त्वयाद्य विवृतः प्रकाशितः, मयि दुःस्थबुद्धिः अस्मद्विषये दुःस्थोऽभियुक्तोऽयमिति बुद्धिः ते मृषा मिथ्याऽतस्त्वां धिगिति वदन् स दशाननः तस्य विभीषणस्य सिंहासनो-पाश्रितबाहोः पार्ष्णिं पादप्रहारं शिरसि ददौ ॥ ८० ॥ ज० म०

पूर्वश्लोकद्वयार्थं विभीषणे घटयितुमिदमुच्यते

त्वयेत्यादि । लङ्काया अभिभवे दाहादौ सति त्वया अतिहर्षात् दुष्टोऽतिमात्रम् अतिशयेन दुष्टोऽन्तरात्मा प्रकाशित एतावन्तं कालं गुप्त आसीदिति भावः । मयि अस्मद्विषये दुःस्थोऽयमरिभिरभियुक्तोऽयमिति ते तव बुद्धिर्मृषा मिथ्या अतस्त्वां धिगिति वदन् स दशाननस्तस्य विभीषणस्य पार्ष्णिं पादप्रहारं ददौ ॥ ८० ॥ भ०

तत इत्यादि । पार्ष्णिप्रहारादनन्तरं स विभीषणः कोपं क्षमया क्षान्त्या

**उवाच चैनं क्षणदाचरेन्द्रं सुखं महाराज! विना मयाऽऽस्व।**
**मूर्खातुरः पथ्यकटूननश्नन् यत्सामयोऽसौ भिषजां न दोषः ॥८२॥**
**करोति वैरं स्फुटमुच्यमानः प्रतुष्यति श्रोत्रसुखैरपथ्यैः।**
**विवेकशून्यः प्रभुरात्ममानी महाननर्थः सुहृदां बतायम् ॥ ८३ ॥**

निगृह्णन् अभिभवन् तथा धैर्य्येण मन्युं शोकं निगृह्णन् विनयेन गर्वं मोहं वैचित्त्यं प्रज्ञया उत्साहवशादशक्तिमसामर्थ्यं निगृह्णन् अपमानेन कोपादीनां सम्भवात् चतुर्भिः सचिवैः अमात्यैः समं सार्द्धमुदस्थात् आसनादुत्थितः ॥ ८१ ॥ ज० म०

तत इत्यादि। पार्ष्णिप्रहारादनन्तरं स विभीषणः क्षमया क्षान्त्या कोपं निगृह्णन् अभिभवन् धैर्य्येण मन्युं शोकं निगृह्णन् विनयेन गर्वं दर्पं निगृह्णन् धिया बुद्ध्या मोहं वैचित्त्यं निगृह्णन् उत्साहवशादशक्तिमसामर्थ्यं निगृह्णन् चतुर्भिः सचिवैः अमात्यैः उदस्थात् आसनादुत्थितवान् ॥ ८१ ॥ भ०

उवाचेत्यादि। उत्थितश्चानन्तरं रावणम् उवाच—हे महाराज! मया विना सुखमास्स्व तिष्ठ। आस्तेर्लोट्। तवात्र दोषो न ममोपदेष्टुः, यस्मात् मूर्खातुरः मूर्खो य आतुरः पथ्यकटूननश्नन् अभक्षयन् यत्सामयः रोगवान् भिषजां वैद्यानां न दोषः किन्तु तस्यैव ॥ ८२ ॥ ज० म०

उत्थितो विभीषणो रावणं वाचमुवाच, किमुवाचेत्याह

उवाचेति। हे महाराज! मया विना सुखं आस्स्व सुखेन तिष्ठेत्यर्थः, ङि आस ङ् उपवेशने गो। तवैवात्र दोषो न ममेत्युपदिशन्नाह—मूर्ख आतुरो रोगी पथ्यान् कटून् अनश्नन् अभक्षयन् सामयो रोगी यत्तिष्ठत्यसौ भिषजां वैद्यानां न दोषः किन्तु तस्यैव ॥ ८२ ॥ भ०

करोतीत्यादि। प्रभुर्विवेकशून्यो निर्विवेकः आत्ममानी मत्समोऽन्यो नास्तीति आत्मानं श्लाघमानः आत्ममाने इनिः। स्फुटमुच्यमानो वैरं करोति स्नेहं न करोति पथ्यमनेनोक्तमिति श्रोत्रसुखैः तदर्थमनोहारिभिः अपथ्यैस्तुष्यति तस्मादहं प्रभुः सुहृदामाश्रितानां महाननर्थः अनर्थहेतुत्वात् बतशब्दः खेदे ॥ ८३ ॥ ज० म०

करोतीत्यादि। प्रभुरीश्वरो विवेकशून्यः सदसद्विचाररहितः, आत्ममानी मत्समो नास्तीति आत्मानं श्लाघमानो, बत खेदे। अयमेव सुहृदां महाननर्थो दुःखहेतुः। कथम्? इत्याह—तादृक् प्रभुः स्फुटं यथार्थम् उच्यमानः क्रोधं करोति न तु

क्रीड़न् भुजङ्गेन गृहानुपातं कश्चिद् यथा जीवति संशयस्थः।
संसेवमानो नृपतिं प्रमूढ़ं तथैव यज्जीवति सोऽस्य लाभः॥ ८४॥
दत्तः स्वदोषैर्भवता प्रहारः पादेन धर्म्मे पथि मे स्थितस्य।
स चिन्तनीयः सह मन्त्रिमुख्यैः कस्यावयोर्लाघवमादधातु॥८५॥
इति वचनमसौ रजनिचरपतिं
बहुगुणमसकृत् प्रसभमभिदधत्।

पथ्यमनेनोक्तमिति स्वेहं श्रोत्रसुखैः कर्णसुखकारिभिः अपथ्यैरग्रेऽतिदुःखजनकैः प्रहृष्यति तुष्यति, अतस्तस्य विनाश एव स्यात्। आत्मानमेव मन्यत इति ग्रहादित्वात् णिन्॥ ८३॥ भ०

क्रीड़न्नित्यादि। यथा कश्चित् सर्पग्राही गृहानुपातं गृहं गृहमनुपत्य विशिपतीत्यादिना णमुल्। भुजङ्गेन सह क्रीड़न् जीवति संशयस्थः सन्देहे वर्त्तमानः किमयं खादिष्यति न वेति तथैव प्रमूढ़ं मूर्खमधिपतिं संसेवमानो यज्जीवति सोऽस्य लाभः, आत्मामन्त्री लाभ इति॥ ८४॥ ज० म०

क्रीड़न्नित्यादि। यथा कश्चित् व्यालग्राही गृहानुपातं गृहं गृहमनुपत्य गत्वा भुजङ्गेन सर्पेण क्रीड़न् संशयस्थः किमयं खादिष्यति न वेति सन्देहे वर्त्तमानो जीवति तथैव प्रमूढ़मतिमूर्खमधिपतिं संसेवमानो यज्जीवति अस्य सेवकस्य स एव लाभः, एतेन मूर्खस्य तव सेवायां मम जीवनमेव लाभ इत्याशयः। गृहानुपातमिति चणम् वा इत्यस्य योगविभागात् साकल्ये चणम्, गृहा अनुपत्यन्ते यस्मिन् इति क्रीड़नविशेषणं वा, तदा कर्मणि घञ्॥ ८४॥ भ०

दत्त इत्यादि। स्वदोषैरविवेकत्वादिभिर्भवता पादप्रहारः यो मम धर्म्यं धर्मादनपेते मार्गे स्थितस्य दत्तः स, मन्त्रिमुख्यैरेतैः सह चिन्तनीयः आवयोर्मध्ये कस्य लाघवमादधातु करोत्विति यावन्निरूप्यमाणस्तवैवेति भावः॥ ८५॥ ज० म०

दत्त इत्यादि। भवता स्वदोषैरात्मनोऽविवेकत्वादिभिः पादेन प्रहारो मम दत्तः। मम कीदृशस्य?—धर्मादनपेते पथि वर्त्तमानस्य। स पादप्रहारो मन्त्रिमुख्यैः सह त्वया चिन्तनीयो निरूप्यमाणः सन् आवयोर्मध्ये कस्य लघुत्वं करोतु निरूप्यमाणस्तवैव विवेकशून्यत्वख्यातिरूपं लाघवमुत्पादयिष्यतीति भावः॥ ८५॥ भ०

इतीत्यादि। इत्येवं वचनं बहुगुणम् अर्थावगाढ़त्वात् असकृत् बहुत्वात् प्रस-

निरगमदभयः पुरुषरिपुपुरात्
नरपतिचरणौ नवितुमरिनुतौ ॥ ८६ ॥
अथ तमुपगतं विदितसुचरितं
पवनसुतगिरा गिरिगुरुहृदयः।
नृपतिरमदयन्मुदितपरिजनं
स्वपुरपतिकरैः सलिलसमुदयैः ॥ ८७ ॥
इति भर्तृहरिकृते भट्टिकाव्ये द्वादशः सर्गः ॥

भम् आहत्य रजनिचरपतिमभिदधत् ब्रुवन् नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः। रजनिचर इति ङ्याप्पोः संज्ञाछन्दसोः बहुलमिति संज्ञायां ह्रस्वत्वम्। पुरुषरिपुपुरात् लङ्कातः निरगमत् निष्क्रान्तः। अभयः सन् नरपतिचरणौ रामस्य पादौ अरिभिरपि नुतौ शरत्वात् अक इतीट्प्रतिषेधः। नवितुं प्रणामपूर्वकं स्तोतुम् अनेकार्थत्वाद्धातूनां नन्तुमित्यर्थः ॥ ८६ ॥ ज० म०

इतीत्यादि। असौ विभीषण इत्युक्तप्रकारं वचनम् असकृत् वारंवारं प्रसभं बलात् रजनिचरपतिं रावणम् अभिदधत् वदन्, नरपतेः रामस्य चरणौ नवितुं स्तोतुं पुरुषरिपोः राक्षसस्य पुरात् लङ्काया निरगमत् निर्गतवान्। वचनं कीदृशम् ?—बहुगुणम् औदार्यादिगुणयुक्तम्। असौ कीदृशः ?—अभयः। न विद्यते भयं यस्य। रामचरणौ कीदृशौ ?—अरिभिरपि नुतौ स्तुतौ। नु ल स्तुतौ, वेमूदित्यादिना वेमत्वात् नेम् ड.श्वीदिद्दे म इति इम्निषेधः। नुवितुमिति पाठे—नू शि स्तवन इत्यस्य रूपम्। रजनिचर इति संज्ञाशब्दः, तेन संज्ञायां बहुलं ह्रस्व इति केचित्। रजनिशब्द औणादिको ह्रस्वान्त इति विद्यासागरः; वस्तुतोऽप्येवमेव, रजनिजनितगुरुजागररागकषायितमलसनिमेषमिति जयदेवः। सखि! रजनिरद्य गतवतीति कालिदासः; दीर्घान्तता तु पाच्छोनादीत्यादिना पचे ईब्विधानात्। प्रहरणकलिका नाम वृत्तं, तल्लक्षणं यथा—ननभनलगिति प्रहरणकलिका ॥ ८६ ॥ भ०

अथेत्यादि। अनन्तरं विभीषणमुपेतं सेतुबन्धचिन्ताकाले राममुपगतवानिति द्रष्टव्यम्, अन्यथा वक्ष्यमाणप्रभातकथनं विरुध्येत। पवनसुतगिरा हनूमद्वचनेन सच्चरितोऽयमिति विदितं सुचरितं येन, नृपतिः रामः गिरिगुरुहृदयः गिरिवत् गुरु अप्रकम्प्यं हृदयं यस्य, सलिलसमुदयैः जलपूर्णघटैः स्थितैः स्वपुरपतिकरैः लङ्काधि-

# त्रयोदशः सर्गः ।

**चारुसमीरणरमणे हरिणकलङ्ककिरणावलीसविलासा ।**
**आबद्धराममोहा वेलामूले विभावरी परिहीणा ॥ १ ॥**

---

पतिं कुर्वन्तीतौ हेतौ टः, अमदयत् हर्षितवान्,मद्दी हर्षे इत्यस्य हेतुमण्यन्तस्य घटादिवान्मित्त्वे ह्रस्वत्वम् । मुदितपरिजनं स्वामी लङ्काधिपत्येऽभिषिच्यत इति तस्य हृष्टा अनुजीविनः इत्यर्थः ॥८७॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रसन्नकाण्डे भाविकत्वप्रदर्शनं तृतीयः परिच्छेदः काव्यस्य विभीषणागमनो नाम द्वादशः सर्गः ॥

अथेत्यादि । अनन्तरम् उपगतं तं विभीषणं नृपतिः रामः सलिलसमुदयः अभिषेकजलसमूहैर्हेतुभिः अमदयत् हर्षितवान् । तं कीदृशं ?—पवनसुतस्य हनुमता गिरा वचनेन विदितं ज्ञातं शोभनचरित्रं यस्य । मुदिता लङ्काधिपतित्वे स्वामी अभिषिक्त इति तुष्टाः परिजना अमात्याश्चत्वारो यस्य । नृपतिः कीदृशः ?—गिरिवदकम्प्यं हृदयं यस्य सः तथा । सलिलसमुदयैः कीदृशैः ? स्वपुरपतिकरैः लङ्काधिपत्यं कुर्वद्भिः । मदीमिर्यं जि हर्षे, जिः प्रेरणे, घटादित्वात् ह्रस्वः । क्तञः स्तकृष्ट इति टः । पूर्वोक्तं वृत्तम् ॥ ८७ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां विभीषणागमनो नामो द्वादशः सर्गः ।

काव्यं संस्कृतप्राकृतापभ्रंशभेदात् त्रिविधम् । तत्र शब्दभवदेशीयपदयोः प्राकृतभाषयोरपभ्रंशस्य च संस्कृतभाषायां समावेशासम्भवात् शब्दसमायाः प्राकृतभाषायाः समावेशः । तमार्य्यागीत्या स्कन्धकलक्षणया दर्शयन्नाह ।

विभीषणागमनात् प्राक् यद्वृत्तं रामस्य तदाह

चार्वित्यादि । रामो रात्रौ निद्रावान् पल्लवशयनमध्यस्थादित्युक्तं, तस्य नियमपूर्वं सुप्तवतः प्रभातमभूदिति कथयति । वेलामूले पारसमीपे प्राकृते पुंलिङ्गनपुंसकयोराकारान्तस्य पदस्य सप्तम्या एकवचने मित्वमेत्वं वा रूपम् । चारुसमीरणरमणे रमयतीति रमणं, नन्द्यादिभ्यो ल्युः । समीरणेन रमणं चारु च तत्समीरणरमणं चेति, तत्र विभावरी रात्रिः परिहीणा क्षीणा । हरिणकलङ्कस्य याः किरणावल्यः

**बद्धो वासरसङ्गे भीमो रामेण लवणसलिलावासे।**
**सहसा संरम्भरसो दूरारूढरविमण्डलसमो लोले ॥ २ ॥**

ताभिः सविलासा सविभ्रमा, अतश्चाबद्धो रामस्य मोहो मूर्च्छा ययेति, कृदिकारादक्तिन इत्यनेन आवलिरावलीत्युभयमपि संस्कृतप्राकृतयोः प्रयुज्यते ॥ १ ॥ ज० म०

अथ भाषासमावेशः। काव्यं संस्कृतप्राकृतापभ्रंशभेदात् त्रिविधम्। प्राकृतोऽपि संस्कृतभवः संस्कृतसमो देशी चेत्यनेकविधः। अत्र देशिसंस्कृतभवयोः प्राकृतयोरपभ्रंशस्य चासाधुशब्दत्वेनाधर्मजनकत्वात् उपक्रान्ते संस्कृतबन्धे समावेशासम्भवाच्च महाकविर्भर्तृहरिः असामर्थ्यं बोधयन् शब्दसमायाः प्राकृतभाषायाः संस्कृतबन्धे समावेशं दर्शयति।—अयञ्च भाषाश्लेष एव। तथा च रुद्रटः —"वाक्ये यत्रैकस्मिन् अनेकभाषानिबन्धनं क्रियते। अयमपरो मतिमद्भिर्भाषाश्लेषोऽत्र विज्ञेयः" इति। प्राकृतशास्त्रे तालव्यशकारो मूर्द्धन्यषकारश्च नास्ति,तत्र हि "शषोः स" इति सूत्रम्। एवं दन्त्यो नकारो नास्ति, "नो णः" इति सूत्रम्। एवम् अन्त्यस्थयकारो नास्ति, "यस्य जः" इति च सूत्रम्। एवमादिबहुतरमुन्नेयम्। सेतुबन्धनार्थं कृतनियमेन रामेण पत्रशय्यायां रात्रिर्गमितेति ज्ञापयितुं प्रभातवर्णनामधिकरोति।

चार्वित्यादि। वेलामूले वेलायाः समुद्रजलस्य मूले तटे विभावरी रात्रिः परिहीणा विगता। कीदृशे वेलामूले?—चारुणा मन्दशीतसुगन्धिना समीरणेन वायुना रमणे आनन्दने, चारु मनोज्ञञ्च, तत् समीरणरमणञ्चेति कर्मधारयो वा रमयतीति रमणं रमन्तेऽत्रेति वा। कीदृशी विभावरी?—हरिणकलङ्कस्य चन्द्रस्य किरणावल्या रश्मिपङ्क्त्या सविलासा शोभमाना सविभ्रमा वा, आबद्धो रामस्य मोहो यया। प्राकृते आकारात् परस्य सप्तम्येकवचनस्य ङेस्मिन्नित्यादेशो भवतः, तत्र ङेपक्षे संस्कृतसमत्वम्। स्कन्धका छन्दः—तल्लक्षणं यथा—"चौमत्ता अट्ठगणा पुव्वद्धे उत्तद्धे बि होन्ति समरूआ। सो खन्धया बियाणहु पिङ्गल पभणेइ मुद्धिबहु सम्भेआ" ॥ इति ॥ १ ॥ भ०

बद्ध इत्यादि। नियमस्थितेऽपि मयि नासौ समुद्र उत्थित इति वासरसङ्गे प्रभातकाले रामेण लवणसलिलावासे, समुद्र इति विषयसप्तमी। सहसा तत्क्षणं संरम्भरसः क्रोधरसो वीराख्यः भीमो दुःप्रेक्ष्यः बद्धो जनितः दूरारूढरविमण्डलसमो लोल इति दूरमारूढो मध्याह्नस्थो यो रविः तस्य मण्डलं तेन समस्तुल्योऽतितीक्ष्णत्वात् लोले चञ्चले समुद्रे प्रभातवातेन क्षोभ्यमाणत्वात् ॥ २ ॥ ज० म०

बुद्ध इत्यादि। वासरस्य सङ्गः सम्बन्धो यत्र प्रभाते वासरस्य दिवसस्य सङ्गे

**गाढगुरुपुङ्खपीड़ासधूमसलिलारिसम्भवमहावाणे।**
**आरूढ़ा सन्देहं रामे समहीधरा मही सफणिसभा॥ ३॥**
**घोरजलदन्तिसङ्कुलमट्टमहापङ्ककाहलजलावासम्।**
**आरीणं लवणजलं समिद्धफलवाणविद्धयोरफणिवरम्॥ ४॥**

सम्बन्धे सति वा रामेण लवणसलिलावासे लवणसमुद्रे संरम्भरसः क्रोधरसः सहसा तत्क्षणात् बद्धः कृतः। कृतोपवासेऽपि मयि नायं प्रकटीभूत इति मत्वा संरम्भरसः। कीदृशः?—भीमो भयदः दूरमारूढ़स्य मध्याह्नस्थितस्य रवेः सूर्य्यस्य मण्डलेन समोऽति-तीक्ष्णत्वात्। समुद्रे कीदृशे?—लोले चञ्चले रामभयेण प्रभातवातेन वा क्षोभ्यमाणत्वात् प्राकृतशास्त्रे लवणशब्दस्य मध्यव्यञ्जनस्य स्वरेण सहोत्वं पक्षे विहितं, तेन लोणं लवणमिति द्वयमपि स्यात्। गाथावत् स्कन्धकायामपि षष्ठो गणो मध्यगुरुश्चतुर्लघुर्वा अत्र पूर्वार्द्धे चतुर्लघुः षष्ठो गणः॥ २॥

गाढ़ेत्यादि। गाढं सुष्ठुः गुरोः पुङ्खस्य या पीड़ा पीड़नम् अङ्गुष्ठाभ्यां तया हेतुभूतया सधूमसलिलारेः अग्नेः सम्भवो यत्र स महावाणो यस्य रामस्य तस्मिन् सति सन्देहमारूढ़ा संशयं प्राप्ता, समहीधरा मही सफणिसभा सह भुजङ्ग-समूहेन। धारयन्तीति धराः, अत्र धकारस्य पदमुखे वर्त्तमानस्य हकारो न भवति, प्राकृते पदमध्यान्तयोर्विधीयमानत्वात् महीधर इति समस्तपदेऽपि न प्रवर्त्तते, अत्र पूर्वपदमुत्तरपदमिति व्यपदेशात्। एवञ्च सति गोधरवज्रधरचक्रधरशङ्खधरादिषु न प्रवर्त्तते, महीधरो महिधर इत्युभयमपि प्राकृते प्रयुज्यते असमहानां विकल्पेन ह्रस्व-दर्शनात्॥ २॥ ज० म०

गाढ़ेत्यादि। गाढ़ा दृढ़ा गुरुपुङ्खस्य या पीड़ा अङ्गुष्ठतर्जनीभ्यामाकर्षणं तया सधूमस्य सलिलारेरग्नेः सम्भवो यत्र तादृशो महान् वाणो यस्य तादृशे रामे सति मही पृथिवी सन्देहं विनाशसंशयम् आरूढ़ा प्राप्ता। कीदृशी?—समहीधरा पर्वतैः सह वर्त्तमाना, फणिसभया सर्पसमूहेन सहिता। प्राकृते महीधरपदे ह्रस्वो न भवति। तत्र बहुलाधिकारात् खघथभामिति धकारस्य हकारो न भवति, तत्र प्रायोऽधिकारात्। पीड़ेति डो ल इति लत्वं न भवति प्रायोग्रहणात्, पीलेति पाठो वा संस्कृतेऽपि मनीषादित्वादेकवस्मरणात्॥ ३॥ भ०

घोरेत्यादि। रामेण आग्नेये शरे क्षिप्ते सति लवणजलम् आरीणं समन्तात् शुष्कम्। रो ङ स्रवण इत्यस्मात् निष्ठातकारस्य खादय ओदित इति नत्वम्। अस्कुम्विति णत्वम्।

**सभयं परिहरमाणो महाहिसञ्चारभासुरं सलिलगणम्।**
**आरूढ़ो लवणजलो जलतीरं हरिबलागमविलोलगुहम्॥ ५॥**
**चञ्चलतरुहरिणगणं बहुकुसुमाबन्धबद्धरामावासम्।**

रौणमित्यप्रयोगः। प्राकृते महाराष्ट्रे तस्याप्रयोगात्। घोरैः रौद्रैर्जलदन्तिभिः सङ्कुलं व्याप्तम्, अट्टः शुष्कः यो महापङ्कः तेन काहला विह्वला जलावासा मत्स्यादयो यत्र अट्ट अतिक्रमहिंसनयोरित्यस्य रूपम्। समिद्धफलेन दीप्तफलेन बाणेन विद्धाः घोराः फणिवरा महासर्पा यत्रेति॥ ४॥ ज० म०

घोरेत्यादि। रामेण आग्नेयास्त्रे क्षिप्ते सति लवणजलम् आरीणं समन्तात् शुष्कम्। री रीङ् य चरणे सूत्वाद्योरिति क्तस्य नत्वम्। कीदृशं जलं?—घोरैः भीमैः जलहस्तिभिः सङ्कुलं व्याप्तम्। अट्टः शुष्कोऽत्यर्थो वा यो महापङ्कस्तेन काहलाः शुष्का जलावासा मत्स्यादयो यत्र,अट्ट ङ् अतिक्रमे बधे इत्यस्येदं रूपम्। "अट्टं भग्ने च शुष्के च चौमेऽत्यर्थे गृहान्तरे" "काहली तु तरुण्यां स्यात् काहलं भग्नशुष्कयोः" इति च विश्वः। काहलं विह्वलेऽपि स्यादित्यन्ये। प्राकृतपक्षे कातरशब्दस्य काहलमिति भवति, कातर-वितस्तिमातुलुङ्गेष्वित्यनेन तकारस्य हादेशात् हरितादित्वेन रेफस्य लत्वाच्च। दीप्त-फलेन बाणेन विद्धा घोराः फणिवराः सर्पश्रेष्ठा यत्र॥ ४॥ भ०

सभयमित्यादि। सलिलगणं सलिलसमूहः सभयं महाहीनां सञ्चारेण भासुरं भासनशीलं तच्छिरोमणिद्योतितत्वात्, परिहरमाणः परित्यजन् कर्त्रभिप्राये तङ्। लवणजलः समुद्रः, लवणं जलमस्येति, जलतीरं तटं, यत्र रामस्तिष्ठति तदारूढ़ः सम्प्राप्तो मूर्त्तिमान् हरिबलागमेन वानरसैन्यागमेन विलोला व्याकुला गुहा यत्रेति॥ ५॥ ज० म०

सभयमित्यादि। लवणं जलमस्य स लवणजलः समुद्रः जलतीरम् आरूढ़ः सम्प्राप्तो मूर्त्तिमान् भूत्वा। किं कुर्वन्?—सभयं यथा स्यात् तथा सलिलगणं जल-राशिं परिहरमाणः परित्यजन्। सभयमित्यत्र प्राकृते प्रायोग्रहणात् यलोपाभावः, कगचजेति यलोपे अवर्णोयश्रुतिरिति यकारश्रवणमित्यन्ये। कीदृशं सलिलगणं?—महाहीनां महासर्पाणां सञ्चारेण भासुरं तच्छिरोमणिभिर्दीप्तम्। कीदृशं जल-तीरं?—हरिबलागमेन रानरसैन्यागमनेन विलोला व्याकुला गुहा यत्र। विलोचन-तरुमिति क्वचित् पाठः॥ ५॥ भ०

चञ्चलेत्यादि। चञ्चलश्चपलः तरुहरिणानां वानराणां गणो यत्र जलतीरे

हरिपल्लवतरुजालं तुङ्गोरुसमिद्धतरुवरहिमच्छायम् ॥ ६ ॥
वरवारणं सलिलभरेण गिरिमहीमण्डलसंवरवारणम् ।
वसुधारयं तुङ्गतरङ्गसङ्गपरिहीणलोलवसुधारयम् ॥७॥ कुलकम् ।
एतानि सप्त सङ्कीर्णानि ।
प्रणिपत्य ततो वचनं जगाद हितमायतौ पतिर्वारीणाम् ।

बहुकुसुमानां वृक्षाणाम् आबन्धेन परस्परसंश्लेषेण बद्धौ घटितौ रामावासौ यत्र । हरिपल्लवानि तरुजालानि यत्र, तुङ्गा उरवः परिमण्डलाः समिद्धा उज्ज्वला ये तरुवरास्तैर्हिमा शीतला छाया यत्र तज्जलतीरम् ॥ ६ ॥ ज० म०

चञ्चलेत्यादि । कीदृशं जलतीरमारूढः ?—चञ्चलस्तरुहरिणानां वानराणां गणो यत्र, बहूनि कुसुमानि येषां तेषां वृक्षाणाम् आबन्धेन परस्परसंश्लेषेण बद्धौ घटितः रामस्यावासो वासस्थानं यत्र । हरयः पिङ्गलाः पल्लवा यस्य तादृशं तरुजालं वृक्ष-समूहो यत्र, तुङ्गा उच्चा उरवोऽत्यर्थविस्तीर्णमण्डलाः समिद्धा उज्ज्वला ये तरवस्तैः शीतला छाया यत्र ॥ ६ ॥ म०

वरेत्यादि । वरा उत्कृष्टा वारणा यत्र, सलिलभरेण सलिलसमूहेन यो गिरीणां महीमण्डलस्य च संवरः संवरणमावरणं ग्रहेत्यादिनाप् तस्य वारणं निषे-धकं, समुद्रस्य वेलातिक्रमात् । वसु द्रव्यं तस्य धारकं धारकम् अनुपसर्गादिति णिजन्ताच्छः । तुङ्गाः अभ्रंलिहा ये तरङ्गास्तैः सह यः सङ्गः संश्लेषः तस्मात् परि-हीणौ नष्टौ लोलौ वसुधायां तत्सम्बन्धिन्यां रयौ वेगौ यत्र तज्जलतीरम् आरूढः गणितक्रममेतत् । एतानि सप्त सङ्कीर्णानि, संस्कृतप्राकृतयोरविशिष्टत्वात् ॥ ७ ॥ ज० म०

वरवारणमित्यादि । पुनः कीदृशं ?—वरा उत्कृष्टा वारणा हस्तिनो यत्र सलिल-भरेण जलातिशयेन गिरीणां महीमण्डलस्य च संवरः संवरणं तस्य वारणं निषेधकं समुद्रेण वेलाया अतिक्रमात् । वसुधारयं द्रव्यस्य धारकं साहिसातीति धारेः शः । तुङ्गानाम् उच्चानां तरङ्गाणां यः सङ्गः संश्लेषः तेन परिहीणौ भ्रष्टौ लोलौ वसु-धायां तत्सम्बन्धिन्यां रयौ वेगौ यत्र, तरङ्गेण जलवेगनिरासात् । एतानि सप्त सङ्कीर्णानि संस्कृतप्राकृतयोरविशिष्टस्वरूपत्वात् ॥ ७ ॥ म०

प्रणिपत्येत्यादि । ततस्तीरप्राप्तेरनन्तरं वारीणां पतिः समुद्रः रामं प्रणिपत्य

**गङ्गावलम्बिबाहू रामं बहलोरुहरितमालच्छायम्॥ ८॥**

**पूर्वार्द्धं निरवद्यम्।**

**तुङ्गा गिरिवरदेहा अगमं सलिलं समीरणो रसहारी।**
**अहिमो रविकिरणगणो माया संसारकारणं ते परमा॥ ९॥**

---

वचनं जगाद; हितम् आत्मनी रामस्य च पथ्यम् आयतौ आगामिनि काले,गङ्गावलम्बी गङ्गावलम्बनशील: संपूर्णत्वात् बाहुर्यस्य स गङ्गावलम्बिबाहुः। संस्कृते ढ्रलोपे पूर्वस्य दीर्घः। प्राकृते तु पुंलिङ्गे उकारस्य दीर्घत्वं विभक्तिसकारस्य च लोपः। उरुः महान् हरिः हरितो यः तमालः बहुला घना तस्येव छाया यस्य तमिति पूर्वार्द्धं निरवद्यमिति पूर्वस्मिन् अर्द्धे प्राकृतस्याभावात् निरवद्यं, पश्चादर्द्धे तु सङ्कीर्णमेव॥ ८॥ ज० म०

प्रणिपत्येत्यादि। ततस्तीरप्राप्तेरनन्तरं वारीणां पतिः समुद्रः रामं प्रणिपत्य प्रणम्य वचनं जगाद। कीदृशं वचनम्?—आयतौ उत्तरकाले हितम्, आत्मनो रामस्य च पथ्यम्। कीदृशः समुद्रः?—गङ्गावलम्बनशीलौ बाहू यस्य। संस्कृते रिचोऽवे इत्यनेन कृतरेफस्य ढ्रौढ्रीति लोपः, पूर्वस्य दीर्घत्वम्। प्राकृते तु पुंलिङ्गे उकारस्य दीर्घत्वं सिर्लोपश्च। रामं कीदृशं?—बहला निविड़ा उर्वोर्महतोर्हरितमालयोरिव शुकतचविशेषयोरिव छाया कान्तिर्यस्य। "शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः। प्राकृते हरिच्छब्दस्य तलोपोऽन्त्येष्वञ्जमस्येत्यनेन। पूर्वार्द्धं निरवद्यमिति वचनशब्दस्य दन्त्यान्तत्वात् प्राकृतस्य पूर्वार्द्धेन सम्भवः। तेन केवलसंस्कृतत्वान्निरवद्यम् उत्तरार्द्धन्तु सङ्कीर्णमेव॥ ८॥ भ०

तुङ्गा इत्यादि। गिरिवरदेहाः कुलपर्वतकायाः तुङ्गाः प्रांशवः अगमं सलिलम् अगम्यं ग्रहेत्यादिनाप्, समीरणो रसहारी अपामुच्छोषकः, अहिमः उष्णः रवेः किरणगणः एतत्सर्वं तव माया परमा महती, संसारस्य कारणं सर्वथा त्वं विष्णुः त्वत्कृतेषु, को रोष इति॥ ९॥ ज० म०

तुङ्गा इत्यादि। गिरिश्रेष्ठानां देहाः तुङ्गा उच्चाः, सलिलं समुद्रादि अगम्यं, समीरणो वातो रसहारी जलशोषकः, रवेः किरणगणोऽहिम उष्णः, इत्यादिकं यत् सर्वं संसारस्य कारणं हेतुः। तत् ते तव परमा माया महाकपटम्। एतेन त्वं विष्णुः स्वयंसृष्टे मयि रोषोऽनुचित इति सूचितम्॥ ९॥ भ०

**आयाससम्भवारुण ! संहर संहारहिमहरसमच्छायम्।**
**वाणं वारिसमूहं सङ्गच्छ पुराणचारुदेहावासम् ॥ १० ॥**
**असुलभहरिसञ्चारं जलमूलं बहलपङ्करुद्धायामम्।**
**भण किं जलपरिहीणं सुगमं तिमिकम्बुवारिवारणभीमम् ॥११॥**

आयासेत्यादि। यस्मात् संसारकारणं यदगम्यं सलिलं कृतं तस्मात् त्वं हे आयाससम्भवारुण ! रोषसम्भवेन रक्तीभूत ! संहारे प्रलये हिमहरा आदित्याः तैः समा छाया यस्य बाणस्य, तं संहर उपशमय, वारिसमूहं सङ्गच्छ अङ्गीकुरु, सकर्मकत्वात् समो गमित्यात्मनेपदं न भवति। पुराणः शाश्वतः दर्शनीयो यो देहः तस्य वासम् अवस्थानम् ॥ १० ॥ ज० म०

आयासेत्यादि। हे आयाससम्भवारुण ! आयाससम्भवेन दुःखजनितेन क्रोधेन अरुण ! रक्ताङ्ग ! त्वं बाणं संहर उपशमय। कीदृशं बाणं ?—संहारे प्रलये हिमहराः सूर्या वह्नयो वा तैः समा छाया कान्तिर्यस्य तम्। त्वं वारिसमूहं संगच्छ अङ्गीकुरु रक्षेति भावः, समो गमृच्छे ति न मं, सकर्म्मकत्वात्। यतः पुराणस्य पूर्वकालीनस्य चारोः मनोज्ञस्य स्वदेहस्य आवासं स्थानम्, आवासमित्यत्र प्राकृते मो बिन्दुरित्यनुस्वार एव भवति, संस्कृते तु यद्यपि मकारस्थितिरेव स्यात्, तथा श्रुतेरभेदाद्भाषासमावेश इति द्रष्टा इति विद्यासागरः ! वा विरामे इत्यन्ये ॥ १० ॥ भ०

असुलभेत्यादि। अन्यच्च, यदेतत् जलमूलं जलस्य अवस्थानम् आग्नेयशरशोषितत्वात् जलपरिहीणं सत् तत् किं सुखेन गम्यत इति भण ब्रूहि। यतो बहलः सान्द्रो यः पङ्कस्तेन रुद्ध आयामो दैर्घ्यं यत्र, तिमयो मत्स्याः, कम्बवः शङ्खाः वारिवारणाः जलहस्तिनः तैः भीमम्, एवं च सति असुलभो दुर्लभः हरिसञ्चारो वानरपर्य्यटनं यत्रेति ॥ ११ ॥ ज० म०

असुलभेत्यादि। एतत् जलमूलम् आग्नेयास्त्रेण जलपरिहीणमपि किं सुगमं सुखेन गम्यते इति भण ब्रूहि, अपि तु नैव, यतो बहलः सान्द्रो यः पङ्कस्तेन रुद्ध आयामो दैर्घ्यं यस्य, क्वापि पङ्काभावो नास्ति। तिमिभिः मत्स्यैः कम्बुभिः शङ्खैः वारिवारणैः जलहस्तिभिः भीमम्, एवं सति असुलभो दुर्लभो हरिसञ्चारो वानरपर्य्यटनं यत्र। तिमिः मीन इति हलायुधः। "अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः" इत्यन्ये। असुलभेत्यत्र हकारादेशो न भवति प्राकृते प्रायोग्रहणानुवृत्तेः ॥ ११ ॥ भ०

गन्तुं लङ्कातीरं बद्धमहासलिलसञ्चरेण सहेलम्।
तरुहरिणा गिरिजालं वहन्तु गिरिभारसंसहा गुरुदेहम्॥ १२॥
हरहासरुद्धविगमं परकण्ठगणं महाहवसमारम्भे।
छिन्दन्तु रामबाणा गम्भीरे मे जले महागिरिबद्धे॥ १३॥
गच्छन्तु चारुहासा वीररसाबन्धरुद्धभयसम्बन्धम्।
हन्तुं बहुबाहुबलं हरिकरिणो गिरिवरोरुदेहं सहसा॥ १४॥

एतानि षट् सङ्कीर्णानि।

गमनोपायमाह

गन्तुमित्यादि। सञ्चरन्ति अनेन इति सञ्चरः गोचरसञ्चरेति टच्, बद्धो घटितो महासलिले यः सञ्चरः तेन सेतुना सहेलम् एकप्रवृत्त्या लङ्कातीरं लङ्कोपलक्षितं तटं गन्तुं तरुहरिणा वानरा गिरिभारस्य संसहाः क्षमाः संसहन्ते इत्यच्, गिरिजालं गिरिसमूहं वहन्तु प्रापयन्तु, गुरुर्देहः शरीरं यस्य गिरिजालस्य॥ १२॥ ज० म०

गन्तुमित्यादि। बद्धो घटितो यो महासलिले सञ्चरः सेतुस्तेन सहेलं सकौतुकं यथा स्यात् तथा लङ्कासम्बन्धितीरं गन्तुं गुरुदेहं महाकायं गिरिजालं पर्वतसमूहं वहन्तु। कीदृशाः?—गिरिभारसंसहाः पर्वतवहनक्षमाः सञ्चरत्यनेन लोक इति सञ्चरः करणेऽण्॥ १२॥ भ०

हरेत्यादि। मम जले गम्भीरे अगाधे महागिरिभिर्बद्धे सति यो महाहवस्य समारम्भः प्रवर्त्तनं तस्मिन् परस्य शत्रोः कण्ठगणं ग्रीवासमूहं हरस्य तुष्टत्वात् यो हासः तेन रुद्धो विगमश्छेदो यस्य तं रामशराश्छिन्दन्तु। आशिषि लोट्॥१३॥ ज०भ०

हरेत्यादि। मम गम्भीरेऽगाधे जले महागिरिभिर्बद्धे सति महायुद्धस्य समारम्भे प्रवृत्ते परस्य दशाननस्य कण्ठसमूहं रामस्य बाणाश्छिन्दन्तु, आशिषि लो। कीदृशं?—हरस्य हासेन रुद्धो निवारितो विगमोऽपायो यस्य, रावणो महादेवस्य प्रीतये स्वशिरांसि छिन्नवान् ततस्तुष्टस्य महादेवस्य हासो जात इति प्रसिद्धिः॥ १३॥ भ०

गच्छन्त्वित्यादि। बहवो बाहव एव बलं यस्य बाहूनां तरूणामिव बहुत्वात्, तं रावणं वीररसस्य शौर्य्यस्य य आबन्धः सन्ततप्रवर्त्तनं तेन रुद्धो निवारितो भयसम्बन्धः त्राससम्पर्को यस्य तं, गिरिवरोरुदेहं गिरिवत् महाकायं सहसा

जिगमिषया संयुक्ता बभूव कपिवाहिनी मते दाशरथेः ।
बुद्धजलालयचित्ता गिरिहरणारम्भसम्भवसमा लोला ॥ १५ ॥

पूर्वार्द्धं निरवद्यम् ।

गुरुगिरिवरहरणसहं संहारहिमारिपिङ्गलं रामबलम् ।
आरूढं सहसा खं वरुणालयविमलसलिलगणगम्भीरम् ॥ १६ ॥

हन्तुं तत्चणं हनिष्याम इति हरिकरिणः कपिहस्तिनः चारुहासाः मम जलं मङ्क्ते सति गच्छन्तु ॥ १४ ॥ ज० म०

एतानि षट् सङ्कीर्णानि ।

गच्छन्त्वित्यादि । हरिकरिणो वानरश्रेष्ठा आयासाभावात् सकौतुकाः सन्तः बहुबाहोः रावणस्य बलं सैन्यं हन्तुं सहसा विरोधेन गच्छन्तु । कीदृशं बलं ?—वीररसस्य शौर्य्यस्य च आबन्धः सततप्रवर्त्तनं तेन रुद्धो निवारितो भयसम्बन्धः त्राससम्पर्को यस्य, गिरिवरस्येव उरुर्महान् देहो यस्य ॥ १४ ॥ भ०

एतानि सङ्कीर्णानि संस्कृतप्राकृतयोस्तुल्यत्वात् ।

जिगमिषयेत्यादि । दाशरथेर्मतेऽभिप्राये सति कपिवाहिनी कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता बभूव । बुद्धजलालयचित्ता विदितसमुद्राभिप्रायाः, गिरीणां यदाहरणमानयनं तस्य च आरम्भसम्भवः तेन समा लोला आकुला इत्येतदर्द्धं निरवद्यम् ॥ १५ ॥ ज० म०

जिगमिषयेत्यादि । दाशरथेः रामस्य मते इच्छायां सत्यां कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता बभूव । कीदृशी ?—बुद्धम् अवगतं जलालयस्य समुद्रस्य चित्तं यया, गिरीणां यत् हरणमानयनं तस्य च आरम्भसम्भवोऽनुष्ठानं तेन समा रामाज्ञानन्तरमेव चलितेति भावः । लोला चञ्चला । पूर्वार्द्धं निरवद्यं संस्कृतमात्रत्वात् जिगमिषयेत्यादौ मूर्द्धन्यषादिश्रवणात् ॥ १५ ॥ भ०

गुर्वित्यादि । ततो रामबलं सहसा तत्चणं खम् आरूढं, गुरूणां गिरिवराणां यदाहरणमानयनं तत् सहत इति मूलविभुजादित्वात् कः, तस्य वा सहं शक्तं सहत इत्यच्, संहारे प्रलये यो हिमारिः अग्निः तद्वत् पिङ्गलं वरुणालयस्य समुद्रस्य यो विमलसलिलगणः निर्मलजलसमूहः तद्वत् गम्भीरं खमिति ॥ १६ ॥ ज० म०

गुरुगिरीत्यादि । ततो रामबलं कर्तृ सहसा तत्चणं खम् आकाशम् आरूढं

अवगाढं गिरिजालं तुङ्गमहाभित्तिरुद्धसुरसञ्चारम्।
अभयहरि रासभीमं करिपरिमलचारुबहलकन्दरसलिलम् ॥१७॥
अलिगणविलोलकुसुमं सकमलजलमत्तकुररकारण्डवगणम्।
फणिसङ्कुलभीमगुहं करिदन्तसमूढसरसवसुधाखण्डम् ॥ १८ ॥
अरविन्दरेणुपिञ्जरसारसरवहारिविमलबहुचारुजलम्।

आरुरोह। रुह: कर्त्तरि क्त:। कीदृशं बलं?—गुरूणां गिरिवराणां यत् हरणमानयनं तत्सहं सहते इति पचादित्वादच्। संहारे प्रलयकाले यो हिमारि: अग्निस्तद्वत् कपिलं तेजस्वित्वमपि तादृशं सूचितं। खं कीदृशं?—वरुणालयस्य समुद्रस्य यो विमल: सलिलगणस्तद्वत् गम्भीरं दुरवगाहम् ॥ १६ ॥ भ०

अवेत्यादि। खम् आरुह्य रामबलेन गिरिजालम् अवगाढम् अवष्टब्धं, तुङ्गाभि: उच्छ्रिताभि: महतीभि: परिणाहवतीभि: भित्तिभि: रुद्ध: सुराणां सञ्चारो यस्मिन् तेषाम् उन्नतत्वात् अभया ये हरय: सिंहास्तेषां रासेन शब्देन भीमं भयानकं करिणां य: परिमल: संमर्दस्तेन चारु शोभनं बहलं घनं कन्दरसलिलं यस्मिन् ॥ १७ ॥ ज० म०

अवगाढमित्यादि। खम् आरुह्य रामबलेन गिरिवृन्दम् अवगाढम् अवष्टब्धं, तुङ्गाभि: उच्चाभि: महतीभि: परिणाहवतीभि: भित्तिभि: रुद्धो निराकृत: सुरस्य सञ्चारो येन यत्र वा, अभयानां हरीणां सिंहानां रासेन शब्देन भयानकं, करिपरिमलेन हस्तिसंमर्दजनितमदगन्धेन चारु शोभनं बहलं प्रचुरं कन्दरसलिलं यत्र ॥ १७ ॥ भ०

अलिगणेत्यादि। अलिगणै: विलोलानि कुसुमानि यत्र, सकमलेषु जलेषु मत्ता: 'कुरराणां कारण्डवानाञ्च गणा यत्र, फणिभि: सङ्कुला व्याप्ता: सत्यो भीमा गुहा यत्र, करिदन्तै: समुत्क्षिप्तं सरसं सान्द्रं वसुधाया: खण्डं यत्र ॥ १८ ॥ ज० म०

अलिगणेत्यादि। कीदृशं गिरिजालम्?—अलिगणै: भ्रमरसमूहै: विलोलानि कुसुमानि यत्र, सकमलेषु जलेषु मत्ता: कुरराणां कारण्डवानाञ्च पक्षिविशेषाणां गणा: समूहा यत्र, फणिभि: सर्पै: सङ्कुला व्याप्ता अत एव भीमा गुहा यत्र, करिदन्तै: समूढम् उत्क्षिप्तं सरसम् आर्द्रं वसुधाया: खण्डं यत्र ॥ १८ ॥ भ०

अरविन्देत्यादि। अरविन्दरेणुभि: पिञ्जरा: पिङ्गला ये सारसा: तेषां रवेण

रविमणिसम्भवहिमहरसमागमाबद्धबहुलसुरतरुधूपम् ॥ १९ ॥
हरिरवविलोलवारणगम्भीरावद्धसरसपुरुसंरावम्।
घोणासङ्गमपङ्काविलसुबलभरसहोरुवराहम् ॥ २० ॥

एतानि पञ्च सङ्कीर्णानि।

उच्चखनुः परिरब्धान् कपिसङ्घा बाहुभिस्ततो भूमिभृतः।

हारि मनोहारि विमलं बहु चारु जलं यत्रेति, रविमणिसम्भवः सूर्य्यकान्तमणिसम्भवः यो हिमहरः अग्निः तेन यः समागमः संश्लेषस्तेन आबद्धो जनितो बहुलः सुरतरु-धूपो यत्र ॥ १९ ॥ ज० म०

अरविन्देत्यादि। पुनः कीदृशं गिरिजालम्?—अरविन्दानां रेणुभिः पिञ्जराः पिङ्गला ये सारसाः पक्षिभेदास्तेषां रवेण मनोहारि निर्मलं बहु चारु जलं यत्र, रविमणिसमुत्पन्नेन हिमहरेण अग्निना यः समागमस्तेन आबद्धो जनितो विपुलः सुरतरुधूपो देवदारुधूपो यत्र, तादृशम्। पीव इति प्राकृतसूत्रे बहुलाधिकारान्न बकारादेशः ॥ १९ ॥ भ०

हरिरवेत्यादि। हरीणां सिंहानां यो रवस्तेन विलोलाः चञ्चवो ये वारणास्तैः गम्भीरो मन्द्र आबद्धो जनितः सरसो भयानकरसयुक्तः पुरुः महान् संरावो यत्र, घोणासम्पर्कात् सम्भवो यस्य पङ्कस्य घोणासमुद्भूतो यः पङ्क इत्यर्थः तेन आविलाः लिप्ताङ्गाः सुबला अत एव भरसहाः उरवश्च वराहा यत्र तत् गिरिजालमवगाढ-मिति ॥ २० ॥ ज० म०

एतानि पञ्च सङ्कीर्णानि।

हरिरवेत्यादि। पुनः कीदृशं गिरिजालं?—हरीणां सिंहानां रवेण शब्देन विलोलाः चञ्चला ये वारणा हस्तिनस्तैः गम्भीरम् आबद्धो जनितः सरसो भयानक-रसान्वितः पुरुः महान् संरावः शब्दो यत्र, घोणाया नासिकायाः सम्पर्कात् सम्भवो यस्य तेन पङ्केन आविला लिप्ताङ्गाः सुबला अत एव भरसहा उरवो महान्तो वराहा यत्र ॥ २० ॥ भ०

एतानि सङ्कीर्णानि प्राकृततुल्यत्वात्।

उच्चखनुरित्यादि। ततोऽवगाहादनन्तरं बाहुभिः परिरब्धान् समाश्लिष्टान्

निष्पिष्टशेषमूर्ध्नः शृङ्गविकीर्णोष्णरश्मिनक्षत्रगणान्॥ २१ ॥
सर्वं निरवद्यम्।

तुङ्गमहागिरिसुभरा बाहुसमारूढभिदुरटङ्का बहुधा।
लवणजलबन्धकामा आरूढा अम्बरं महापरिणाहम्॥ २२ ॥

बहुधवलवारिवाहं विमलायसगुरुमहासिदेहच्छायम्।
बद्धविहङ्गमलं हिमगिरिमिव मत्तकुररवसम्बद्धम्॥ २३ ॥

भूमिभृतः पर्वतान् कपिसङ्घा उच्चखनुः उत्खातवन्तः गमहनेत्युपधालोपः। निष्पिष्टशेषमूर्ध्नः व्याप्तपातालमूलत्वात् चूर्णितनागराजमस्तकान् शृङ्गैः शिखरैः विकीर्णः उष्णरश्मिः आदित्यो नक्षत्रगणश्च यैः। दिवं व्याप्य स्थितत्वात् सर्वं निरवद्यमिति, अत्र प्राकृतस्याप्रयुक्तत्वात्॥ २१ ॥ ज० म०

उच्चखनुरित्यादि। ततोऽवगाहानन्तरं कपिसङ्घाः कपिसमूहा बाहुभिः परिरब्धान् समाश्लिष्टान् भूमिभृतः पर्वतान् उच्चखनुः उत्खातवन्तः। कीदृशान्?—निष्पिष्टाः चूर्णिताः शेषस्य अनन्तस्य मूर्धानो मस्तका यैः पातालमूलत्वात्, शृङ्गैः शिखरैः विकीर्णौ विक्षिप्त उष्णरश्मिः सूर्यो नक्षत्रगणश्च यैः दिवं व्याप्य स्थितत्वात्॥ २१ ॥ भ०

तुङ्गेत्यादि। तुङ्गा उच्चा महान्तः परिणाहवन्तो ये गिरयस्तैः सुभरा जातभरणाः कपयः बाहुभिः समारूढा भिदुराः विदारणशीलाः टङ्का उन्नतप्रदेशा यैः ते, बहुधा अनेकप्रकारं लवणजलबन्धकामाः एवमेवं बद्धव्यमिति जातेच्छाः, आरूढाः अम्बरं महापरिणाहम् अप्रमेयदिग्विभागम्॥ २१ ॥ ज० म०

तुङ्गेत्यादि। लवणजलस्य समुद्रस्य बन्धनं कामयन्तोऽभिलषन्तो वानरा अम्बरम् आकाशम् आरूढाः। बहुधा अनेकप्रकारेण। कीदृशाः?—तुङ्गैः उच्चैर्महद्भिः सपरिणाहैः गिरिभिः सुभरा बहुभारान्विताः बाहुभिः समारूढा गृहीता भिदुरास्तेषां बाहुसम्बन्धात् स्वयमेव वा भिद्यमानाः टङ्का उन्नतप्रदेशा यैः, छिद्भिदिद इति कुरः, कर्मकर्त्तर्य्येव कुर इति केचित्, भिदुरो विदारणशील इत्यन्ये। कीदृशम् अम्बरं?—महापरिणाहम् अप्रमेयदिग्विभागम् कामा आरूढा इति प्राकृते पदयोः सन्धिर्वेति पक्षे सन्ध्यभावः॥ २२ ॥ भ०

बह्वित्यादि। बह्वो धवला वारिवाहा यत्र अम्बरे, विमलायसः अयसो विकारः

चारुकलहंससङ्कुलमचण्डसञ्चारसारसाबद्धरवम् ।
सकुसुमकणगन्धवहं समयागमवारिसङ्गविमलायामम् ॥ २४ ॥
सहसा ते तरुहरिणा गिरिसुभरा लवणसलिलबन्धारम्भे ।
तीरे गिरिमारूढ़ा रामागमरुद्धसभयपरसञ्चारम् ॥ २५ ॥
एतानि चत्वारि सङ्कीर्णानि ।

गुरुरलघुर्महान् योऽसिः खड्गः तस्य यो देहः तस्य छायेव छाया यस्य, बद्धा विरचिता विहङ्गमानां माला पङ्क्तिर्यत्र, मत्तानां कुरराणां रवेण सम्बद्धं युक्तम् अतो हिमगिरिमिव अम्बरम् आरूढ़ा इति ॥ २३ ॥ ज० म०

बहुधवलेत्यादि । पुनः कीदृशम् अम्बरं ?—बह्वी धवला वारिवाहा मेघा यत्र, विमल अयासो लौहविकारो गुरुः महान् योऽसिः खड्गः तच्छरीरस्येव छाया शोभा यस्य, बद्धा विरचिता सम्बद्धा वा विहङ्गमानां पक्षिणां माला पङ्क्तिर्यत्र, मत्तानां कुरराणां रवेण सम्बद्धं संयुक्तं हिमगिरिमिव हिमालयमिव ॥ २३ ॥ भ०

चारुकलेत्यादि । चारुभिः कलहंसैः सङ्कुलं व्याप्तम्, अचण्डसञ्चारैः शनैः सञ्चरद्भिः सारसैः आबद्धो रवो यस्मिन्, सकुसुमकणः सपुष्परेणुर्गन्धवहो वायुर्यत्रेति, वहतीति वहः कर्त्तर्यच् गन्धस्य वह इति सः । समयस्य प्रावृट्कालस्य य आगमः तेन यो वारिसङ्गः तेन प्रक्षालितत्वात् विमला आयामा यत्र, तत् अम्बरम् आरूढ़ा इति ॥ २४ ॥ ज० म०

चारुकलेत्यादि । पुनः कीदृशम् अम्बरं ?—चारुभिः कलहंसैः राजहंसैः कादम्बैर्वा सङ्कुलं व्याप्तम् ।."कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे" इति विश्वः । अचण्डसञ्चारैः शनैः शनैः सञ्चरद्भिः सारसैः आबद्धो रचितो रवो यत्र सकुसुमकणः पुष्पावयवसहितो गन्धवहो वायुर्यत्र, समयस्य वर्षाकालस्य आगमेन यो वारिसङ्गस्तेन प्रक्षालितत्वात् विमल आयामो दैर्घ्यं यस्य, सम्प्रति मेघशून्यत्वात् ॥ २४ ॥ भ०

सहसेत्यादि । ते तरुहरिणाः शाखामृगाः गिरिभिः सुभराः सन्तः लवणसलिलबन्धारम्भे समुद्रबन्धनारम्भे सहसा तत्क्षणं तीरगिरिं तटस्थितं पर्वतम् आरूढ़ाः । अत्र संस्कृतपक्षे संहिताया अविवक्षितत्वात् तीरगिरिम् आरूढ़ा इति नोक्तम्, अन्ये आरूढ़ास्तीरगिरिमिति विपर्ययमस्य पठन्ति, तदयुक्तं—संस्कृतपक्षे असम्भावाद्यत्वं नास्ति, अतो विसर्जनीयस्य सकार एव स्यात् । रामस्य य आगमस्तेन

ततः प्रणीताः कपियूथमुख्यैर्न्यस्ताः कृशानोस्तनयेन सम्यक्।
अकम्प्रबध्नाग्रनितम्बभागा महार्णवं भूमिभृतोऽवगाढ़ाः॥ २६॥
निराख्यातनिरवद्यम्।

रुद्धः सभयानां रिपूणां शत्रूणां सञ्चारो यत्र तीरगिरौ। राम आगत इति तत्र भयात् सञ्चारं त्यक्तवन्त इति॥ २५॥ ज० म०

एतानि चत्वारि सङ्कीर्णानि।

सहसेत्यादि। ते तरुहरिणा वानरा गिरिभिः सुभरा महाभारान्विताः सन्तो लवणसलिलस्य समुद्रस्य बन्धारम्भे सहसा तत्क्षणं तीरे स्थितं गिरिम् आरूढ़ाः। कीदृशं गिरिं?—रामस्य आगमेन रुद्धो निरस्तः सभयानां परेषां शत्रूणां संचारो यत्र। तीरगिरौ राम आयात इति भयात् तत्र शत्रवो न संचरन्तीत्यर्थः। तीरे गिरिम् आरूढ़ा इति पाठो बहुप्राचीनपुस्तके दृश्यते। आरूढ़ास्तीरगिरिमिति पाठे प्राकृतं विसर्गलोपात् सङ्कीर्णत्वं न स्यात्, लुप्तविसर्गपाठे संस्कृतत्वभङ्ग इति मन्यमानाः प्रांचस्तीरे गिरिम् आरूढ़ा इति तीरपदमसमस्त गिरिपदेन च समासं कृत्वा विसन्धिं पठन्ति। यद्यपि वेक्सश्वार्णेऽसे इति समासे नित्य एव सन्धिस्तथापि णवातो डौरिति डित्करणेन सन्धेरनित्यत्वज्ञापनात् मात् स्वर्णावुञ्ज इति दर्शनाच्च समासेऽपि क्वचित् सन्धिर्न भवतीति बोध्यं, समासेऽपि क्वचिद्विसन्धिरिति पाणिनीयाः, इकश्चासवर्णे नित्यसमासवर्जमिति क्रमदीश्वरसूत्रे नित्यसमासवर्जनात् विकल्पसमासेऽत्र पक्षे प्रकृतिभावः स्फुट एव, एवं परसञ्चारमित्यत्र परसञ्चारे इति पठित्वा तीरविशेषणं वदन्ति। तीरगिरिम् आरूढ़ा इति पाठो न शुद्धश्छन्दो भङ्गात्॥ २५॥ भ०

एतानि चत्वारि सङ्कीर्णानि प्राकृतसमानत्वात्।

तत इत्यादि। ततोऽनन्तरं भूमिभृतः पर्वताः कपियूथमुख्यैर्नीलादिभिः कृशानोस्तनयस्य नलस्य प्रणीताः अर्पिताः सन्तस्तेनैव कृशानुतनयेन सम्यक् साधु न्यस्ताः सन्तः महार्णवम् अवगाढ़ाः अवष्टब्धवन्तः, अकम्प्राः स्थिरा ब्रध्नाग्रनितम्बानां भागा येषां ते, ब्रध्नो मूलम् इण्जिदो उष्यविभ्यो नगित्यधिकृत्य बृंहेर्ब्रधि बुधो चेत्यौणादिको नक्। इदं निराख्यातं तिङन्तपदाभावात् निरवद्यञ्च प्राकृताभावात्॥ २६॥ ज० म०

तत इत्यादि। तदनन्तरं कपियोधमुख्यैर्नीलादिभिः प्रणीताः दत्ताः कृशानोः अपत्येनतनयेन नलेन सम्यक् साधु न्यस्ता अर्पिता भूमिभृतः पर्वताः महार्णवम् अव-

तेनेऽद्रिबन्धो ववृधे पयोधिस्तुतोष रामो मुमुदे कपीन्द्रः ।
तत्रास शत्रुर्ददृशे सुवेलः प्रापे जलान्तो जहृषुः प्लवङ्गाः ॥२७॥

एकान्तराख्यातनिरवद्यम् ।

भ्रेमुर्ववल्गुर्ननृतुर्जजक्षुर्जगुः समुत्पुप्लुविरे निषेदुः ।

गाढाः आच्छादयामासुः ! कीदृशाः ?—अकम्पाः अकम्पनशीलाः स्थिरा ब्रध्नाग्रनितम्ब-भागा येषां "मूलं ब्रध्नोऽङ्घ्रिनामकः" इत्यमरः। बुध्नी ङ वेदने नाम्नाग्रे तिक् चेति क्तः, बृ धु ङ् ल्ट वृद्धौ इत्यस्मात् क्त इति केचित्, ब्रध्नशब्दोऽपि दृश्यते। अग्रं शृङ्गं, नितम्बो मध्यम्। निराख्यातमाख्यातप्रत्ययरहितं निरवद्यं केवलसंस्कृतत्वात् तालव्यशादि-मत्त्वात् ॥ २६ ॥ म०

तेन इत्यादि। अद्रिबन्धस्तेने शनैर्विस्तारं गतः। अत एव ववृधे पयोधिर्वृद्धिं गतः, गिरिभिः पूर्य्यमाणोदरत्वात् तीरं प्लावयति स्म। तुतोष रामस्तुष्टवान् सुकरम् इदानीं शक्रव्यापादनमिति। मुमुदे कपीन्द्रः हृष्टवान् प्राप्तो मे प्रत्युपकारकाल इति। तत्रास शत्रुः त्रासमुपगतः सेतुं बद्धवान् इदानीम् आयातो राम इति। ददृशे सुवेलः ढौकमानैः सर्वैः दृष्टः जलान्तश्च प्रापे प्राप्तः ततो जहृषुः हृष्टाः प्लवङ्गा स्वाम्यादेशः सम्पादित इति। एतदेकान्तराख्यातं सुबन्तपदैर्व्यवधानात् निरवद्यंच प्राकृता-भावात् ॥ २७ ॥ ज० म०

तेन इत्यादि। अद्रीणां बन्धस्तेने वानरैर्विस्तारितः। पयोधिः ववृधे वृद्धिं गतः, पर्वतैः पूर्य्यमाणत्वात् तीरं प्लावितवानित्यर्थः। रामस्तुतोष तुष्टः सुकरम् इदानीं शत्रुव्यापादनमिति मत्वा। 'कपीन्द्रः सुग्रीवो मुमुदे हृष्टः प्राप्तो मे प्रत्युपकारकालः इति मत्वा। शत्रुः दशाननः तत्रास भीतः, अत्रापि राम आगत इति मत्वा। सुवेलो ददृशे वानरैर्दृष्टः यतो जलस्यान्तोऽवसानं प्रापे प्राप्तः। अत एव प्लवङ्गा वानरा जहृषुः हृष्टाः स्वाम्यादेशः सम्पादित इति मत्वा। एतदेकान्तराख्यातं स्वाद्यन्तपदैर्व्यवधानात् निरवद्यंच प्राकृताभावात् ॥ २७ ॥ भ०

भ्रेमुरित्यादि। ते पारं प्राप्य केचित् प्रदेशदर्शनोत्सुकाः भ्रेमुः भ्रान्ताः अन्ये ववल्गुः तोषं गतवन्तः; उख उखीत्यत्र वल्गतिर्गतौ पठ्यते। केचित् अतिहर्षात् ननृतुः। अन्ये रावणपराक्रमान् न्यक्कुर्वन्तो जजक्षुः हसितवन्तः बुभुक्षया वा फलानि भक्षितवन्तः, जक्ष भक्षहसनयोः। केचित् जगुः गायन्ति स्म। केचित् समुत्पुप्लुविरे उत्-

आस्फोटयाञ्चक्रुरभिप्रणेदू रेजुर्ननन्दुर्वियुः समीयुः ॥ २८ ॥

आख्यातमाला।

गिरिपङ्कचारुदेहं कक्कोललवङ्गबद्धसुरभिपरिमलम्।
बहुबहलोरुतरङ्गं परिसरमारूढमुद्धरं लवणजलम् ॥ २९ ॥

प्लुत्वोत्प्लुत्य गच्छन्ति स्म। केचित् श्रान्ता निषेदुः निषण्णाः। केचित् आस्फोटयाञ्चक्रुर्वयं युध्याम इति आस्फोटं कुर्वन्तीति ण्यन्ताल्लिट्याम्। केचित्तोषादभिप्रणेदुः सुष्ठु नादितवन्तः। केचित् रेजुः दीप्तवन्तः। केचित् ननन्दुर्वयम् ईदृशं कर्म्म कृतवन्त इति। अन्ये वियुः इतस्ततो गच्छन्ति स्म। केचित् समीयुः एकत्र सङ्गताः। आख्यातमालेति तिङन्तमाला ॥ २८ ॥ ज० म०

भ्रेमुरित्यादि। सेतुना पारं प्राप्य केचित् भ्रेमुः प्रदेशदर्शनोत्सुका इतस्ततो गताः। अपरे ववल्गुः वल्गितवन्तः वल्गु व्रजे अनेकार्थत्वात् हर्षादिहेतुकप्रलापार्थेऽपि वर्त्तते। अन्ये ननृतुः हर्षात् नृत्यं चक्रुः। अन्ये जजक्षुः फलानि भक्षितवन्तः, हर्षात् हसितवन्तो वा, जक्ष भक्षहसनयोः। केचित् जगुः गायन्ति स्म। केचित् समुत्पुप्लुविरे उत्प्लुत्य गतवन्तः। केचित् निषेदुः श्रमापनोदनार्थम् उपविष्टाः। केचिदास्फोटमहङ्कारं चक्रुः। लिः कृत्याख्याने ञिः। अन्येऽभिप्रणेदुः पुरीसान्निध्ये शब्दं चक्रुः, केचित् रेजुः पुष्पादिना शोभितवन्तः। अन्ये ननन्दुः कृतकृत्यत्वात् हर्षं प्राप्ताः। केचित् वियुः यूथादन्यत्र गताः कौतुकात्। अपरे समीयुः एकत्र सम्भूय स्थिताः। आख्यातमालेति पुष्पतुल्यानां क्रियापदानां ग्रथनात् उपसर्गस्य लिङ्गत्वेऽपि पृथक् स्थितत्वाभावात् क्रियाद्योतकत्वे नाख्याततुल्यतया व्यपदेशः ॥ २८ ॥ भ०

गिरीत्यादि। गिरीणां प्रक्षिप्यमाणानां यः पङ्कः गैरिकादिधातुकर्दमः तेन चारुदेहं, कक्कोललवङ्गाभ्यां बद्धः सुरभिः परिमलो गन्धो यस्मिन्, बहवः प्रभूता बहलाः स्थूला उरवः उत्तालतरङ्गा यस्य तत्, ईदृशं लवणजलम् उद्धरम् उद्धृतं कर्म्मभूतं परिसरं तटम् आरूढं सेतुना निवारितगतित्वात् ॥ २९ ॥ ज० म०

गिरिपङ्केत्यादि। लवणजलं कर्त्तृ परिसरं पर्य्यन्तभुवं तटम् आरूढं प्राप सेतुना निवारितगतित्वात्। कीदृशं जलं?—गिरीणां प्रक्षिप्तानां यो गैरिकादिधातुपङ्कस्तेन चारु देहं यस्य वर्णान्तरोत्पादनात्, कक्कोलैर्लवङ्गैश्च गन्धद्रव्यविशेषैः बद्धो रचितः सुरभिः परिमलो विमर्दोत्थो गन्धो यत्र, बहवः प्रचुरा बहलाः स्थूला उरव उच्चाः

लोलं कूलाभिगमे खे तुङ्गामलनिबद्धपुरुपरिणाहम् ।
सुरगङ्गाभरणसहं गिरिबन्धवरेण लवणसलिलं रुद्धम् ॥ ३० ॥
आरूढ़श्च सुवेलं तरुमालाबन्धहारिगिरिवरजालम् ।
रावणचित्तभयङ्करमापिङ्गललोलकेसरं रामबलम् ॥ ३१ ॥

तरङ्गा यस्य, उद्धरं मर्य्यादामतिक्रान्तम् । प्राकृते कल्लोलशब्दस्य नानुस्वारविधिः, कल्लोलशब्दस्यैव तन्त्रोल्लेखात् ; यत्तु कर्पूरमञ्जर्य्यां कङ्कोलीकुलं कुपित इति तत्रापि कङ्कोलीत्येव पठनीयं—लेखकप्रमादादनुस्वारपाठः, वैकल्पिकोऽप्यनुस्वार इत्यन्ये ॥ २९ ॥ भ०

लोलमित्यादि । कूलाभिगमे तटगमने लोलं चञ्चलं, खे आकाशे तुङ्गञ्च तद-मलञ्चेति तुङ्गामलं निबद्धः संयुक्तः पुरुः महान् परिणाहो यस्य तुङ्गामलञ्च तन्निबद्ध-पुरुपरिणाहञ्चेति । विर्य्यति आरोहपरिणाहाभ्यां युक्तमित्यर्थः । सुरगङ्गायाः मन्दा-किन्याः यद्भरणं पूरणं तत्र सहं शक्तं, तादृशं लवणजलं गिरिबन्धवरेण सेतुना रुद्धम् ॥ ३० ॥ ज० म०

लोलमित्यादि । गिरिबन्धवरेण सेतुना लवणजलं रुद्धम् । कीदृशं ?—कूलाभिगमे तटागमने लोलं चञ्चलं, खे आकाशे, तुङ्गञ्च तदमलञ्चेति तुङ्गामलं, निबद्धः संयुक्तः पुरुः महान् परिणाहो विशालता यस्य, तुङ्गामलञ्च तत् निबद्धपुरुपरिणाहंचेति विग्रहः । खे आरोहपरिणाहाभ्यां युक्तमित्यर्थः । सुरगङ्गाया मन्दाकिन्याः पूरणे समर्थं विहङ्गत्वात् । प्राकृते कूलाभिगमे इत्यत्र भकारस्य हकारो न भवति, प्रायो-ग्रहणात् ॥ ३० ॥ भ०

आरूढ़मित्यादि । रामबलं तटे स्थित्वा आरूढ़ं च, सुवेलं पर्वतं, चकारस्य प्राकृते स्वरशेषता न भवति, पदमध्यान्तयोरवर्त्तमानत्वात् । तरुमालाया य आबन्धः तेन हारि मनस्तुष्टिकरं तादृशं गिरिवराणां पर्य्यन्तगिरीणां जालं यस्य सुवेलस्य । रावणचित्तस्य भयङ्करं रामबलम् आपिङ्गलानि लोलानि केसराणि यस्य तदिति ॥ ३१ ॥ ज० म०

आरूढ़मित्यादि । रामबलं समुद्रम् उत्तीर्य्य सुवेलं पर्वतम् आरूढ़म् । चकारस्य प्राकृते लोपो न भवति, पदमध्यान्तयोरवर्त्तमानात् । कीदृशं सुवेलं ?—तरुमालाया आबन्धेन वेष्टनेन हारि मनोहारि पर्य्यन्तगिरिवरजालं यस्य यत्र वा । रामबलम्

लङ्कालयतुमुलारवसुभरगभीरोरुकुञ्जकन्दरविवरम्।
वीणारवरससङ्गमसुरगणसङ्कुलमहातमालच्छायम्॥ ३२॥
सरसबहुपल्लवाविलकेसरहिन्तालबद्धबहलच्छायम्।
ऐरावणमदपरिमलगन्धवहाबद्धदन्तिसंरम्भरसम्॥ ३३॥

कीदृशं ?—रावणचित्तस्य भयजनकम्, आपिङ्गलानि लीलानि चञ्चलानि केसराणि यस्य। केसरशब्दो दन्त्यमध्यः॥ ३१॥ भ०

लङ्केत्यादि। लङ्कालयानां राक्षसानां यस्तुमुलो महानारवः तेन सुभराः परिपूर्णाः गम्भीरोरुकुञ्जा गम्भीरमहागहनानि कन्दरविवराणि च यत्र सुवेलं, वीणारवे यो रसस्तृष्णा तेन सङ्गमः समागमो येषां सुरगणानां ते सुरगणाश्चेति तैः सङ्कुला व्याप्ता महातमालच्छाया यत्रेति॥ ३२॥ ज० म०

लङ्केत्यादि। कीदृशं ?—लङ्कालयानां राक्षसानां यस्तुमुलो महानारवस्तेन सुभराणि परिपूर्णानि गम्भीराणि उरूणि महान्ति कुञ्जानि कन्दराणि विवराणि च यस्य यत्र वा, वीणारवस्य रसेनेच्छया यः सङ्गमः परस्परमिलनं तेन हेतुना सुरगणैः सङ्कुला व्याप्ता महातमालतरुच्छाया यत्र, वीणारवरसेन सङ्गमो येषां सुरगणानामित्यन्ये॥ ३२॥ भ०

सरसेत्यादि। सरसाः सार्द्राः ये बहवः पल्लवाः तैः आविला अन्धकारिता ये केसरवृक्षाः हिन्तालवृक्षाश्च तैः बद्धा बहला घना छाया यत्र। सुवेले ऐरावणस्य ऐरावतस्य हस्तिनो मदपरिमलो यस्मिन् गन्धवहे, तादृशेन गन्धवहेन बद्धो दन्तिनां हस्तिनां संरम्भरसः क्रोधरसो यत्रेति, ऐरावण ऐरावत इत्युभयमपि प्राकृते साधु॥ ३३॥ ज० म०

सरसेत्यादि। पुनः कीदृशं सुवेलं ?—सरसैः स्निग्धैः बहुभिः पल्लवैः आकुला व्याप्ताः केसरा हिन्तालाश्च वृक्षाः तैः बद्धा जनिता बहला निविडा छाया यत्र, पल्लवाविलकेसरेति पाठे—आविला अन्धकारिताः ऐरावणसम्बन्धिनो मदस्य परिमलो यत्र, तादृशेन गन्धवहेन बद्धो जनितो दन्तिनां क्रोधरसो यत्र, ऐरावत ऐरावण इत्युभयं प्राकृते साधु। यद्यप्यैकारस्य प्राकृते नित्यमेकारादेश उक्तस्तथापि ऐदेता च केषाञ्चिदत्यक्तत्वात् तन्मते नेदमुदाहृतम्, अथवो उरम्मि अध-मिति॥ ३३॥ भ०

**तुङ्गतरुच्छायारुहकोमलहरिहारिलोलपल्लवजालम् ।**
**हरिणभयङ्करसकुसुमदावसमच्छविविलोलदाड़िमकुञ्जम् ॥ ३४ ॥**
**कलहरिकण्ठविरावं सलिलमहाबन्धसङ्कुलमहासालम् ।**
**चलकिसलयसम्बद्धं मणिजालं सलिलकणमयं विवहन्तम् ॥ ३५ ॥**

---

तुङ्गेत्यादि । तुङ्गतरूणां या छाया तस्यां रोहन्तीति इगुपधलक्षणः कः, तुङ्गतरुच्छायारुहाः विटपाः, तेषां कोमलं हरिद्धरितं हारि तुष्टिकरं लोलं पल्लवजालं यत्र, हरिणानां भयङ्करा दावसदृशत्वात् सकुसुमा दावसमच्छवयः दावाग्नितुल्याः लोलदाड़िमकुञ्जा यत्र ॥ ३४ ॥ ज० म०

तुङ्गेत्यादि । पुनः कीदृशं सुवेलं ?—तुङ्गानां तरूणां छायासु रुहं जातम् अत एव कोमलं मृदु हरिद्वर्णं हारि मनोहरं लोलं चञ्चलं पल्लवानां जालं समूहो यत्र, हरिणानां भयङ्करो दावसादृश्याद्भयजनकः सकुसुमः पुष्पैः सह वर्त्तमानः, अत एव दावेन वनाग्निना समा छविस्तुल्यकान्तिः विलोलः चञ्चलो दाड़िमकुञ्जो यत्र, अग्निशिखापि लोला भवति "दवो दावो वनारण्यवह्नौ" इत्यमरः । रुहेरिगुपधत्वात् कृगज्ञाप्रीजुञ इति कः । पल्लववासमिति केचित् पठन्ति । तदा संस्कृते बालशब्दस्य नवार्थस्य विशेषणस्य परनिपातोऽभिधानात् कर्त्तुं शक्यते । प्राकृते तु पूर्वनियम एव । तस्मात् पल्लवं बलति धरयतीति ढात् षणिति षण् । प्राकृते छविशब्दे वकारलोपो न भवति, तत्र प्रायोग्रहणात् । दाड़िमेत्यत्र दालिमेति क्वचित् पाठः, संस्कृते डलयो रलयोरैक्यमिति परः, स्वमते मनीषादित्वात् ताद्रूप्यं, प्राकृते डो ल इति लत्वं क्वचिन्न भवति, तत्र प्रायोग्रहणात् ; हेमचन्द्रेण तु टवर्गस्य वा ल इत्युक्ता दाड़िमं दालिममित्युदाहृतम् ॥ ३४ ॥ भ०

कलेत्यादि । कलो मनोहरः हरीणां कण्ठविरावो यत्र, सलिलस्य यो महाबन्धः तेन सङ्कुला महान्तः सालाः सालवृक्षा यत्र, चलकिसलयेषु सम्बद्धं संलग्नं सलिलकणमयं सलिलकणरूपं मणिजालं मणिसमूहमिव विवहन्तं धारयन्तम् ॥ ३५ ॥ ज० म०

कलेत्यादि । पुनः कीदृशं सुवेलं ?—कलोऽव्यक्तमधुरो हरेः सिंहस्य कण्ठविरावो यत्र, सलिलमहाबन्धेन सेतुना सङ्कुलाः पयोव्याप्ता महान्तः सालवृक्षा यत्र, चञ्चलैः किसलयैः पल्लवैः संयुक्तं मणिजालं विवहन्तं विशेषेण धारयन्तम् । मणिजालं कीदृशं ?—सलिलकणान् मिनोति अतिस्निग्धत्वात् प्रक्षिपतीति पचादित्वादन्, सलिलकणाः

तुङ्गमणिकिरणजालं गिरिजलसङ्घट्टबद्धगम्भीररवम्।
चारुगुहाविवरसभं सुरपुरसममभरचारणसुसंरावम्॥ ३६॥
विमलमहामणिटङ्कं सिन्दूरकलङ्कपिञ्जरमहाभित्तिम्।
वीरहरिदन्तिसङ्गमभयरुद्धविभावरीविहारसमीहम्॥ ३७॥
समहाफणिभीमविलं भूरिविहङ्गतुमुलोरुघोरविरावम्।
वारणवराहहरिवरगोगणसारङ्गसङ्कुलमहासालम्॥ ३८॥

प्रस्तुता यत्रेति वा अभिधानात् प्रस्तुतवृत्तेः मयट्, सलिलसालकिसलयशब्दा दन्त्या-न्विताः॥ ३५॥ भ०

तुङ्गेत्यादि। तुङ्गमणीनां किरणजालं यत्रेति, गिरिजलानि निर्झरजलानि तेषां यः सङ्घट्टः परस्परसंश्लेषस्तेन बद्धौ गम्भीरौ रवौ यत्र, चारु गुहाविवरमेव सभा शाला यत्र, अमरचारणानां गन्धर्वाणां गायतां शोभनः संरावो यत्र, अत एव अमर-पुरसमम्॥ ३६॥ ज० म०

तुङ्गमणीत्यादि। पुनः कीदृशं?—तुङ्गं मणिकिरणजालं यत्र, गिरिजलानां सङ्घट्टेन मिथोऽभिघातेन बद्धौ जनितौ गम्भीररवौ यत्र, चारु गुहाविवरमेव सभा गृहं यत्र, अमरचारणानां गन्धर्वाणां शोभनः संरावो यत्र, अत एव अमरपुरस्य समान-मिति॥ ३६॥ भ०

विमलेत्यादि। विमलमहामणीनां पद्मरागादीनां टङ्काः छेदा यत्र, अतश्च सिन्दूरकलङ्केन लाञ्छनेन पिञ्जरा इव महाभित्तयो यस्य, वीराणां हरीणां दन्तिनाञ्च यः सङ्गमोऽन्योन्यगमनं तस्मात् यद्भयं तेन रुद्धा निवारिता विभावर्य्यां विहारसमीहा विहरणेच्छा यत्र॥ ३७॥ ज० म०

विमलेत्यादि। पुनः कीदृशं सुवेलं?—विमला महामणीनां टङ्काः छेदा यत्र, अत एव सिन्दूरस्य कलङ्केन लाञ्छनेन पिञ्जरा महाभित्तयो यत्र, वीराणां हरीणां सिंहानां दन्तिनाञ्च यः सङ्गमो मिथः संसर्गः तस्मात् भयेन रुद्धा निरस्ता विभावर्य्यां रात्रौ विहारसमीहा विहरणेच्छा यत्र, विभावर्य्याः पुंश्चल्या विहारसमीहा यत्रेति वा, विभावरी हरिद्रायां कुट्टिन्यां चन्द्रयोषितीति विश्वः। प्राकृते भकारस्य हकारो न भवति तत्र प्रायोग्रहणात्॥ ३७॥ भ०

समहाफणीत्यादि। समहाफणीनि अत एव भीमानि विलानि विवराणि यत्र, भूरीणां

चलकिसलयसविलासं चारुमहीकमलरेणुपिञ्जरवसुधम् ।
सकुसुमकेसरबाणं लवङ्गतरुतरुणवल्लरीवरहासम् ॥ ३९ ॥
अमलमणिहेमटङ्कं तुङ्गमहाभित्तिरुचिररुरुपङ्कगमम् ।
अमरारूढपरिसरं मेरुमिवाविरलसरसमन्दारतरुम् ॥ ४० ॥

विहङ्गानां तुमुलोऽनेकप्रकार उरुर्महान् घोरो रौद्रो विरावो यत्र, वारणादिभिः स्कन्धकषणार्थिभिः सङ्कुला महासाला यत्र ॥ ३८ ॥ ज० म०

समहाफणीत्यादि । पुनः कीदृशं सुवेलं ?—महाफणिसहितानि अत एव भीमानि बिलानि विवराणि यत्र, भूरीणां बहूनां विहङ्गानां तुमुलोऽनेकरूपो व्याकुलो वा उरुर्महान् घोरो रौद्रो विरावो यत्र, हस्तिभिः शूकरैः सिंहवरैः गोगणैः हरिणैश्च सङ्कुलाः स्कन्धकण्डूयनार्थं व्याप्ता महान्तः सालवृक्षा यत्र । नाम्न्यन्ये तिक् चेति सर्व्वेरण् प्रत्ययः सारङ्गो दन्त्यादिः ॥ ३८ ॥ भ०

चलेत्यादि । चलैः किसलयैः हस्तैरिव सविलासं प्रारब्धनृत्यं, चारूणां महीकमलानां स्थलपद्मानां रेणुभिः पिञ्जरा वसुधा यत्र, सकुसुमा केसराः बाणाश्च यत्र, लवङ्गतरोः तरुणा या वल्लर्य्यः प्ररोहाः ता एव वरो हासो विकाशाख्यो यत्र ॥ ३९ ॥ ज० म०

चलेत्यादि । पुनः कीदृशं सुवेलं ?—चञ्चलैः किसलयैः हस्तैरिव सविलासं प्रारब्धनृत्यमिव, चारुमहीकमलानां शोभनस्थलपद्मानां रेणुभिः पिञ्जरा वसुधा यत्र, सकुसुमाः केसराः पन्नागा बाणा झिण्टी यत्र, लवङ्गतरोः तरुण्या वल्लर्य्या मञ्जर्य्या वरः श्रेष्ठो हासो विकाशो यत्र । एतेन लवङ्गतरोः नायकत्वं मञ्जर्य्याश्च नायिकात्वं व्यङ्ग्यम् ॥ ३९ ॥ भ०

अमलेत्यादि । अमलमणीनां हेमादीनां टङ्काः छेदा यत्र, तुङ्गा उच्चा महती विस्तारवती या भित्तिः तया रुचौ रुरूणां मृगाणां पङ्कगमः पङ्केन गमनं यत्र । गमेश्च इत्यादिना अप् । वङ्कगम इति पाठान्तरम् । तत्र वङ्कः कुटिलो गमो यत्र । वकि कौटिल्ये इत्यस्य रूपम् । अमरैः आरूढ़ाः परिसराः तटा यत्र । अविरलाः सरसा मन्दारतरवो देववृक्षा यत्र तम्, इत्थं मेरुमिव ॥ ४० ॥ ज० म०

अमलमणीत्यादि । पुनः कीदृशं सुवेलम् ?—अमलानां निर्मलानां मणीनां हेम्नाञ्च टङ्काः छेदा यत्र, पूर्वं मणिटङ्कमात्रमुक्तं सम्प्रत्युभयटङ्क इति भेदः, किंवा

फलभरमन्थरतरुवरमविदूरविरूढहारिकुसुमापीड़म्।
हरिणकलङ्कमणिसम्भवबहुवारिसुभरगम्भीरगुहम्॥ ४१ ॥
जलकामदन्तिसङ्कुलसहेमरसचारुधवलकन्दरदेहम्।
अङ्कुररोहसमच्छविरुरुगणसंलीढ़तरलहरिमणिकिरणम्॥ ४२ ॥

अमला मणयी यत्रेति विग्रहः, तुङ्गा उच्चा महती विस्तीर्णा या भित्तिः तया रुरूणां मृगविशेषाणां पङ्के गमो गमनं यत्र। वङ्कगममिति पाठे—वङ्कः कुटिलो गमो यत्र, वकिङ् कौटिल्ये इत्यस्य रूपम्। अमरैः आरूढ़ः परिसरः पर्यन्तभूर्यस्य, अविरला घनाः सरसा मन्दारतरवो देवतरवो यत्र, अत एव मेरुमिव॥ ४० ॥ भ०

फलेत्यादि। फलभरेण मन्थरा ईषन्नताः तरुवरा यत्र, अविदूरे विरूढ़ा हारिणः कुसुमापीड़ा यत्र, पुष्पस्तवकानां हस्तग्राह्यत्वात्, हरिणकलङ्कमणिः महाचन्द्रकान्तः तस्मात् सम्भवो यस्य बहुवारिणः तेन सुभराः परिपूर्णा गम्भीरा गुहा यस्य। अत्र, मणिमहत्तया वारिमहत्वात् गम्भीरगुहापूरणमिति॥ ४१ ॥ ज० म०

फलभरेत्यादि। पुनः कीदृशं सुवेलं?—फलभरेण मन्थरा ईषन्नताः तरुवरा यत्र, अविदूरे समीपे विरूढ़ा उत्पन्ना हारिणो मनोहराः कुसुमापीड़ाः पुष्पस्तवका यत्र, हरिणकलङ्कमहामणेः चन्द्रकान्तात् सम्भवो येषां तादृशैः बहुभिः वारिभिः सुभराः परिपूर्णा गम्भीरगुहा यस्य, मणिबाहुल्येन वारिबाहुल्यं तेन गम्भीरस्थानपूरणम्। प्राकृते आपीड़शब्दे पकारस्य बकारादेश ईकारस्य लोपो भवति। यथा आवड़ इति, तथापि बहुलाधिकारात् न भवति॥ ४१ ॥ भ०

जलेत्यादि। जलमेतत् इत्येवं कामैः दन्तिभिः सङ्कुलाः सहेमरसाः सह हेमरसेन वर्त्तमानाः चारवः शोभनाः धवलाः कन्दरदेहाः कन्दरसन्निवेशा यत्र, रोहणं रोहः अङ्कुरात् रोहो यस्य शस्यस्य तेन समच्छवयस्तुल्यवर्णा रुरुगणाः तैः संलीढ़ाः तरलाः चञ्चला हरिमणिकिरणा मरकतमयूखाः यत्र॥ ४२ ॥ ज० म०

जलकामेत्यादि। पुनः कीदृशं सुवेलं?—जलं कामयन्ते इति जलकामा हस्तिनः तैः सङ्कुला व्याप्ताः सहेमरसाः सुवर्णपारदसहिताः चारवः शोभना धवलाः शुक्लाः कन्दरदेहा गुहासन्निवेशा यत्र, अङ्कुरात् रोहः सम्भवो यस्य शस्यस्य अङ्कुरस्य प्ररोहो वा तेन समच्छवयस्तुल्यवर्णाः अत एव भ्रमात् रुरूणां मृगविशेषाणां गणैः संलीढ़ा जिह्वया स्पृष्टाः तरलाः चञ्चला हरिमणीनाम् इन्द्रनीलमणीनां किरणा यत्र। हरिशब्दो हरितपर्य्यायः॥ ४२ ॥ भ०

**गाढ़समीरणसुसहं भीमरवोत्तुङ्गवारिधरसङ्घट्टम्।**
**धवलजलवाहमालासम्बन्धावद्धहिमधराधरलीलम्॥ ४३॥**
**लवणजलबन्धसरसं तरुफलसम्पत्तिरुद्धदेहायासम्।**
**लङ्कातोरणवारणमारूढं समरलालसं रामबलम्॥ ४४॥**

गाढ़ेत्यादि। गाढ़ो महान् यः समीरणः तं सुसहत इति मूलविभुजादित्वात् कः, भीमरवाः तुङ्गा ये वारिधरा तेषां सङ्घट्टो यत्र, धवला ये जलवाहा तेषां मालया यत्सम्बद्धं यः सम्बन्धः सम्बन्धनं भावे क्तः, तेन करणभूतेन आबद्धा अनुकृता हिमधराधरस्य हिमवतो धराधरस्य लीला विभ्रमो येन तं सुवेलम् आरूढम्॥ ४३॥ ज० म०

गाढ़मित्यादि। पुनः कीदृशं सुवेलं?—गाढ़ो महान् यः समीरणो वायुः तस्य सुसहं पचादित्वादन्, अतिस्थिरत्वात् भीमरवा उत्तुङ्गाश्च ये वारिधरा मेघाः तेषां सङ्घट्टः संश्लेषो यत्र। भीमरवेति उत्तुङ्गेति सङ्घट्टविशेषणं वा। रवोत्तुङ्गेत्यत्र यद्यपि प्राकृते लोपोऽच इत्यनेन अचि परे अचो लोपे रवुत्तुङ्गेति स्यात्, तथापि बहुलाधिकारात् नास्ति लोपः। धवलानां मेघानां मालया यत्सम्बद्धं भावे क्तः। सम्बन्धेति क्वचित् पाठः। तेन करणभूतेनाबद्धा कृता हिमधराधरस्य हिमालयपर्वतस्य लीला विभ्रमो येन, तं सुवेलमारूढं रामबलमिति सम्बन्धः॥ ४३॥ भ०

त्रयोदशश्लोकैरादिकुलकम्।

रामबलं कीदृशमित्याह

लवणेत्यादि। लवणजलबन्धाद्धेतोः सरसं सहर्षं, तरुफलसम्पत्त्या रुद्धोऽपनीतः देहायासः चुत्पीड़ा यस्य, लङ्कातोरणस्य वारणं निषेधकम्, आलोलं चञ्चलं समरलालसं रणसतृष्णं रामबलं तं सुवेलमारूढमिति पूर्वेण योज्यम्॥ ४४॥ ज० म०

लवणेत्यादि। रामबलम् आरूढं सुवेलमिति पूर्वोक्तमिहापि योज्यम्। विशेषाभिधानाय पुनरुक्तस्यादोषत्वात्। आरूढमित्यत्रालोलमिति पाठे—रामबलं समरलालसं जातमित्येवं साध्यम्। कीदृशं रामबलं?—लवणजलबन्धात्सरसं सहर्षं, तरुफलसम्पत्त्या रुद्धोऽपनीतो देहायासो बुभुक्षापीड़ा यस्य। तरुफलसम्पत्तिबद्धदेहाभोगमिति क्वचित् पाठः, तदा भोगशब्दस्य प्राकृते गकारलोपो न भवति, प्रायोग्रहणात्। लङ्कायास्तोरणस्य बहिर्द्वारस्य वारणं निषेधकं किं वा सुवेलमारुह्य

उरुपणववेणुगुञ्जाभेरीपेरीरुझल्लरीभीमरवम्।
ढक्काघण्टातुमुलं सन्नद्धं परबलं रणायाससहम्॥ ४५॥
आरूढबाणघोरं विमलायसजालगूढपीवरदेहम्।
चञ्चलतुरङ्गवारणसङ्घट्टाबद्धचारुपरिणाहगुणम्॥ ४६॥
असितोमरकुन्तमहापट्टिसभल्लवरबाणगुरुपुरुमुसलम्।
वीररसालङ्कारं गुरुसञ्चारहयदन्तिसमहीकम्पम्॥ ४७॥

लङ्कातीरगं रावणतुल्यं वहिर्द्वारस्थितहस्तिनं वा आरूढमित्यन्वयः। समरे लालसा महतीच्छा यस्य॥ ४४॥ भ०

तस्मिन्नारूढे परबलं सन्नद्धमित्थं प्रवृत्तमित्यर्थः। इत्थम् कथं तदाह

उरुपणवेत्यादिना। उरुपणवादीनां भीमो रवो यस्मिन् परबले तत्। उरुपणवो महान् पणवः, पेला वाद्यविशेषः, उरुझल्लरी महती झल्लरी। ढक्काघण्ट्योस्तुमुलः संमूर्च्छितः शब्दो यत्रेति रणायाससहं रणक्लेशसहम्॥ ४५॥ ज० म०

उरुपणवेत्यादि। परस्य रावणस्य बलं सन्नद्धं युद्धायोद्यतमित्यर्थः। कीदृशम्?—उरूणां पणवादीनाम् उरुझल्लर्याश्च भीमो रवो यत्र, समौ पणवकर्दलौ "गुञ्जापि पटहे प्रोक्ता काकवल्यां कलध्वनौ" इति विश्वः। ढक्कानां घण्टानाञ्च तुमुलः संमूर्च्छितः शब्दो यत्र, रणायाससहं संग्रामक्लेशसहम्॥ ४५॥ भ०

आरूढेत्यादि। धनुषि आरूढबाणत्वात् घोरं परबलं विमलेनायसजालेन वर्म्मणा गूढश्छन्नः पीवरः स्थूलो देहो यस्य, चञ्चलानां तुरङ्गाणां वारणानाञ्च यः परस्परसङ्घट्टः श्लेषणं तेन आबद्धश्चारुः परिणाहगुणः विस्तार एव गुणो यस्य, तत् परबलं सन्नद्धम्॥ ४६॥ ज० म०

आरूढेत्यादि। कीदृशं परबलम्?—आरूढम् अर्थात् धनूंषि बाणा यस्य तच्च तत् घोरं रौद्रञ्चेति विग्रहः; आरूढो बाणो यत्र, तेन धनुषा घोरं वा। विमलेन अयोविकारेण वर्मणा कवचेन गूढ आच्छादितः स्थूलो देहो यस्य। वर्मेत्यत्र जालपदं पठित्वा विमलेनायसेन जालतुल्येन सन्नाहेनेत्यन्ये प्राहुः। चञ्चलानां तुरङ्गाणां हस्तिनाञ्च यः सङ्घट्टः संश्लेषणेनाबद्धश्चारुपरिणाहगुणो यत्र॥ ४६॥ भ०

असीत्यादि। अस्यादीनां वरबाणपर्यन्तानां द्वन्द्वः, तैः अस्यादिभिः गुरु अनभिभवनीयं पुरु महत् मुसलं यत्र, अस्यादि गुरु च तत् पुरुमुसलं चेति,

ते रामेण सरभसं परितरला हरिगणा रणसमारम्भे ।
रुद्धा लङ्कापरिसरभूधरपरिभङ्गलालसा धीररवम् ॥ ४८ ॥

युग्मकम् ।

जलतीरतुङ्गतरुवरकन्दरगिरिभित्तिकुञ्जविवरावासम् ।
भीमं तरुहरिणबलं सुसमिद्धहिमारिकिरणमालालोलम् ॥ ४९ ॥

---

यत्र सः वीररस एव अलङ्कारो यस्य, गुरुः सञ्चारो येषां हयदन्तिनां महाकायत्वात् तैः समहीकम्पं सह महीकम्पेन वर्त्तमानं, परबलं सन्नद्धम् ॥ ४७ ॥ ज० म०

असीत्यादि । पुनः कीदृशं परबलम् ?—असिभिः खड्गैः तोमरैः शक्तिभिः कुन्तैः प्रासैः महापट्टिसैः लौहदण्डविशेषैः भल्लैः श्रेष्ठबाणैश्च गुरु अनभिभवनीयं पुरु महत् मुसलं यत्र, वीररस एव अलङ्कारो यस्य, गुरुः सञ्चारो येषां तादृशैः हयैः दन्तिभिश्च हेतुभिः महीकम्पसहितम् । "तोमरोऽस्त्री लौहदण्डः शक्तिः कासूश्च सर्वला । पट्टिसो लौहदण्डो यस्तीक्ष्णधारः क्षुरोपमः ॥" मुसलशब्दो दन्त्यमध्योऽपि षत्वविधौ दुर्गटीकायां प्रत्युदाहृतत्वात् । मुष स्तेय इत्यस्य वृषलादित्वात् मुसल इति वर्णादेशनायामुक्तत्वाच्च। अत्र सङ्कीर्णत्वात् दन्त्यमध्यः ॥ ४७ ॥ भ०

ते रामेणेत्यादि । ते हरिगणाः कपिगणाः रणसमारम्भे रणप्रवर्त्तननिमित्तं सरभसं सम्भ्रमपूर्वकं परितरलाः स्थातुमशक्नुवन्तः लङ्कापरिसरे लङ्कासमीपे ये तरवः तेषां परिभङ्गे चूर्णने लालसाः सतृष्णाः सन्तो रामेण रुद्धाः प्रतिषिद्धाः मा भाङ्क्षुरिति, धीररवं धीरो रवो यस्यां प्रतिषेधनक्रियायामिति ॥ ४८ ॥ ज० म०

ते रामेणेत्यादि । ते हरिगणा वानरसमूहाः रामेण रुद्धाः प्रतिषिद्धाः । कीदृशाः ?—सरभसं सकौतुकं यथा स्यात् तथा रणसमारम्भे सति तन्निमित्तं वा परितरलाः चञ्चलाः, लङ्कायाः परिसरे समीपे ये पर्वतास्तेषां परिभङ्गे लालसा महतीच्छा येषां तादृशाः । अत एव रुद्धाः धीरो रवो यत्रेति । प्रतिषेधक्रिया-विशेषणम् ॥ ४८ ॥ भ०

जलेत्यादि । तरुहरिणबलं कपिबलं निषिद्धं सत् भीमं भयानकं, जल-तीराद्यैः आवासो यस्य तत्, सुसमिद्धस्य हिमारेः अग्नेः आदित्यस्य वा या किरण-माला तद्वत् लोलम् । समारूढमिति वक्ष्यमाणेन सम्बन्धः ॥ ४९ ॥ ज० म०

जलतीरेत्यादि । तरुहरिणबलं कपिसैन्यं रामेण निषिद्धं सत् अट्टादिषु समारूढमिति वक्ष्यमाणेन सम्बन्धः । कीदृशं ?—जलतीरेषु तुङ्गतरुवरेषु कन्दरेषु

रावणबलमवगन्तुं जलभरगुरुसलिलवाहगणसमच्छायम्।
अट्टतरुमञ्चमन्दिरतोरणमालासभासु समारूढ़म् ॥ ५० ॥

इति भट्टिकाव्ये प्रसन्नकाण्डे भाषासमावेशो नाम चतुर्थः परिच्छेदः
काव्यस्य सेतुबन्धो नाम त्रयोदशः सर्गः।

—:०:—

## चतुर्दशः सर्गः।

ततो दशास्यः स्मरविह्वलात्मा
चारप्रकाशीकृतशत्रुशक्तिः।

---

गिरिभित्तिषु कुञ्जविवरेषु च आवासो यस्य, भीमं भयानकं, सुसामिङ्कस्य हिमारेः सूर्य्यस्य वह्नेः वा या किरणमाला तद्वत् लोलं चञ्चलम् ॥ ४९ ॥ भ०

रावणेत्यादि। रावणबलम् अवगन्तुं कीदृशमिति जलभरेण गुरुः यः सलिलवाहगणो जलधरसमूहः तेन समच्छायं तुल्यच्छायं रामबलम् अट्टादिषु समारूढ़म् ॥ ५० ॥ ज० म०

एतानि द्वाविंशतिः संकीर्णानि।

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रसन्नकाण्डे
भाषासमावेशश्चतुर्थः परिच्छेदः।
काव्यस्य सेतुबन्धो नाम त्रयोदशः सर्गः।
समाप्तं चेदं प्रसन्नकाण्डं तृतीयम्।

रावणबलमित्यादि। रावणस्य बलं सैन्यं कीदृक् इत्यवगन्तुं ज्ञातुं तद्धरिबलम् अट्टादिषु समारूढ़म्। अट्टम् उपरितनं गृहं रावणबलम् कपिबलं वा कीदृशं?—जलभरेण गुरुः यः सलिलवाहगणो मेघसमूहस्तेन समच्छायं तुल्यकान्ति ॥ ५० ॥ भ०

एतानि द्वाविंशतिः संकीर्णकानि।

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मज श्रीभरतसेन-
विरचितायां मुग्धबोधिन्यां भट्टिटीकायां सेतुबन्धो नाम
त्रयोदशः सर्गः।

—०—

विमोह्य मायामयराममूर्ध्ना
सीतामनीकं प्रजिघाय योद्धुम् ॥ १ ॥
कम्बूनथ समादध्मुः कोणैर्भेर्य्यो निजघ्निरे।
वेणून् पुपूरिरे गुञ्जा जुगुञ्जुः करघट्टिताः ॥ २ ॥

सुप्तिङ्व्युत्पत्तौ यत्सौष्ठवं तदपि काव्यस्याङ्गमुक्तम्। अतः प्रसन्नकाण्डानन्तरं तिङ्काण्डं शब्दलक्षणप्रयोगार्थं कथ्यते। तत्र लस्य स्थाने तिपादयः, लकाराश्च नव, लेधश्छन्दोविषयत्वादिति। अत्र नव विलसितानि। विलसितञ्च नानारूपता। तत्र भूतार्थवती लिटोऽधिकृत्य तद्विलसितमाह।

तत इत्यादि। ततः स्वपरबलयोः रणादुत्तरकालं दशास्यः स्मरविह्वलात्मा कामवशीकृतदेहः, भर्त्तरि निराशा सती सीता ममानुकूला भवतीष्यतीति मायामयेन मायास्वभावेन राममूर्ध्ना छिन्नेन सीतां विमोह्य मोहयित्वा चारैः प्रणिधिभिः प्रकाशीकृता शत्रुशक्तिः वैरिसामर्थ्यं यस्मै योद्धुमनीकं सैन्यं प्रजिघाय प्रहितवान्। हेरचि लिङीति कुत्वं, भूतानद्यतनपरोक्षे सर्वत्र लिट् ॥ १ ॥

स्याद्यन्तव्युत्पत्तौ यत्सौष्ठवं तदपि काव्यस्याङ्गमुक्तम्। ततः प्रसन्नकाण्डादनन्तरं त्याद्यन्तकाण्डमुच्यते। तत्रार्थवशात् प्रथमं ठौ प्रदर्श्यते। पाणिनिमते त्याद्यन्तस्य तिङन्त इति संज्ञा, ठौत्यस्य लिड़िति संज्ञा।

तत इत्यादि। अनन्तरं दशास्यो रावणः स्मरविह्वलात्मा कामविह्वलचित्तः सन् भर्त्तृनाशे सीताऽऽनुकूल्यं यास्यतीति मत्वा मायामयेन मायास्वरूपेण रामसम्बन्धिना मस्तकेन सीतां मोहयित्वा चारैः प्रकाशीकृता शत्रूणां रामादीनां शक्तिः सामर्थ्यं येन तथाभूतः सन्, योद्धुं युद्धं कर्त्तुम् अनीकं सैन्यं प्रजिघाय प्राहिणोत्। हि न वर्द्धने गतौ। भवद्भूतभव्ये त्रिश इति भूतसामान्ये ठौ, धुर्विंष्ठाङीति द्वित्वं, झभखयहर्घेति खेर्हस्य जत्वं, हेः खेरनङिघिरिति घिः, त्रिप्त्यन्ते जुङतोरिति त्रिः, यत्नायवायाव इति आय ॥ १ ॥ भ०

कम्बूनित्यादि। अथ सैन्यप्रेषणानन्तरं कम्बून् समादध्मुः शब्दितवन्तः शाङ्खिकाः। कोणैर्वाद्यवादनैः काष्ठमयैः भेर्य्यो निजघ्निरे ताड़िताः। कर्मणि लिट्। वेणून् वंशान् पुपूरिरे मुखमरुता पूरितवन्तः। पूरी आप्यायन इति दैवादिकोऽनुदात्तात् तेत्। गुञ्जाः समवामना: करघट्टिताः अङ्गुलिघृष्टाः जुगुञ्जुः शब्दितवत्यः। गुजि अव्यक्ते शब्दे ॥ २ ॥ ज० म०

वादयाञ्चक्रिरे ढक्काः पणवा दध्वनुर्हताः।
काहलाः पूरयाञ्चक्रुः पूर्णाः पेराश्च सस्वनुः ॥ ३ ॥
मृदङ्गा धीरमास्वेनुर्हतैः स्वेने च गोमुखैः।

कम्बूनित्यादि। अथ प्रेषणादनन्तरं सैनिकाः कम्बून् शङ्खान् समादध्मुः शब्दायितवन्तः। ध्मा अग्नियुतौ ध्वनौ उस् दित्वं झभखयचर्चेति खे: ङस्वत्वं धस्य दश्च खे: आद्यची लोप्य इति खेर्मलोपः, उस्येचीति प्रकृतेरालोपः। केचित् भेर्य्यो हड्डुक्काः कोणैर्निजघ्निरे ताड़िताः। हन्तेः कर्मणि ठी। हनगमित्युङ्लोपः खेर्होघोञ्णिति चेति प्रकृतेर्हस्य घत्वं, हनोघ्न इति घ्नादेशः। कोणशब्देन वाद्यवादनकाष्ठदण्डादय उच्यन्ते। वेणून् वंशान् केचित् मुखमारुतैः पुपूरिरे पूरितवन्तः। पूरी य ङ पूर्त्तौ। करेण घट्टिता अभिहता गुञ्जा वाद्यभेदा जुगुञ्जुः शब्दं चक्रुः। गुजि कूजने. हमूङ्नलोपोऽणाविति विधीयमानो नलोपो नेदित्पूजार्थाञ्चोरित्यनेन प्रतिषिध्यते अत एवेदितो नुम लभ्यते ॥ २ ॥ भ०

वादेत्यादि। ढक्का वादयाञ्चक्रिरे वादितवन्तः, ढक्कावादका इत्यर्थः। वदेर्हेतुमण्यन्तात् आमि अयामन्तेत्ययादेशः आम्प्रत्ययवदिति। कृञोऽनुप्रयोगस्यात्मनेपदणिचश्चेति आम्प्रत्ययादात्मनेपदस्य विहितत्वात्। पणवाः वाद्यविशेषाः हताः पाणविकैस्ताड़िताः दध्वनुर्ध्वनिताः। काहलाः गोशृङ्गसंस्थानाः पूरयाञ्चक्रुः पूरितवन्तः। पूरि आप्यायन इति चौरादिकस्योदात्तेत्ततो रूपं, पेराः खरमुखाकाराः पूर्णा मुखमरुता सस्वनुः, फणाञ्च सप्तानामिति लिटि एत्वविधानस्य विकल्पितत्वात् नैत्वम् ॥ ३ ॥ ज० म०

वादयामित्यादि। केचित् ढक्काः वादितवन्तः, वदेर्ञि विंजादीत्यादिना त्यान्तत्वादाम्, भ्वस्कृन्नाम इति कृञोऽनुप्रयोगः। पणवा वाद्यभेदा हतास्ताड़िताः सन्तो दध्मनुः शब्दञ्चक्रुः। केचित् काहला मुखमारुतैः पूरयाञ्चक्रुः। चुरादेः पूरधातो रूपं पूरीङ् पूर्त्तौ पूरक् चेति चकारात् पूर्त्तौ। "हस्तत्रितयदीर्घा स्यात् धुस्तूरकुसुमोपमा। शुद्धताम्रमयी मध्यशुषिरा काहला मता।" इति नाट्यदर्पणे। पेराः खरमुखाकाराः मुखमारुतैः पूर्णाः सन्तः सस्वनुः शब्दञ्चक्रुः। स्वन मि शब्दे स्वन ण चकारात् शब्दे णित्त्वात् फणादिः। तृफलेत्यादिना विभाषया अत एत्वं खिलोपश्च तदभावपक्षे रूपमिदम् ॥ ३ ॥ भ०

घण्टाः शिशिञ्जिरे दीर्घं जह्नादे पटहैर्भृशम् ॥ ४ ॥
हया जिहेषिरे हर्षाद्गम्भीरं जगजुर्गजाः ।
सन्त्रस्ताः करभा रेटुश्चुकुवुः पत्तिपङ्क्तयः ॥ ५ ॥
तुरङ्गाः पुस्फुटुर्भीताः पुस्फुरुर्वृषभाः परम् ।

मृदङ्गा इत्यादि । मृदङ्गा मुरजाः धीरम् आस्वेनुः गम्भीरं ध्वनिताः एतत्पक्ष रूपम् । गोमुखैः वाद्यविशेषैः हतैः स्वेने शब्दितम् । भावे लिट् । घण्टाः दीर्घं शिशिञ्जिरे उच्चैः शब्दितवत्यः । पटहैः भृशमत्यर्थं जह्नादे शब्दितम् । भावे लिट् ॥ ४ ॥ ज० म०

मृदङ्गा इत्यादि । मृदङ्गा धीरं गम्भीरं यथा स्यात् तथा आस्वेनुः शब्दञ्चक्रुः तृफलेत्यादिना स्वनेरत एत्वं खिलोपश्च । "चर्मणा नद्धवदनौ मध्ये चैव पृथुर्भवेत् । मृत्तिकानिर्मितश्चैष मृदङ्ग इति कीर्त्तितः ॥" इति भरतः । हतैः ताडितैः गोमुखैः स्वेने शब्दितं, ठौ । घण्टा दीर्घमुच्चैः शिशिञ्जिरे शिजि न किङ् अस्फुटध्वनौ । पटहैः भृशमत्यर्थं जह्नादे शब्दितं, ह्रादङ् च स्वने भावे रूपम् ॥ ४ ॥ भ०

हया इत्यादि । हया अश्वाः हर्षात् जिहेषिरे हेषितवन्तः । हेष अव्यक्ते शब्दे-भौवादिकोऽनुदात्तेत् अभ्यासस्य इति एत इत्वति । गजा गम्भीरं मन्द्रञ्जगजुः गर्जितवन्तः । गजगर्जी शब्दार्थौ । करभा उष्ट्राः सन्त्रस्ताः नानावादित्रश्रवणात् रेटुः शब्दं कृतवन्तः । रटपरिभाषण इति शब्दार्थः । पत्तिपङ्क्तयः पदातिसंहतयः चुकुवुः शब्दितवत्यः गच्छत किं तिष्ठतेति । कु शब्द इत्युदात्तेत् ॥ ५ ॥ ज० म०

हया इत्यादि । हया अश्वा हर्षात् जिहेषिरे शब्दं चक्रुः । हेषृङ् सर्पणे ङ हेषृ च स्वने अश्वानामिति चकारात् हेषृङपि अश्वानां स्वने । गजा गम्भीरं यथा स्यात् तथा जगजुः गर्जनं चक्रुः माद्यन्ति स्मेति वा । गज मदे गजि च स्वने इति चकारात् गजस्वने । करभा उष्ट्रा नानावाद्यश्रवलात् सन्त्रस्ताः सन्तः शब्दं चक्रुः रटे च वाचि, तृफलेत्यादिना अत एत्वं खिलोपश्च पत्तिपङ्क्तयः पदातिसमूहाः चुकुवुः शब्दं चक्रुः कु ङ शब्दे कु ल चेति चकारात् शब्दे किट्टीढीपमिति अपिङ्गाः कित्त्वात् अगुणत्वे श्रुभ्रीरुस्वचीति उव् ॥ ५ ॥ भ०

तुरङ्गा इत्यादि । तुरङ्गा अश्वा भीता वादित्रश्रवणात् पुस्फुटुः स्फुटिताः भयात्-इतस्ततो गताः । स्फुट विसरणे । वृषभाः परं पुस्फुरुः सुष्ठु बलिताः स्फुर बलने । नाथ्यश्चुचुभिरे अस्माकमायातो वियोग इति क्षोभमुपगताः व्यस्तचित्ता जाता इत्यर्थः,

नार्य्यश्चुक्षुभिरे मम्लुर्मुमुहुः शुशुचुः पतीन् ॥ ६ ॥
जगर्जुर्जहृषुः शूरा रेजुस्तुष्टुविरे परैः।
बबन्धुरङ्गलित्राणि सन्नेहुः परिनिर्ययुः ॥ ७ ॥

काश्चित् मम्लुः म्लै गात्रक्षये, मुमुहुः काश्चिन्मोहमुपगताः, पतीन् काश्चित् शुशुचुः शोचितवत्यः। हा कष्टं ! नियतं विनष्टा इति ॥ ६ ॥ ज० म०

तुरङ्गा इत्यादि। गजादिदर्शनात् भीताः तुरङ्गाः पुस्फुटुः इतस्ततो गताः। स्फुट श्रि विकाशे। वृषभाः परमत्यर्थं पुस्फुरुर्श्चलिताः स्फुर श्रि स्फूर्त्तौ। चले नार्य्यश्चुक्षुभिरे पतिमरणाशङ्कया क्षोभं प्रापुः। क्षुभ ल ङ् सञ्चले। अत एव मम्लुः कान्तिरहिता बभूवुः। म्लै कान्तिसंक्षये एचोऽश्रित्येति आ उस्येचीत्यालोपः। ततो मुमुहुः मोहं प्रापुः। मुह ल ञि वैचित्त्ये। पतीन् शुशुचुः शोचितवत्यः। शुच शोके ॥ ६ ॥ भ०

जगर्जुरित्यादि। शूरा जगर्जुः अस्माभिः दृष्टाः शराः क्व यास्यन्ति इति शब्दितवन्तः। तथा जहृषुः तुष्टाः चिरमायातः समर इति हृष तुष्टौ। अत एव रेजुः शोभन्ते स्म फणाञ्च सप्तानामित्येत्वाभ्यासलोपौ, परैः अन्यैः तुष्टुविरे स्तुताः भवतामग्रतः समरे के तिष्ठन्तीति। अङ्गुलिवाणि बबन्धुः बध्नन्ति स्म। बध बन्धने। तथा परे सन्नेहुः कवचानि बध्नन्ति स्म। णह बन्धने। परिनिर्ययुः निष्क्रान्ताः ॥ ७ ॥ ज० म०

जगर्जुरित्यादि। शूरा जगर्जुः जेष्याम इति शब्दं चक्रुः गर्ज शब्दे। तथा जहृषुः चिरात् प्राप्तः संग्राम इति मत्वा तुष्टाः हृषु हृष्य ञि तुष्टौ रेजुः शुशुभिरे। राजृ ञ्ण दीप्तौ ञित्वात् फणादि। तॄफलेत्यादिना अत एत्वं खिलोपश्च। परैः अन्यैः तुष्टुविरे स्तुताः। ष्टु ञ ल स्तुतौ कर्मणि ठौ, खेरायच इत्यादिना शसादिखपान्तत्वात् खेरादिलोपः, ष्वाद्यादिषा इति षस्य सत्वात् क्विलादिति षः। अङ्गुलित्राणि बबन्धुः बध्नन्ति स्म। बन्धौ ग् बन्ध क् बध क् बन्धे। स्यात् पित्किदङे ति कित्त्वाभावपक्षे हसुङ्लोपोऽणाविनत्वस्याप्रवृत्तेर्नलोपाभावः। यद्वा स्यात्प्यपित्किदेत्यत्र वाशब्दो व्यवस्थावाची, तेन मन्थादेर्विभाषया कित्त्वम्। बन्धादेस्तु कित्त्वाभाव एव। तेन ममथुः ममन्थुः सस्वजे सस्वञ्जे इत्यादिरूपद्वयं दृश्यते। बबन्धुः बभञ्जुः ददंशुरित्यादयो नित्यम्। परे तु इन्धी लिटि च स्वञ्जो वेति नकारलोपार्थं सूत्रं कुर्वन्ति। इन्धधातोराम्नि न स्यात्। आमोऽभावपक्षे नित्यं नलोपः। स्वञ्जस्तु वा अन्यत्र ठ्यां नलोपाभाव इति। अङ्गुलिं वायत इति ह्ननजमादिति डः। सन्नेहुः सन्नाहं कृतवन्तः णह्य औ बन्धे। परिनिर्ययुः निर्गताः। या ल गतौ ॥ ७ ॥ भ०

धनूंष्यारोपयाञ्चक्रुरारुरुहू रथादिषु।
असीनुदवहुर्दीप्तान् गुर्वीश्चिक्षिपुर्गदाः॥ ८॥
शूलानि भ्रमयाञ्चक्रुर्बाणानाददिरे शुभान्।
भेमुश्चुकुर्दिरे रेसुर्ववल्गुश्च पदातयः॥ ९॥
समुत्पेतुः कशाघातै रश्मग्राकर्षैर्ममञ्जिरे।

---

धनूंषीत्यादि। धनूंषि आरोपयाञ्चक्रुः आरोपितगुणानि कृतवन्तः, रुहः पोऽन्यतरस्यामिति णौ पादेशः। आरुरुहुः आरोहन्ति स्म। रथादिषु द्वितीया न कृता अधिकरणत्वेन विवक्षितत्वात्। दीप्तान् निष्कलङ्कान् असीन् उद्वहुः कोषादाकृष्य उद्यतान् कृतवन्तः। वह उद्यमने। गुर्वीर्गदा उच्चिक्षिपुः उत्क्षिप्तवन्तः॥ ८॥ ज० म०

धनूंषीत्यादि। धनूंषि रथे हस्ते वा आरोपयाञ्चक्रुः, आरोपितवन्तः आरोपितगुणानि चक्रुरिति केचित्। णि रुहो जन्तां णिः रुहः पङ् वेति पङ् गोर्घुङ इति गुणः त्वान्तत्वादाम्। रथादिषु आरुरुहुः आरोहन्ति स्म, कर्मणोऽप्याधारविवक्षया न द्वितीया। दीप्तान् असीन् खड्गान् उदवहुः उद्यतान् चक्रुः, वह उद्यमे भभखघेत्यादिना खेर्ककारस्य अकारः। गुर्वीर्महतीर्गदाश्चिक्षिपुः उत्क्षिप्तवन्तः, क्षिप श औ चिक्षिपी णुदि, खेराद्यच इत्यादिना खेः बकारस्य लोपः, भभखघेत्यादिना खेः कस्य चलम्॥ ८॥ भ०

शूलानीत्यादि। शूलानि भ्रमयाञ्चक्रुः भ्रमयन्ति स्म, मान्तत्वाम्मित्त्वे ह्रस्वत्वम्। बाणान् शुभान् युद्धयोग्यान् आददिरे गृहीतवन्तः, आङो दोऽनास्यविहरण इति तङ्। पदातयश्च भेमुः इतस्ततो याताः। चुकुर्दिरे शस्त्रपाणयः क्रीडितवन्तः, कुर्द-खुर्दगुर्द क्रीडायामेव। रेसुः भयकृते निनादान् कृतवन्तः, रस शब्दे। ववल्गुः प्लुताः, वल्गतिवल्ल-उद्धौत्यत्र पठ्यते॥ ९॥ ज० म०

शूलानीत्यादि। शूलानि भ्रमयाञ्चक्रुः भ्रमयन्ति स्म, भ्रमु ज ण चालि णिः हृस्त्रिः घटादिजनीत्यादिना भ्रमन्तत्वात् ह्रस्वः। शुभान् शोभमानान् बाणान् आददिरे गृहीतवन्तः, आङ्पूर्वो ददातिर्ग्रहणे आदाञोऽस्यप्रसार इति मम्। पदातयो भेमुः इतस्ततो गच्छन्ति स्म, चुकुर्दिरे क्रीडयन्ति स्म कुर्दङ् क्रीडायाम्। रेसुः शब्दं चक्रुः रस शब्दे, ववल्गुः धावन्ति स्म, वल्गुश्रगिङ्गि ग्रजे॥ ९॥ भ०

समुत्पेतुरित्यादि। कशाघातैः चर्मलताप्रहारैः अश्वाः समुत्पेतुः उत्प्लुताः; रश्मग्राकर्षैः प्रग्रहाकर्षणैः ममज्जिरे शोभन्ते स्म सङ्कोचितग्रीवत्वात्। मगि मण्डने। मोक्षे

अश्वाः प्रदुद्रुवुर्मोचे रक्तं निजगरुः श्रमे ॥ १० ॥
गजानां प्रददुः शारीन् कम्बलान् परितस्तरुः।
तेनुः कक्षां ध्वजांश्चैव समुच्छिश्रियुरुच्छिखान् ॥ ११ ॥
विशिश्वासयिषाञ्चक्रुरालिलिङ्गुश्च योषितः।
आजघ्रुर्मूर्ध्नि बालांश्च चुचुम्बुश्च सुतप्रियाः ॥ १२ ॥

रश्मीनां प्रसारणे प्रदुद्रुवुः वेगेन गताः, श्रमे सति खलीनप्रभवं रक्तं निजगरुः पीतवन्तः गॄ निगरणे ऋच्छत्यॄतामिति गुणः ॥ १० ॥ ज० म०

समुत्पेतुरित्यादि। अश्वादेस्ताड़नी कषा तदभिघातैः अश्वाः समुत्पेतुः उत्प्लुताः, पत् लृ ज गत्याम्। रश्म्याकर्षैः प्रग्रहाकर्षणैः ममङ्गिरे मुमुभिरे सङ्कुचितवेगत्वात्, मगिङ् भूषे। किरणप्रग्रहौ रश्मी इत्यमरः। मोचे रश्मिश्लथीकरणे प्रदुद्रुवुः धावन्ति स्म, द्रु सु गतौ। श्रमे सति खलीनप्रभवं रक्तं निजगरुः पीतवन्तः। उज्जगरुरिति पाठे— सृक्कणीभ्यां रक्तमुद्गीर्णवन्तः, गॄ निगरणे ऋतौ णः कित् त्यामिति गुणः ॥ १० ॥ भ०

गजानामित्यादि। गजानां शारीन् प्रददुः पृष्ठेषु आरोपितवन्तो हस्तिपका इत्यर्थात्, तथा कम्बलान् नानावर्णविचित्रान् परितस्तरुः आस्तीर्णवन्तः, कक्षां हेमादिमयीं तेनुः विस्तारितवन्तः, उच्छिखान् उद्धृतशिखान् ध्वजान् समुच्छिश्रियुः उत्क्षिप्तवन्तः ॥ ११ ॥ ज० म०

गजानामित्यादि। हस्त्यारोहा गजानां शारीन् युद्धोपकरणानि प्रददुः पृष्ठे आरोपितवन्तः। "शारिर्युद्धोपकरणे तथा शाकुनिकान्तरे" इति विश्वः। कम्बलान् परितस्तरुः आस्तीर्णवन्तः, कुथांश्चेति पाठे—चित्रकम्बलानित्यर्थः। "कुथः स्यात् चित्रकम्बल" इति विश्वः। स्तॄ ञ गि च्छादन इत्यस्य ऋतौ णः कित् त्यामिति गुणः। कक्षाम् उदराद्यवस्थितां रज्जुं तेनुः विस्तारितवन्तः। तन द ञ् विस्तृतौ। "कक्षोदयाहालका काञ्ची प्रकोष्ठगजरज्जुषु" इति विश्वः। उन्नतशिखान् ध्वजदण्डान् समुच्छिश्रियुः उत्क्षिप्तवन्तः, श्रि ञ सेवने, उत्पूर्वोऽयमुत्क्षेपणेऽपि श्रुश्वोरस्वचीति इयः ॥ ११ ॥ भ०

विशिश्वासयिषाञ्चक्रुरित्यादि। योषितः आत्मीया विशिश्वासयिषाञ्चक्रुः विश्वासयितुमिष्टवन्तः, मयि अन्यथा न भवनीयमिति, एवन्तस्य रूपम्। आलिलिङ्गुश्च श्लिष्यन्ति स्म, लिगिर्गत्यर्थः आङ्पूर्व्वः परिष्वङ्गे वर्त्तते। बालान् शिशून् आजघ्रुः शिरसि आघ्रातवन्तः, तथा चुचुम्बुश्च चुम्बितवन्तः। सुतप्रियाः सुताः प्रिया येषामिति ॥ १२ ॥ ज० म०

गम्भीरवेदिनः संज्ञां गजा जगृहुरक्षताः ।
ववृधे शुशुभे चैषां मदो हृष्टैश्च पुप्लुवे ॥ १३ ॥
मृगाः प्रदक्षिणं सस्रुः शिवाः सम्यग्ववाशिरे ।
अवामैः पुस्फुरे देहैः प्रसेदे चित्तवृत्तिभिः ॥ १४ ॥

विशीत्यादि । योधा योषितः स्त्रियो विशिश्वासयिषाञ्चक्रुः विश्वासयितुं सान्त्वयितुमिष्टवन्तः, श्वस प्राणने णिः सन् त्यान्तत्वादाम् । तथा आलिलिङ्गुः आलिङ्गनं चक्रुः, लिगि गतौ आङ् पूर्वं आश्लेषमाह । सुताः प्रिया येषां ते बालान् मूर्द्धि आजघ्रुः शिरसि आघ्रातवन्तः, घ्रा गन्धग्रहणे झभखतेत्यादिना खेर्घस्यातः अत्वं ततो जत्वम् । चुचुम्बुश्च चुम्बितवन्तश्च, चुवि कि चुम्बने । स्त्रिय आलिङ्ग्य बालकानाघ्राय रणाय जग्मुरित्यर्थः ॥ १२ ॥ भ०

गम्भीरवेदिन इत्यादि । ये गजा मत्तत्वात् अङ्कुशैः दृढमाहताः गम्भीरं विन्दन्तीति ते गम्भीरवेदिनः, तस्मिन् काले संज्ञा युद्धौपयिकीः जगृहुः गृहीतवन्तः, अक्षतास्तीवाङ्कुशैरनाहताः सन्तः । हृष्टैश्च गजैः पुप्लुवे, प्लुतं भावे लिट् । हर्षादेषां मदो ववृधे वर्द्धते स्म, शुशुभे च शोभते स्म ॥ १३ ॥ ज० म०

गम्भीरेत्यादि । अङ्कुशैः दृढमाहन्यमाना अपि ये न विषीदन्ति, ते गम्भीरवेदिनो गजाः, अक्षता अङ्कुशैरहता अपि संज्ञां युद्धोपयुक्तां जगृहुः युद्धकुशलत्वात्, ग्रह उपादाने व्यथग्रहेत्यादिना खेर्जिः ऋकारस्य झभखथेत्यादिना अत्वं, ग्रहस्वपाद्योरिति प्रकृतेर्जिः । अक्षता इति क्षण चिण दु अ् बधे क्ते वनतनाद्यमिमामिति नलोपः । "त्वग्वेधाद्रुधिरस्रावादन्तरव्यथनादपि । संज्ञां न लभते यस्तु गजो गम्भीरवेद्यसौ" । एषां हस्तिनां मदो ववृधे शुशुभे च, वृध ङ् वृद्धौ शुभ लृ ङ् दीप्तौ । मत्तैः गजैः हृष्टैः पुप्लुवे वेगेन गतम् । प्लु ङ सर्पणे भावे रूपम् ॥ १३ ॥ भ०

मृगा इत्यादि । एवं संनद्धा चलतां मृगाः दक्षिणपार्श्वेन गताः । सम्यग् ववाशिरे वामपार्श्वस्थाः शिवाः शब्दितवत्य इत्यर्थः । वाश्र शब्दे अवामैः दक्षिणैः देहैः भुजादिभिः पुस्फुरे स्फुरितं, भावे लिट् । चित्तवृत्तिभिः मनोवृत्तिभिः प्रसेदे प्रसन्नम् । पूर्ववत्सदेर्भावे लिट् ॥ १४ ॥ ज० म०

मृगा इत्यादि । मृगाः प्रदक्षिणं सस्रुर्गमनं चक्रुः, सृ गतौ । शिवाः शृगालाः सम्यग्वामपार्श्वस्थाः सत्यो ववाशिरे शब्दं चक्रुः, वाशृ शब्दे, वाशृ इत्यपीति, अपि-

प्राच्यमाञ्जिहिषाञ्चक्रे प्रहस्तो रावणाज्ञया।
द्वारं ररङ्घतुर्याम्यं महापार्श्वमहोदरौ ॥ १५ ॥
प्रययाविन्द्रजित् प्रत्यगियाय स्वयमुत्तरम्।
समध्यासिसिषाञ्चक्रे विरूपाक्षः पुरोदरम् ॥

शब्दात् शिवाशब्दः पुंश्गालेऽपि स्त्रीलिङ्ग एव। अवामैः दक्षिणैः देहैः भुजादिभिः पुस्फुरे स्फुरितं, चित्तवृत्तिभिरपि प्रसेदे प्रसन्नं, स्फुर स्फुर्छा चले, षद लृ विषादे शरणे गतौ प्रपूर्वः प्रसन्नतामाह। भावे रूपद्वयम् ॥ १४ ॥ भ०

प्राच्यमित्यादि। एवं शुभनिमित्तोत्साहितः प्रहस्तो रावणाज्ञया प्राच्यं प्राचि भवं पूर्वद्वारं धुप्रागिति यत्। आञ्जिहिषाञ्चक्रे गन्तुमिष्टवान्, अहि गतावित्यस्योदात्तेतः सनीट्, अजादेर्द्वितीयस्येति द्विर्वचनं न न्द्रेति नकारो न द्विरुच्यते आम्प्रत्ययवदित्यात्मनेपदम्। तथा महापार्श्व-महोदरौ राक्षसौ याम्यं द्वारं दक्षिणं यमो देवता अस्येति दित्यदित्येत्यत्र यमाच्चेति वक्तव्यमिति उक्तं, तेन प्राग्दीव्यतीयेऽर्थे ण्यप्रत्ययः। ररङ्घतुः गतौ, रघि गतावित्यस्य रूपम् ॥ १५ ॥ ज० म०

प्राच्यमित्यादि। एवं शुभनिमित्तं दृष्ट्वा प्रहस्तो रावणाज्ञया प्राच्यं द्वारं पूर्वद्वारम् आञ्जिहिषाञ्चक्रे गन्तुमियेष, अहि ङ् गतौ सन् वसोऽरस्येतीम् स्यादौ नवद्रोऽये नाजन्तादेरादिर्द्विरिति वचनात् सन्यङ्न्तो द्विरिति हिस्भागस्यैव द्वित्वं, त्यान्तत्वादाम्। प्राच्यां भवमिति ढघे कादिति ण्यः। महापार्श्वमहोदरौ याम्यं दक्षिणं द्वारं ररङ्घतु अम्मतुः, रघि गत्याम्। यमो देवता अस्येति विकारसङ्घेत्यादिना ण्यः ॥ १५ ॥ भ०

प्रययावित्यादि। प्रत्यक् पश्चिमद्वारम् इन्द्रजित् प्रययौ गतवान्। प्रतीच्यां द्वारमिति सप्तमीत्यादिना विहितस्यास्तातेरञ्चेर्लुक् भसंज्ञाभावात् अच इत्यकारलोपो निवर्त्तते चाविति दीर्घत्वञ्च। स्वयमिति रावण उत्तरद्वारम् इयाय गतः। विरूपाक्षो राक्षसः पुरोदरं पुरमध्यं समध्यासिसिषाञ्चक्रे समध्यासितुमिष्टवान्, आसेरनुदात्तेतः सनि इटि अजादिः पूर्ववत् सन् इत्यात्मनेपदम्, अनुप्रयोगस्य आत्मनेपदम् ॥ १६ ॥ ज० म०

प्रययावित्यादि। इन्द्रजित् प्रत्यक् पश्चिमं द्वारं प्रययौ, या ल गतौ आताे डौरिति डौः, टेर्लोपो ङितीत्यालोपः। प्रतिपूर्वादञ्चतेः क्विबन्तात् दिक्शब्दात् दिग्देश-

शुश्राव रामस्तत्सर्वं प्रतस्थे च ससैनिकः।
विस्फारयाञ्चकारास्त्रं बबन्धाथ च बाणधी॥ १७॥
ईक्षाञ्चक्रेऽथ सौमित्रिमनुजज्ञे बलानि च।
नमश्चकार देवेभ्यः पर्णतल्पं मुमोच च॥ १८॥

कालेऽस्तादिति सप्तम्याः स्तात् तस्य लोपः प्रतीच्यां दिशीत्यर्थः। स्वयं रावण उत्तरं द्वारम् इयाय गतः, इण ल गतौ णिणात्यन्तेजिति वृद्धौ स्तेर्योरियुवर्णे इतीयः। विरूपाक्षः पुरोदरं लङ्कामध्यभागं समध्यासितुमिष्टवान्, ञि लास उपवेशने, समधिपूर्वात् सन् इम् सिषभागस्य द्वित्वं, त्यान्तत्वादाम्॥ १६॥ भ०

शुश्रावेत्यादि। अथानन्तरं रामः तत्सर्वं रावणचेष्टितं शुश्राव श्रुतवान् प्रतस्थे च गन्तुं प्रवृत्तः, समवप्रविभ्यः स्थ इति तङ्। ससैनिकः सह योधैः सेनायां समवेता इति सेनया वेति पचे ढक्। अस्त्रं धनुर्विस्फारयाञ्चकार आरोप्याकृष्टवान्, स्फुरतेश्चि स्फुरोणीवित्यात्वम् बबन्ध च बाणधी तूणीरे बध्नाति स्म। बाणा धीयन्तेऽस्मिन्निति कर्मण्यधिकरणे वेति किः॥ १७॥ ज० म०

शुश्रावेत्यादि। अथानन्तरं रामः तत्सर्वं रावणचेष्टितं दूतद्वारा शुश्राव श्रु गतौ श्रुतौ। सैनिकैः सह प्रतस्थे प्रस्थितः, स्था स्थाने प्रपूर्वो गतिमाह, प्रतिज्ञानिर्णयेत्यादिना मम्। सेनायां समवैतीति ढघेकादिति णिकः। "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः। अस्त्रं धनुर्विस्फारयाञ्चकार आरोप्याकृष्टवान्, स्फुर श्रि स्फूर्त्तौ चले जिः क्रीजीङोऽजा चिस्फुरेति पचे उकारस्यात्वं स्फुरधातौ रूपं वा, बाणधी तूणद्वयञ्च बाणा धीयन्ते यवेति ढाड्डे इति किः॥ १७॥ भ०

ईक्षामित्यादि। सौमित्रिञ्च युद्धाय ईक्षाञ्चक्रे दृष्टवान्, ईक्षेरनुदात्तेत् इजादेरित्याम्। बलानि च अनुजज्ञे अनुज्ञातवान्, अनुपूर्वो जानातिरनुज्ञाने वर्त्तते तस्य परस्मैपदित्वात् अनुपसर्गादिति वचनादात्मनेपदम्, उपसर्गेण युक्तत्वात्। नमश्चकार देवेभ्यः, नमःशब्दयोगे चतुर्थी, पर्णतल्पं पर्णशयनीयं मुमोच मुक्तवान्॥ १८॥ ज० म०

ईक्षाञ्चक्र इत्यादि। रामः सौमित्रिम् ईक्षाञ्चक्रे ददर्श, ईच ङ् दर्शने विंजादीत्याम्। बलानि सैन्यानि च अनुजज्ञे अनुज्ञातवान् युद्धायेत्यर्थात्, ज्ञा ग बोधने उपसर्गप्रतिरूपकोऽयमनुशब्दः, तेन जिज्ञान्तेत्यादिना मं किंवा सौमित्रिं बलानि च ईक्षाञ्चक्रे अनुजज्ञे च अढादिति मं, शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यत इति

चकासाञ्चक्रुरुत्तस्थुर्नेदुरानशिरे दिशः।
वानरा भूधरान् रेधुर्बभञ्जुश्च ततस्तरून्॥ १९॥
ददाल भूर्नभो रक्तं गोष्पदप्रं ववर्ष च।
मृगाः प्रसस्रुपुर्वामं खगाश्चक्रुविरेऽशुभम्॥ २०॥

कर्म्मविषयेऽपि कर्म्मानुक्तेः, किंवा अनुजज्ञे अनुज्ञातौ रामेण विभक्तिव्यत्ययेन भावे रूपम्। देवेभ्यो नमस्कार शक्तार्थेत्यादिना चतुर्थी। ननु कथमत्र उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायात् द्वितीया न स्यादिति चेन्न, अत्र नमःशब्दस्य वाचकत्वं तेनैव क्रञोऽन्वयान्न द्वितीयाप्राप्तिः, यदा तु क्रञः प्रणामार्थत्वं नमःशब्देन द्योत्यते तदा तन्न्यायात् द्वितीया। यथा—नारायणं नमस्कृत्येत्यादि। पर्णतल्पं पल्लवरचितशय्यां मुमोच तत्याज। पर्णशालमिति क्वचित् पाठः॥ १८॥ भ०

चकासाञ्चक्रुरित्यादि। ततोऽनुज्ञानानन्तरं वानरा उत्तस्थुः उत्थिताः, नेदुः शब्दितवन्तः, दिश आनशिरे व्याप्ताः, अश्नोतेश्चेत्यभ्यासस्य नुट्, अत आदेरिति दीर्घत्वम्। भूधरान् पर्वतान् रेधुः उन्मूलितवन्तः, राधो हिंसायामित्येत्वाभ्यासलोपः। तरूंश्च बभञ्जुः भग्नवन्तः, एवञ्च ते चकासाञ्चक्रुः शोभन्ते स्म, कास्यनेकाज्ग्रहण-मित्याम्॥ १९॥ ज० म०

चकासामित्यादि। ततोऽनन्तरं वानराः चकासाञ्चक्रुः चकासृ दीप्तौ विजादीत्याम् अनेकाच्त्वात्। उत्तस्थुः उत्थिताः, नेदुः, नद श्लिष्टोक्तौ। दिश आनशिरे व्याप्नुवन्ति स्म, अशू ङ् न व्याप्तिसंहत्योः स्वान्तादाद्यादाद्यश्नोरिति खेरान्। भूधरान् रेधुः उन्मूलितवन्तः, राधौ सिद्धौ अस्य हिंसार्थे तृफलेत्यादिना पचे आत एत्वं खिलोपश्च। तरूंश्च बभञ्जुः भञ्जो धौ मोटने स्यात् ञ्यपिदिति पचे किस्वाभावात् नलोपाभावः॥ १९॥ भ०

ददालेत्यादि। श्लोकद्वयं राघवयोः ब्रह्मास्त्रबन्धसूचनार्थमनिमित्तप्रदर्शनम्। भूर्ददाल विदीर्णा, नभश्च रक्तं रुधिरं ववर्ष वृष्टवत्, लिटः पित्त्वादकित्त्वे धातोर्गुणः। कियत्प्रमाणं? गोष्पदप्रं यावता गोष्पदं पूरयित्वा वर्षप्रमाण इत्यादिना णमुल् ऊलोपश्च। मृगाः प्रसस्रुपुर्वामं वामपार्श्वेन गता इत्यर्थः। खगाः पक्षिणोऽशुभान् अनिष्टांश्चुकुविरे शब्दितवन्तः, कुङ् शब्दे। अशुभमिति पाठान्तरम्। तत्र क्रियाविशेषणं वेदितव्यम्॥ २०॥ ज० म०

उल्का ददृशिरे दीप्ता रुरुवुश्चाशिवं शिवाः ।
चचमाये च मही रामः शशङ्के चाशुभागमम् ॥ २१ ॥
रावणः शुश्रुवान् शत्रून् राक्षसानभ्युपेयुषः ।
स्वयं युयुत्सयाञ्चक्रे प्राकाराग्रे निषेदिवान् ॥ २२ ॥

ददालेत्यादि । रामलक्ष्मणयोः नागपाशबन्धनसूचनार्थम् अमङ्गलं श्लोकद्वयेन उच्यते । भूमिर्ददाल दल मि भेदे । नभ आकाशं गोष्पदप्रं गोष्पदं पूरयित्वा रक्तं ववर्ष, वृषु सेचने हृषु चेति चकारात् सेचने, पूरी आप्यायने इत्यस्मात् वर्षप्रमाणे क्लामण् ऊलोपश्चेति परः । स्वमते गोष्पदं प्राति पूरयतीति गोष्पदप्रं रक्तस्य विशेषणं, गोष्पद-पूरणेनैव रक्तवर्षप्रमाणं गम्यते । प्रा ल पूर्त्तौ हनजनादिति डः । मृगा वामं दिग्भागं प्रसस्रुपुर्गताः, लृ स्रपौ गत्याम् । अशुभाः खगा उलूकादयः चुकुविरे कु ङ् शब्दे । अशुभमिति पाठे—क्रियाविशेषणम् ॥ २० ॥ भ०

उल्का इत्यादि । दीप्ता उल्का ददृशिरे दृष्टाः, अशिवा अनिष्टाः शिवा गोमा-यवः रुरुवुः शब्दितवन्तः, मही च चचमाये कम्पिता, क्ष्मायी विधूनने इत्यनुदात्तेत् । रामश्चाशुभागममनिष्टप्राप्तिमाशशङ्के शङ्कते स्म चेतसः पर्य्याकुलत्वात् इदमप्य-निष्टमेव ॥ २१ ॥ ज० म०

उल्का इत्यादि । दीप्ता उल्का दृश्यन्ते स्म, शिवाः शृगालाः अशुभं रवं चक्रुः, अशुभा इति पाठे—अनिष्टा इत्यर्थः, अशिवमिति क्वचित्पाठः । रु ल ध्वनौ । मही चचमाये कम्पिता, क्ष्मायृङ् विधूनने । रामश्च अशुभस्यागमनं शशङ्के शङ्कितवान्, अकुशल-दर्शनेन पर्य्याकुलत्वात् । शकि ङ् त्रासशङ्कयोः ॥ २१ ॥ भ०

रावण इत्यादि । राक्षसानभ्युपेयुषोऽभिमुखमुपगतवन्तो ये शत्रवो रामादय-स्तान् रावणः शुश्रुवान्, स्वयञ्च प्राकाराग्रे निषेदिवान् निषण्णः सन् भाषायां सदवसे-त्यादिना क्वसुः । युयुत्सयाञ्चक्रे योद्धुमिच्छन्तं प्रयोजितवानित्यर्थः, सनन्तण्यन्तस्य रूपम् ॥ २२ ॥ ज० म०

रावण इत्यादि । राक्षसानभ्युपेयुषोऽभिमुखमागतान् शत्रून् रामादीन् शुश्रुवान् रावणः स्वयं प्राकारस्याग्रे निषण्णः सन् राक्षसान् योद्धुमिच्छां कारयामास । युधौ ङ् युद्धे सन् ञिः आम्, इण गतौ ठीपमवदिति क्वसुः वसोर्धसेकाञ्विणात इति इम् यिणोऽच्यणाविति यः खेः कितीति दीर्घः वसोर्वसेमिति इम्सहितस्य वस्य उत्वं सर्द्दः क्वसौ तृफलेत्यादिना अत एत्वं खिलोपश्च ॥ २२ ॥ भ०

निरासू राक्षसा बाणान् प्रजहुः शूलपट्टिसान्।
असींश्च वाहयाञ्चक्रुः पाशैश्चाचकृषुस्ततैः॥ २३॥
भल्लैश्च विभिदुस्तीक्ष्णैर्विविधुस्तोमरैस्तथा।
गदाभिश्चूर्णयाञ्चक्रुः शितैश्चक्रैश्च चिच्छिदुः॥ २४॥
वानरा मुष्टिभिर्जघ्नुर्ददंशुर्दशनैस्तथा।
निरासुश्च गिरींस्तुङ्गान् द्रुमान् विचकरुस्तथा॥ २५॥

निरासुरित्यादि। रावणप्रचोदिता राक्षसा बाणान् निरासुः क्षिप्तवन्तः शूल-पट्टिसान् शूलसहितान् पट्टिसान् शाकपार्थिवादित्वात् तत्पुरुषः द्वन्द्वे तु जातिरप्राणिनामित्येकवद्भावः स्यात्। तान् प्रजहुः त्यक्तवन्तः, ओ हाक त्यागे। असींश्च खड्गान् वाहयाञ्चक्रुः व्यापारितवन्तः ण्यन्तस्य रूपम्। पाशैस्ततैर्विस्तृतैः आचकृषुः आकृष्ट-वन्तः किस्त्वे गुणप्रतिषेधः॥ २३॥ ज० म०

निरासुरित्यादि। राक्षसा बाणान् निरासुः चिक्षिपुः, असु क्षेपे। शूलपट्टिसान् प्रजहुः अन्योन्यपरि त्यक्तवन्तः, ओ हाक् त्यागे। शूलानि च पट्टिसाश्चेति इतरेतरद्वन्द्वः, परे तु शूलसहिताः पट्टिसा इति शाकपार्थिवादिः द्वन्द्वे हि अप्राणिजातित्वात् नपुं-सकत्वं स्यात् इत्याहुः। असीन् खड्गान् वाहयाञ्चक्रुः वहै ञौ प्रापणे ञिः। ततैर्विस्तृतैः पाशैः आचकृषुः आकृष्टवन्तः। कृषौ आकर्षे॥ २३॥ भ०

भल्लैरित्यादि। भल्लैः विभिदुः विदारितवन्तः तीक्ष्णैः, तथा तोमरैः विविधुः ताड़ितवन्तः, व्यधेः ग्रहित्यादिना सम्प्रसारणम्, गदाभिश्च चूर्णयाञ्चक्रुः चूर्णितवन्तः, सत्येत्यादिना णिच्, चूर्ण प्रेरणे इति चौरादिकत्वाद्वा। चिच्छिदुः छिन्नवन्तः राक्षस-युद्धमेतत्॥ २४॥ ज० म०

भल्लैरित्यादि। राक्षसाः तीक्ष्णैः भल्लैः विभिदुः, भिदिर् भ धौ भिदि। तथा तोमरैः विविधुः व्यध्यौ ताड़े व्यधग्रहेति खेर्जिः ग्रहस्वपाद्योरिति प्रक्रतेर्जिः। गदाभिः चूर्णयाञ्चक्रुः चूर्णितवन्तः, चूर्ण क् पेषे चूर्णशब्दाद्वा लिः कृत्याख्याने ञिरिति ञिः। शितैः तीक्ष्णैः चक्रैः चिच्छिदुः छिदि रौ ञ् छेदे॥ २४॥ भ०

वानरा इत्यादि। वानरा मुष्टिभिः जघ्नुः हतवन्तः राक्षसानित्यर्थात्। दशनैः ददंशुः दष्टवन्तः, गिरीन् निरासुः क्षिप्तवन्तः, द्रुमान् विचकरुः विक्षिप्तवन्तः, कॄ विक्षेपे ऋच्छत्यॄतामिति गुणः॥ २५॥ ज० म०

लाङ्गूलैर्लोठयाञ्चक्रुस्तलैर्निन्युश्च संक्षयम् ।
नखैश्च चक्नतुः क्रुद्धाः पिपिषुश्च क्षितौ बलात् ॥ २६ ॥
सम्बभूवुः कबन्धानि प्रोहुः शोणिततोयगाः ।
तेरुर्भटास्यपद्मानि ध्वजैः फेणैरिवाबभे ॥ २७ ॥

वानरा इत्यदि । एवं राक्षसेषु युध्यमानेषु वानरा मुष्टिभिः जघ्नुः हतवन्तः राक्षसानित्यर्थात्, हन ली गतौ बधे हनगमित्युङ्लोपः । तथा दन्तैः ददंशुः दशन्ति स्म । दन्शौ दंशने । तुङ्गान् उच्चान् गिरीन् शिरःसु क्षिप्तवन्तः, तथा द्रुमान् वृक्षान् विचकरुः विक्षिप्तवन्तः । कॄ श विक्षेपे ऋतो णः क्नित्र्यामिति गुः ॥ २५ ॥ भ०

लाङ्गूलैरित्यदि । लाङ्गूलैर्लोठयाञ्चक्रुः लाङ्गूलैः व्यापादितवन्तः रुठलुठ-प्रतिघाते परस्मैपदिनो ण्यन्तस्य रूपम् । तलैः हस्ततलैः सङ्क्षयं विनाशं निन्युः नीतवन्तः, नखैश्च चक्नतुः उच्छिन्नवन्तः, कृती च्छेदने । क्रुद्धाः वानराः बलात् हठात् क्षितौ पिपिषुः चूर्णितवन्तः ॥ २६ ॥ ज० म०

लाङ्गूलैरित्यादि । वानराः लाङ्गूलैः राक्षसान् ताड़ितवन्तः लठ वादिवदित्यत्र वादिवदिति रुठधातोरर्थे प्रतीघाते उपघाते चेत्यर्थः । "धातवो हन्तिभाषार्था अकितो वा चुरादयः" इत्युक्तेः स्वार्थे ञिः । तलैः चपेटैश्च सङ्क्षयं निन्युः प्रापितवन्तः, णी ञ प्रापणे शुध्वोरित्यादिना यत्वम् । नखैरपि चक्नतुः कृती श प छिदि क्रुद्धाः सन्तः बलात् क्षितौ पिपिषुः धौ पिष् लृ चूर्णने ॥ २६ ॥ भ०

संबभूवुरित्यादि । कबन्धानि संबभूवुः संभूतानि, प्रतिसहस्रं व्यापादनात् कबन्धस्यैकस्योत्पादनात् । शोणिततोयगाः शोणितनद्यः प्रोहुः प्रकर्षेण प्रवृत्ताः, वहेर्यजादित्वात् सम्प्रसारणम् । भटास्यपद्मानि योधमुखपद्मानि तेरुः प्लुतानि तॄफलेत्यादिना एत्वाभ्यासलोपौ । फेनैरिव ध्वजैः शोणितनदीषु आबभे शोभितं, भावे च लिट् ॥ २७ ॥ ज० म०

संबभूवुरित्यादि । कबन्धानि संबभूवुः संभूतानि, भू सत्तायां भुवो वन् टौण्यचीति वन् भुवोऽङ् ण्यामिति खेरङ् । "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः । रक्तनद्यः प्रोहुः प्रवहन्ति स्म, प्रवृत्ता इत्यर्थः । वहे ञौ प्रापणे ऐदित्-त्वात् यजादिः व्यधग्रहेत्यादिना खेर्जिः ग्रहस्वपाद्योरिति मूलस्य जिः । भटानां योधानां मुखपद्मानि अत्र नद्यां तेरुः प्लवन्ते स्म, तॄ तरेऽभिभवे प्लुत्याम् ऋतो णः

रक्तपङ्के गजाः सेदुर्न प्रचक्रमिरे रथाः ।
निममज्जुस्तुरङ्गाश्च गन्तुं नोत्सेहिरे भटाः ॥ २८ ॥
कोट्या कोट्या पुरद्वारमेकैकं रुरुधे द्विषाम् ।
षट्त्रिंशद्धरिकोट्यश्च निवव्रुर्वानराधिपम् ॥ २९ ॥
तस्तनुर्जज्वलुर्मम्लुर्जग्लुर्लुलुठिरे क्षताः ।
मुमूर्च्छुर्ववमू रक्तं तत्रसुश्चोभये भटाः ॥ ३० ॥

तृफलेत्यादिना एत्वं खिलोपोऽपि। पतितैः ध्वजैः तत्र नद्यां फेनैरिव आबभे शोभितम्। भा ल प दीप्तौ भावे रूपम् ॥ २७ ॥ भ०

रक्तेत्यादि। रक्तपङ्के गजाः सेदुः निषण्णाः रक्तपङ्कस्य बहुलत्वात्। तथा रथा न प्रचक्रमिरे न गन्तुमारब्धाः प्रोपाभ्यामित्यात्मनेपदम्। तुरङ्गा निममज्जुः निमग्नाः, भटाश्च गन्तुं नोत्सेहिरे नोत्सहन्ते स्म ॥ २८ ॥ ज० म०

रक्तपङ्क इत्यादि। रक्तानां पङ्के गजा हस्तिनः सेदुः अवसादं प्रापुः, षद्ऌ ज्ञौ विषादे शरणे गत्याम्। तत्र रथा अपि गन्तुं न प्रारब्धाः, क्रमु गतौ प्रोपादारम्भ इति मम्। तुरङ्गाश्च तत्र निमग्नाः मस्जौ श ट्वु स्नाने झप्भसोरिति सस्य दत्वे स्तुश्चुभि-श्चुत्वात्। भटा योधा गन्तुं न उत्सहन्ते स्म, सहेत्तृफलेत्यादिना एत्वं, खेर्लोपः च ॥ २८ ॥ भ०

कोट्येत्यादि। द्विषामेकैकं पुरद्वारं वानराणां कोट्या कोट्या रुरुधे रुद्धम्। कर्मणि लिट्। षट्त्रिंशत् हरिकोट्यः वानरकोट्यो वानराधिपं सुग्रीवं निवव्रुः आवृत्य स्थिताः ॥ २९ ॥ ज० म०

कोट्येत्यादि। द्विषां राक्षसानाम् एकैकं पुरद्वारं वानराणां कोट्या कोट्या रुरुधे रुद्धं, रुधिर्ँ ञि आवृतौ कर्मणि ठौ। षट्त्रिंशद्वानरकोट्यः वानराधिपं सुग्रीवं निवव्रुः आवृतवन्तः, वृ ञ वृतौ संख्यामात्रवृत्तित्वात् कोट्येत्येकवचनं वीप्सायां द्वित्वं लोकतः सिद्धम् ॥ २९ ॥ भ०

तस्तनुरित्यादि। उभये भटा रामरावणसम्बन्धिनो योधाः क्षताः सन्तः तस्तनुः स्तनितवन्तः, जज्वलुः चलिताः, ज्वलज्वल चलने। मम्लुः म्लानाः, म्लै गात्रक्षये। जग्लुः हर्षक्षयङ्गताः, लुलुठिरे भूमौ लुठन्ते स्म, रुठलुठ प्रतिघाते तुदादावात्मनेपदी पठ्यते।

सम्पातिना प्रजङ्घस्तु युयुधेऽसौ द्रुमाहतः।
चकम्पेऽतीव चुक्रोश जीवनाशं ननाश च॥ ३१॥
उच्चख्नाते नलेनाजौ स्फुरत्प्रतपनाक्षिणी।
जम्बुमाली जहौ प्राणान् ग्राव्णा मारुतिना हतः॥ ३२॥

मुमूर्च्छुः मोहमुपगताः, रक्तं ववमुः शोणितवन्तः, ततृषुः तृष्यन्ति स्म। एतत् सङ्कुलयुद्धमाह॥ ३०॥ ज० म०

तस्तनुरित्यादि। उभये भटा रामरावणसम्बन्धिनः सन्तः सन्तः स्तनन्ति स्म। स्तन मि शब्दे, अज्वलुः कोपेन इत्यर्थात् ज्वल्म चलत्विषोः। मम्लुः म्लै कान्तिसंक्षये जग्लुः ग्लै क्लमे। लुलुठिरे भूमौ लुठन्ति स्म। मुमूर्च्छुः मोहं गताः, मूर्च्छा संमोहे उच्छ्रये। मुमुहुरिति क्वचित्पाठः। रक्तं ववमुः वमन्ति स्म। टु वमु उद्गिरणे, तॄफलेत्यादिना विभाषया एत्वं खिलोपश्च तदभावपक्षे रूपमिदम्। ततृषुः तृष ञि तृष् पिपासा। तत्रसुरिति पाठे—त्रासं गताः। त्रस भये। उभये इति सङ्कुलयुद्धमुक्तम्॥ ३०॥ भ०

सम्पातिनेत्यादि। प्रजङ्घो नाम राक्षसः सम्पातिनाम्ना वानरेण सह युयुधे युध्यते स्म। असौ प्रजङ्घो द्रुमाहतः चकम्पे कम्पते स्म, अतीव अत्यर्थं चुक्रोश क्रोशति स्म, जीवनाशं ननाश जीवेन विनष्टः कर्षोर्जीवपुरुषयोर्नशिवहोः इति णमुल्॥ ३१॥ ज० म०

सम्पातिनेत्यादि। प्रजङ्घनामा राक्षसः सम्पातिनाम्ना वानरेण सह युयुधे युद्धं कृतवान्, युध्यौ ङ् युद्धे। असौ प्रजङ्घो द्रुमेणाहतः सन् चकम्पे कपिङ् चाले। अतीव अत्यर्थं चुक्रोश शब्दं चकार, क्रुश् जौ रोदे हृतौ। जीवनाशं ननाश जीवन् सन् नष्टः। नश् लृ यू नाशे कर्त्तृरूपाज्जीवान्नशी गतार्थे णमिति परः, स्तमते जीवनस्य नाशोऽदर्शनं यस्मादिति नाशक्रियाविशेषणम्॥ ३१॥ भ०

उच्चख्नाते इत्यादि। स्फुरन् चलन् प्रतपनो नाम राक्षसः तस्य अक्षिणी नयने नलेन वानरेण उच्चख्नाते उत्खाते, कर्म्मणि लिट्, गमहनेत्युपधालोपः। मारुतिना हनूमता ग्राव्णा पाषाणेन हतो जम्बुमाली राक्षसः प्राणान् जहौ त्यक्तवान्॥ ३२॥ ज० म०

उच्चख्नाते इत्यादि। नलनाम्ना वानरेणाजौ युद्धे स्फुरतः प्रतपननाम्नो राक्षसस्य अक्षिणी चक्षुषी उच्चख्नाते उत्खाते, खनु ञ् विदारे कर्म्मणि रूपं हनगमि-

मित्रघ्नस्य प्रचुक्षोद गदयाङ्गं विभीषणः।
सुग्रीवः प्रघसं नेभे बहून् रामस्ततर्द च ॥ ३३ ॥
वज्रमुष्टेर्विशिश्लेष मैन्देनाभिहतं शिरः।
नीलश्चकर्त्त चक्रेण निकुम्भस्य शिरः स्फुरत् ॥ ३४ ॥
विरूपाक्षो जहे प्राणैस्तृढः सौमित्रिपत्रिभिः।
प्रमोचयाञ्चकारासून् द्विविदस्त्वशनिप्रभम् ॥ ३५ ॥

त्युङ् लोपः। जम्बुमाली राक्षसो मारुतिना हनूमता ग्राव्णा प्रस्तरेण हतः सन् प्राणान् जहौ त्यक्तवान्। ओ हाक् लि त्यागे ॥ ३२ ॥

मित्रघ्नस्येत्यादि। मित्रघ्नस्य राक्षसस्य अङ्गं गदया विभीषणः प्रचुक्षोद, प्रघसं नाम राक्षसं सुग्रीवो नेभे हिंसितवान् नभतुभ हिंसायाम् इत्यनुदात्तेत्। रामश्च बहून् राक्षसान् ततर्द हिंसितवान्। उ तृदी हिंसानादरयोः ॥ ३३ ॥ ज० म०

मित्रघ्नस्येत्यादि। विभीषणो गदया मित्रघ्नस्य राक्षसस्य अङ्गं प्रचुक्षोद चूर्णयामास, ञ धौ क्षुदिर् क्षुदि क्षुत् संपेषणम्। सुग्रीवः प्रघसं राक्षसं नेभे जघान। नभतुभ लृ ङ् चेति चकारात् हिंसे लृङौ नभेरप्यनुबन्धौ। रामश्च बहून् राक्षसान् ततर्द जघान, तर्द हिंसे तृदु ञ धिर्नादरे इत्यस्य वा रूपम् ॥ ३३ ॥ भ०

वज्रेत्यादि। वज्रमुष्टेः राक्षसस्य शिरो मैन्देन वानरेण अभिहतं सत् विशिश्लेष विश्लिष्टं, निकुम्भस्य शिरः स्फुरत् चलत् नीलो वानरः चक्रेण चकर्त्त छिन्नवान् ॥ ३४ ॥ ज० म०

वज्रमुष्टेरित्यादि। वज्रमुष्टेः राक्षसस्य शिरो मैन्देन वानरेणाभिहतं सत् विशिश्लेष विश्लिष्टं, श्लिषौ य लृ जि श्लेषे, विपूर्वः पृथग्भावमाह। नीलो वानरो निकुम्भस्य राक्षसस्य स्फुरत् शिरस्तदीयेन चक्रेण चकर्त्त चिच्छेद, कृती छेदने ॥ ३४ ॥ म०

विरूपाक्ष इत्यादि। विरूपाक्षो राक्षसः सौमित्रिपत्रिभिः लक्ष्मणशरैः तृढः हत इत्यर्थः। तृह हिंसार्थः इति तौदादिकस्यौदित्वान्निष्ठायामितीट्प्रतिषेधः। प्राणैः जहे त्यक्तः, कर्म्मणि लिट्। द्विविदो वानरः अशनिप्रभं राक्षसं प्राणान् प्रमोचयाञ्चकार त्याजितवान् मुचेर्ण्यन्तस्य लिटि रूपम् ॥ ३५ ॥ ज० म०

गदा शक्रजिता जिघ्ये तां प्रतीयेष बालिजः।
रथं ममन्थ सहयं शाखिनास्य ततोऽङ्गदः॥ ३६॥
तत्कर्म बालिपुत्रस्य दृष्ट्वा विश्वं विसिस्मिये।
संत्रेसू राक्षसाः सर्वे बहु मेने च राघवः॥ ३७॥
सुग्रीवो मुमुदे देवाः साध्वित्यूचुः सविस्मयाः।

---

विरूपाक्ष इत्यादि। सौमित्रेः पत्रिभिः बाणैः तढ़ौ हतो विरूपाक्षः प्राणैः जहे त्यक्तः। ओ हा लि त्यागे, कर्म्मणि रूपं, तृह ध ज हिंसे क्तः, हो ढः ढभात्तथोरिति धः, ष्टुभिरिति ढः, ढ्रोढ्रीति ढलुक्; तत्र ऋकारवर्जनात् न दीर्घः। द्विविदो वानरः अशनिप्रभं राक्षसम् असून् प्राणान् प्रमोचयाञ्चकार त्याजितवान्। मुच लृ श प ञौ मोचे ञान्तः। अत्र मुचेर्मोचनपूर्विकायां गतौ वर्त्तमानत्वेन घोऽञौ ञे रित्यादिना प्रयोज्यस्य कर्म्मत्वं योगविभागाद्वा, आपिशलिस्तु गत्यर्थादिषु कर्म्मैव नोखाद्यादिषु कर्त्तृता॥ ३५॥ भ०

शेषेषु कर्म्मकर्त्ता वा यथासम्भवमिष्यत इत्याह

गदेत्यादि। शक्रजिता इन्द्रजिता गदा जिघ्ये प्रहिता, हिनोतेः कर्म्मणि लिट्, हेरचङीति कुत्वम्। तां गदां बालिजोऽङ्गदः प्रतीयेष प्रतीष्टवान्। इषेरभ्यासस्यासवर्णे इतीयङ्। ततोऽनन्तरम् अस्य शक्रजितो रथं सहयं साश्वं शाखिना तरुणा ममन्थ चूर्णितवान्। मथि हिंसासंक्लेशयोः॥ ३६॥ ज० म०

गदेत्यादि। इन्द्रजिता गदा जिघ्ये प्रेषिता, हि न वर्द्धने गतौ, हेः खेरनङि घिः शुध्नोरित्यादिना यत्वम्। बालिजोऽङ्गदः तां गदां प्रतीयेष जग्राह, इषेः खेर्य्योरियुवर्णे इति इय्। ततोऽनन्तरं शाखिना वृक्षेण अङ्गदोऽस्य शक्रजितः सहयं रथं ममन्थ चूर्णितवान्॥ ३६॥ भ०

तत्कर्मेत्यादि। तत्कर्म्म रथस्य चूर्णनं दृष्ट्वा विश्वं त्रैलोक्यं विसिस्मिये विस्मितं, राक्षसाः सर्वे त्रेसुः, राघवश्च बहु मेने अङ्गदं श्लाघितवान् इत्यर्थः॥ ३७॥ ज० म०

तत्कर्मेत्यादि। बालिपुत्रस्य अङ्गदस्य तत्कर्म्म गदामन्थनरूपं दृष्ट्वा विश्वं त्रैलोक्यं विसिस्मिये विस्मितं, स्मिङ शुध्नोरितीय्। सर्वे राक्षसाः संत्रेसुः संत्रस्ताः त्रस त्रसोण भये, तृफलेत्यादिना एत्वं खिलोपश्च। राघवश्च बहु मेने अङ्गदं श्लाघितवान्। मन द ङ बोधे, मन्यौङ् च॥ ३७॥ भ०

सुग्रीव इत्यादि। सुग्रीवो मुमुदे हृष्टवान्, देवाः साध्वित्यूचुः अविस्मपीति

विभीषणोऽभितुष्टाव प्रशशंसुः प्लवङ्गमाः ॥ ३८ ॥
ह्री चित्रं लक्ष्मणेनोचे रावणिश्च तिरोदधे।
विचकार ततो रामः शरान् संतत्रसुर्द्विषः ॥ ३९ ॥
विभिन्ना जुघुरुर्घोरं जक्षुः क्रव्याशिनो हतान्।
चुश्चोत व्रणिनां रक्तं छिन्नाश्चेलुः क्षणं भुजाः ॥ ४० ॥

---

सम्प्रसारणम्। विभीषणोऽभितुष्टाव अभिष्टुतवान्, स्तुञ् ष्टु स्तुतौ उपसर्गादित्यादिना षत्वम्। प्लवङ्गमाः प्रशशंसुः प्रशंसां कृतवन्तः ॥ ३८ ॥ ज० म०

सुग्रीव इत्यादि। तत्कर्म्म दृष्ट्वा सुग्रीवो मुमुदे, ञि मुद ङ् हर्षे। देवाः साध्वित्युक्तवन्तः, विभीषणोऽभितुष्टाव अभिमुखीभूय स्तुतिं कृतवान्। ष्टु ञ ल स्तुतौ णीकः स्तुस्तुभेति षत्वम्। वानराः प्रशशंसुः। शन्सु हिंसास्तुत्योः ॥ ३८ ॥ भ०

ह्री चित्रमित्यादि। ह्रीति विस्मये। चित्रमाश्चर्य्यमिति लक्ष्मणेनोचे उक्तं, वदेर्भावे लिट्, यजादित्वात् सम्प्रसारणम्। रावणिः इन्द्रजित् रावणस्यापत्यम्। अभीत इञ्। तिरोदधे अदृश्योऽभूत्, ततः अदर्शनानन्तरं रामः शरान् विचकार विक्षिप्तवान्। कॄ विक्षेपे। द्विषः संतत्रसुः संत्रस्ताः ॥ ३९ ॥ ज० म०

ह्री चित्रमित्यादि। ह्री विस्मये। लक्ष्मणेन चित्रमिदं, कर्मेत्यूचे। रावणपुत्र इन्द्रजित् तिरोदधे मायया अदृश्यो जातः। रावणस्यापत्यमिति बाह्वाद्यत इति णिः। ततोऽनन्तरं रामः शरान् विचकार विक्षिप्तवान्। कॄ श् विक्षेपे। द्विषः संतत्रसुः सन्त्रस्ताः, तॄफलेत्यादिना विभाषया एत्वविधानादत्र तदभावः ॥ ३९ ॥ भ०

विभिन्ना इत्यादि। शरैः विभिन्ना जुघुरुः घोरं भीमशब्दं कृतवन्तः, घुर भीमार्थशब्दयोः। क्रव्याशिनः शृगालादयो हतान् विनष्टान् जक्षुः भक्षितवन्तः, लिड्यन्यतरस्यामित्यदेर्घस्लृः, उपधालोपः, खरिचेति चत्वम्। व्रणिनां शरैः कृतव्रणानां रक्तं चुश्चोत व्रणादित्यर्थात्, कर्त्तरि लिटः पित्त्वादकित्त्वे गुणः। भुजाश्छिन्नाः सन्तः क्षणमात्रं चेलुश्चलिताः ॥ ४० ॥ ज० म०

विभिन्नेत्यादि। द्विषो रामबाणैः विभिन्नाः सन्तो घोरं जुघुरुः शब्दचक्रुः। घुर श ध्वनौ भीमार्थे। क्रव्याशिनः शृगालादयो हतान् द्विषो जक्षुः भक्षितवन्तः, अद लो भक्षे। क्यां वेति घस्लादेशः, भक्षे लृ घसौ चेत्यस्य वा रूपं, हनगमित्युङ् लोपः झपझसीरिति घस्य कत्वे क्षिलादिति षः। व्रणिनां शरैः क्षतानां द्विषां रक्तं चुश्चोत। स्रुतिर् क्षरणेन भुजाश्छिन्नाः सन्तः क्षणं चेलुः। चल गमने ॥ ४० ॥ भ०

कृत्तैरपि दृढ़क्रोधो वीरवक्त्रैर्न तत्यजे ।
पलायाञ्चक्रिरे शेषा जिह्रियुः शूरमानिनः ॥ ४१ ॥
राघवो न दयाञ्चक्रे दधुर्धैर्य्यं न केचन ।
मम्ने पतङ्गवद्वीरैर्हाहेति च विचुक्रुशे ॥ ४२ ॥
तिरोबभूवे सूर्य्येण प्रापे च निशयास्पदम् ।
जग्रसे कालरात्रीव वानरान् राक्षसांश्च सा ॥ ४३ ॥

कृत्तैरित्यादि । वीरवक्त्रैः शूरमुखैः कृत्तैरपि छिन्नैरपि दृढ़ो घनः क्रोधो न तत्यजे न त्यक्तः, दष्टौष्ठभ्रूकुट्यादिनां तथावस्थानात् । कर्म्मणि लिट् । पलायाञ्चक्रिरे पलायिताः । दयायासश्चेत्याम्, उपसर्गस्यायताविति लत्वम् । शेषा ये न पलायिताः ते शूरमानिनः, मन इति णिनिः । जिह्रियुः लज्जन्ते स्म ॥ ४१ ॥ ज० म०

कृत्तैरित्यादि । शूराणां मुख्यैः छिन्नैरपि दृढ़क्रोधो न तत्यजे न त्यक्तः, सन्दष्टाधरभ्रूकुट्यादीनां तथैव विस्फारात् । त्यज हानौ कर्मणि रूपम् । केचित् पलायाञ्चक्रिरे पलायिताः । अयङ् गतौ परापूर्वः । विजादीत्याम् ग्रो र ल इत्यत्र योगविभागात् लत्वमभिधानात् । शेषा ये न पलायितास्ते शूरमानिनो जिह्रियुः, ह्री लज्जे, श्नुध्वोरित्यादिना इय् । शूरम् अर्थादात्मानं मन्यत इति ग्रहादित्वात् णिन् ॥ ४१ ॥ भ०

राघव इत्यादि । राघवो न दयाञ्चक्रे न दयां कृतवान् । पूर्ववदाम् । न केचन न केचित् धैर्य्यं दधुः, धारितवन्तः । सर्व एव अहमहमिकया प्रवृत्ताः । यदि वा न केचन केचित् धैर्य्यं न दधुः अपि तु दधुरेव । पतङ्गवत् पतङ्गैरिव वीरैः मम्ने मृतं, भावे लिट् । हाहेति च विचुक्रुशे रुदितम् ॥ ४२ ॥ ज० म०

राघव इत्यादि । रामो न दयाञ्चक्रे । ञि दय ग्रहणे गतौ बधे दानेऽवने, विजादीत्याम् । केचित् धैर्य्यं न दधुः धृतवन्तः, सर्व एव व्याकुला इत्यर्थः । डु धा ञ् लृ धारणे उस्येचीत्यालोपः । वीरैः पतङ्गवत् शलभैरिव मम्ने मृतं, मृङ श्र मृतौ भावे रूपम् । हाहेति च विचुक्रुशे रुदितं, क्रुश जौ रोदे ह्रतौ, भावे रूपम् ॥ ४२ ॥ भ०

तिर इत्यादि । सूर्य्येण तिरोबभूवे तिरोभूतम् अस्तङ्गतमित्यर्थः । भावे लिट् । निशया च आस्पदं प्रतिष्ठायामिति निपातनं प्रापे प्राप्तं, कर्म्मणि लिट् । सा च निशा कालरात्रीव कालः कृतान्तः तेन प्रयुक्ता रात्रिरिति शाकपार्थिवादित्वात् समासः ।

चुकोपेन्द्रजिदत्युग्रं सर्पास्त्रं चाजुहाव सः।
आजुहुवे तिरोभूतः परानीकं जहास च॥ ४४॥
बबाधे च बलं कृत्स्नं निजग्राह च सायकैः।
उत्ससर्ज शरांस्तेऽस्य सर्पसाच्च प्रपेदिरे॥ ४५॥

गवेशाजसाविति ङीप्। वानरान् राक्षसांश्च जग्रसे ग्रसते स्म, भक्षितवतीत्यर्थः॥ ४३॥ ज० म०

तिर इत्यादि। सूर्य्येण तिरोबभूवे अस्तं गतं, भावे रूपम्। भुवोऽङ् व्याप्तिमिति पक्षे खेरङ्। निशया आस्पदं स्थानं प्रापे प्राप्तं, कर्म्मणि रूपम्। आङः पदे सुट् आस्पदं स्थाने प्रभुत्वे चेति परः, स्वमते मनीषादित्वात्। सा निशा कालरात्रीव वानरान् राक्षसांश्च जग्रसे भक्षितवती। ग्रस ग्लसु ङ् भक्षे। कालो यमः तेन प्रयुक्ता रात्रिः कालरात्री, शाकपार्थिवादिरिति परः। स्वमते सम्बन्धविवक्षया षष्ठीसमासः। पाक्षीणादीत्यादिना पक्षे ईप्॥ ४३॥ भ०

चुकोपेत्यादि। रामव्यापारं दृष्ट्वा इन्द्रजित् तिरोहितः सन् चुकोप कुपितवान्। अत्युग्रञ्च सर्पास्त्रं सर्पमस्त्रमिव आजुहाव आहूतवान्। आह्वयतेः शब्दे वर्त्तमानस्य अभ्यस्तस्य चेति द्विर्वचनात् प्राक् सम्प्रसारणं, ततो द्विर्वचनम्। परानीकञ्च रामबलम् आजुहुवे स्पर्द्धते स्म, स्पर्द्धायामाङः इत्यात्मनेपदं, पूर्ववत् सम्प्रसारणं, यजादित्वात् वा तत उवङादेशः। जहास च विहसितवान्॥ ४४॥ ज० म०

चुकोपेत्यादि। रामपराक्रमदर्शनात् इन्द्रजित् चुकोप। कुप्य इर कोपे। अत्युग्रं सर्परूपमस्त्रम् आजुहाव आहूतवान्। तिरोभूतः सन् परानीकं शत्रुसैन्यम् आजुहुवे स्पर्द्धितवान्। स्पर्द्धायामाङ् इति मं, ह्वे ञ स्पर्द्धे शब्दे च उभयत्र व्यथग्रहेति खेर्जिः। जहास च हसितवांश्च। हस हासे॥ ४४॥ भ०

बबाध इत्यादि। बबाधे च अभिभूतवान्। बाध विलोड़ने। निजग्राह च निगृहीतवान्, सायकैः लोहयुक्तैः सर्पास्त्रैः उत्ससर्ज शरान् क्षिप्तवान्। ते उत्सृष्टाः शरा अस्य बलस्य सर्पसात् कार्त्स्न्ये सातिः, सम्प्रपेदिरे सम्प्रपद्यन्ते स्म॥ ४५॥ ज० म०

बबाध इत्यादि। स इन्द्रजित् सर्वं रामबलं बबाधे अभिभूतवान्। बाधृ ङ विहतौ। सायकैः शरैः निगृहीतवांश्च। असौ यान् शरान् उत्ससर्ज क्षिप्तवान्। सृजी ङ् विसर्गेऽथ सृजौ श चेति चकाराद्विसर्गे। ते शराः अस्य रामबलस्य सर्पसात् सर्पभूताः

आचिचाय स तैः सेनामाचिकाय च राघवौ।
बभाण च न मे मायां जिगायेन्द्रोऽपि किं नृभिः॥ ४६॥
आचिक्याते च भूयोऽपि राघवौ तेन पन्नगैः।
तौ मुमुहतुरुद्विग्नौ वसुधायाञ्च पेततुः॥ ४७॥
ततो रामेति चक्रन्दुस्त्रेसुः परिदिदेविरे।
निशश्वसुश्च सेनान्यः प्रोचुर्धिगिति चात्मनः॥ ४८॥

प्रपेदिरे सम्पद्यन्ते स्म। कातृ त्सायस्थोरिति चसात्। यौ पद ङ् गतौ। तृफलेति अत एत्वं खिलोपश्च॥ ४५॥ भ०

आचिचायेत्यादि। स इन्द्रजित् सर्पास्त्रैः वानराणां सेनाम् आचिचाय छन्नवान्। विभाषा चेति अकुत्वपक्षे रूपम्। राघवौ च रामलक्ष्मणौ आचिकाय। कुत्वपक्षे रूपम्। बभाण च भणति स्म, मम मायाम् इन्द्रोऽपि न जिगाय न जितवान्। सन्लिटोर्जेरिति कुत्वम्। किं नृभिः न किञ्चित् प्रयोजनमित्यर्थः॥ ४६॥ ज० म०

आचिचायेत्यादि। स इन्द्रजित् तैः शरैः रामसेनाम् आचिचाय, राघवौ रामलक्ष्मणौ चाचिकाय आच्छादितवान्। चिनचिञ् चित्यां चेः किर्वासन्ल्योरिति विभाषया किः। एवञ्च बभाण उक्तवान्। रट भण चेति चकारात् शब्दे। किं बभाणेत्याह। मम मायाम् इन्द्रोऽपि न जिगाय नृभिः मनुष्यैः किं न किञ्चित् प्रयोजनमित्यर्थः। जेर्गिः सन्ल्योरिति ग्यादेशः॥ ४६॥ भ०

आचिक्यात इत्यादि। तेन इन्द्रजिता पन्नगैः भूयोऽपि राघवौ आचिक्याते छन्नौ। कर्म्मणि लिट्। तौ पाशबद्धौ मुमुहतुः मोहं गतौ उद्विग्नौ समीहितानिष्पत्तेः, वसुधायाञ्च पेततुः पतितौ बन्धपरवशीकृतत्वात्॥ ४७॥ ज० म०

अचिक्याते चेत्यादि। तेन इन्द्रजिता भूयः पुनरपि पन्नगैः सर्पास्त्रैः राघवौ आचिक्याते आच्छादितौ। कर्म्मणि चि ञो रूपम्। च पादपूरणे, वक्ष्यमाणक्रियापेक्षया समुच्चये वा। तौ च तत उद्विग्नौ व्याकुलौ मुमुहतुः मोहं प्रापतुः। मुह्य ल ञि वैचित्त्ये। भूमौ च पेततुः पतितौ। पत् लृ ज गत्याम्॥ ४७॥ भ०

तत इत्यादि। ततः पतनादनन्तरं सेनान्यः सुग्रीवादयः। एरनेकाच इति यण्। रामेति नामग्राहं चक्रन्दुः रुदितवन्तः, त्रेसुः भीताः, परिदिदेविरे परिदेवनं कृतवन्तः।

मन्युं शेकुर्न ते रोद्धुं नास्रं संरुरुधुः पतत्।
विविदुर्नेन्द्रजिन्मार्गं परीयुश्च प्लवङ्गमाः॥ ४९॥
दधावाद्भिस्ततश्चक्षुः सुग्रीवस्य विभीषणः।
विदाञ्चकार धौताक्षः स रिपुं खे ननर्द च॥ ५०॥
उज्जुगूरे ततः शैलं हन्तुमिन्द्रजितं कपिः।

---

देव्ह देवने अनुदात्तेत्। निशश्वसुः कोष्णं निश्वासानुत्ससृजुः। आत्मनश्च धिगिति शोचुः गर्हितवन्तः। धिग्योगाद् द्वितीया॥ ४८॥ ज० म०

तत इत्यादि। पतनानन्तरं सेनापतयो नीलादयो रामेति चक्रन्दुः शब्दं चक्रुः। क्रदि रोदने आह्वाने। त्रेसुः भयं प्रापुः। त्रसत्रसीत्र भये। परिदिदेविरे परिदेवनं चक्रुः। देव्ङ् तु देवने, फणभजश्रथश्चेति खेरेकारस्य ऋख इकारः, एचो युत् खमिति वचनात्। निशश्वसुः निश्वासं त्यक्तवन्तः। श्वस प्राणने। आत्मनो धिगिति च शोचुः उक्तवन्तः। धिक्समयेति द्वितीया॥ ४८॥ भ०

मन्युमित्यादि। मन्युं शोकं रोद्धुं वारितुं न शेकुः पारितवन्तः। अस्रञ्च लोचनेभ्यः पतत् न सरुरुधुः न संरुद्धवन्तः, इन्द्रजितो मार्गं न विविदुः न ज्ञातवन्तः क्वासौ तिष्ठति इति। प्लवङ्गमाश्च परीयुः समन्ताद्गतवन्तः क्वासावगमदिति॥ ४९॥ ज० म०

मन्युमित्यादि। ते वानरसेनान्यः मन्युं शोकं रोद्धुम् आवरीतुं न शेकुः न शक्ताः। शक् लृ शक्तौ, रुधिर्धौ ञि ञ आवृतौ। पतदस्रं रोदनजलं न संरुरुधुः न वारितवन्तः। इन्द्रजितो मार्गं पन्थानं न विविदुः न जानन्ति स्म, कुतो गत इति। विद ल मतौ। प्लवङ्गमाः परीयुः सर्वतो गताः क्वासावगमदिति। इण गतौ॥ ४९॥ भ०

दधावेत्यादि। ततोऽनन्तरं विभीषणः सुग्रीवस्य मन्त्रपूताभिः अद्भिश्चक्षुः दधाव प्रक्षालितवान्। सुग्रीवः धौताक्षः प्रक्षालितचक्षुः। बहुव्रीहौ सक्थ्यक्ष्णोरिति समासान्तष्टच्। रिपुम् इन्द्रजितं खे स्थितं विदाञ्चकार ज्ञातवान्। उषविदेत्यादिना आम्। ननर्द च शब्दितवान्, क्वेदानीं यास्यसि इति॥ ५०॥ ज० म०

दधावेत्यादि। ततोऽनन्तरं विभीषण. सुग्रीवस्य चक्षुः अद्भिर्जलैः दधाव प्रक्षालितवान्। धावु ञ जवे सृजि। सुग्रीवः धौताक्षः प्रक्षालितचक्षुः सन् खे आकाशे स्थितं रिपुम् इन्द्रजितं विदाञ्चकार ज्ञातवान्। ङाम् वा व्यामिति ङाम्। ननर्द च, कुत्रेदानीं यास्यसीति। नर्द शब्दे॥ ५०॥ भ०

उज्जुगूर इत्यादि। ततोऽनन्तरं कपिः सुग्रीवः इन्द्रजितं हन्तुं शैलम् उज्जुगूरे

विहाय रावणिस्तस्मादानंहे चान्तिकं पितुः ॥ ५१ ॥
आचचक्षे च वृत्तान्तं प्रजहर्ष च रावणः ।
गाढं चोपजुगूहैनं शिरस्युपशिशिङ्घ च ॥ ५२ ॥
ध्वजानुद्दुधुवुस्तुङ्गान् मांसं चेमुर्जगुः पपुः ।
कामयाञ्चक्रिरे कान्तास्ततस्तुष्टा निशाचराः ॥ ५३ ॥

उत्क्षिप्तवान् । गुरू हिंसागत्योरिति दैवादिकोऽनुदात्तेत्, तस्य गतौ वर्त्तमानस्य रूपम् । रावणिः इन्द्रजित् विहाय अर्थात् युद्धं विहाय तस्मात् आकाशात् पितुः अन्तिकमानंहे गतः । अहि गतौ तस्मात् नुड्विहितस्तु इति नुट् ॥ ५१ ॥ ज० म०

उज्जुगूरे इत्यादि । ततोऽनन्तरं कपिः सुग्रीवः इन्द्रजितं हन्तुं शैलम् उज्जुगूरे उत्क्षिप्तवान् । गुरी य ङ् बधे गत्याम् उत्पूर्व उत्क्षेपणेऽपि वर्त्तते, शि गग अङ्क उद्यम इत्यसौ तु ह्रस्वोपधः । रावणपुत्रः तस्मात् बिभाय भयं प्राप । ञि भी लि भीत्याम् । भीतः सन् पितुः अन्तिकं समीपम् आनंहे गतः । अहिङ्गतौ, स्यान्तादादौति खेरान् । बिभायेत्यत्र विहायेति पाठे युद्धं त्यक्त्वा तस्मात् आकाशात् पितुरन्तिकमानंहे इत्यर्थः ॥ ५१ ॥ भ०

आचचक्ष इत्यादि । नागपाशेन राघवौ बद्धाविति वृत्तान्तम् आचचक्षे आख्यातवान्, रावणः प्रजहर्ष च तुष्टवान् । एनञ्च रावणिञ्च उपजुगूह दृढमाश्लिष्टवान् । अत्र क्रियाफलस्याविवक्षितत्वात् तङ् न भवति, ऊदुपधाया गोह इत्यूत्वम् । शिरसि उपशिशिङ्घ आघ्रातवान् । शिघि आघ्राणे ॥ ५२ ॥ ज० म०

आचचक्षेत्यादि । स इन्द्रजित् रामबन्धनरूपं वृत्तान्तम् आचचक्षे पितरम् इत्यर्थात् चक्ष ङ् ल वदे, ख्यां वेति पक्षे कशाङ्ख्याजादेशाभावः । रावणश्च प्रजहर्ष प्रकृष्टहर्षं प्राप । हृष्य ञि इर्तुष्टौ । एनं पुत्रं गाढम् उपजुगूह च आलिङ्गितवांश्च, गुहू ञ संवृतौ उपपूर्व आलिङ्गनमाह, गुहो णीरूरिति दीर्घत्वम् । शिरसि उपशिशिङ्घ च आघ्रातवांश्च स्नेहविस्फारोऽयम् । शिघि आघ्राणे ॥ ५२ ॥ भ०

ध्वजानित्यादि । ततो निशाचरा अपि श्रुत्वा तुष्टाः सन्तः ध्वजांस्तुङ्गान् उद्दुधुवुः उत्क्षिप्तवन्तः, मांसञ्चेमुः खादितवन्तः, चमु क्षमु अदने । जगुर्गीतवन्तः, पपुः मद्यं पीतवन्तः, कान्ताः कामयाञ्चक्रिरे । कमेर्णिङन्तादाम् ॥ ५३ ॥ ज० म०

ध्वजानित्यादि । निशाचरा अपि रामबन्धनात् तुष्टाः सन्तः तुङ्गान् ध्वजान्

दर्शयाञ्चक्रिरे रामं सीतां राज्ञश्च शासनात् ।
तस्या मिमीलतुर्नेत्रे लुलुठे पुष्पकोदरे ॥ ५४ ॥
प्राणा दध्वंसिरे गात्रं तस्तम्भे च प्रिये हते ।
उच्छश्वास चिराद्दीना रुरोदासौ ररास च ॥ ५५ ॥
लौहबन्धैर्बबन्धे नु वज्रेण किं विनिर्ममे ।

उद्दुधुवुः उत्क्षिप्तवन्तः । धु ञ कम्पने, धु शिक् कम्पे, धून गि, धूञ् चेत्यस्य वा रूपम् । मांसं चेमुः भक्षितवन्तः, चमूचमछमजमजिमझमु भक्षे । जगुर्गानं कृतवन्तः । गै गाने, पपुः मद्यादिकं पीतवन्तः । पा पाने । कान्ताः कामयाञ्चक्रिरे कामितवन्तः । कमु ङ् स्पृहि, वाऽरे इति पाक्षिकी ञिः । त्यान्तत्वादाम् ॥ ५३ ॥ भ०

दर्शयामित्यादि । तथाभूतं रामं दृष्ट्वा सीता मम विधेया स्यादित्यभिप्रायवती राज्ञी रावणस्य शासनात् आज्ञया राक्षसाः अशोकवनिकातः पुष्पकम् आरोह्य सीतां रामं दर्शयाञ्चक्रिरे दर्शितवन्तः । अभिवादिदृशोरात्मनेपद उपसङ्ख्यानमिति विकल्पेन द्विकर्मकता । तस्याः सीतायाः नेत्रे मिमीलतुः निमीलिते । मील निमेषणे । पुष्पकोदरे पुष्पकमध्ये मूर्च्छया लुलुठे लुठिता ॥ ज० म०

दर्शयामित्यादि । तादृशं पतिं दृष्ट्वा सीता ममानुकूला स्यात् इत्यभिप्रायं कुर्वतो राज्ञः रावणस्य शासनात् आज्ञया राक्षसाः पुष्पके आरोप्य सीतां रामं दर्शितवन्तः । धोऽञौ ञेरित्यादिना प्रयोज्यस्य कर्मत्वम् । तस्याः सीतायाः नेत्रे मिमीलतुः मुद्रणं प्रापतुः । मीलृ निमेषे । सीता पुष्पकरथमध्ये लुलुठे पतिता । लृ लुठ ङ् प्रतीघाते ॥ ५४ ॥ भ०

प्राणा इत्यादि । प्रिये रामे हते प्राणा वायवः दध्वंसिरे ध्वस्ताः, गात्रञ्च तस्तम्भे काष्ठवत् निश्चलमभूत् । ष्टभिस्तम्भि प्रतिबन्धे । चिरादुच्छश्वास उच्छ्वसितवती, असौ लब्धसंज्ञा दीना दुःखिता रुरोद रुदितवती, ररास च वक्ष्यमाणञ्च विलापं कृतवती ॥ ५५ ॥ ज० म०

प्राणा इत्यादि । प्रिये रामे हते सति तस्याः प्राणा दध्वंसिरे ध्वस्ताः ध्वन्सु लृङ् गतौ भ्रंशे । गात्रञ्च तस्तम्भे काष्ठवत् निश्चलमभूत् । स्तभिङ् स्तम्भे । चिरादुच्छश्वास श्वासं त्यक्तवती । श्वस घ लु प्राणने । ततो दीना दुःखिता रुरोद क्रन्दितवती । रुद रोदे । ररास च वक्ष्यमाणं विलापं चकार । रस शब्दे ॥ ५५ ॥ भ०

लौहैत्यादि । लोहस्येमे लौहाः तैः बन्धैः मनो हृदयं मम बबन्धे बद्धं,

मनो मे न विना रामाद् यत् पुस्फोट सहस्रधा ॥ ५६ ॥
उत्तेरिथ समुद्रं त्वं मदर्थेऽरीन् निजघ्निथ।
ममर्थ चातिघोरां मां धिग् जीवितलघूकृताम् ॥ ५७ ॥
न जिजीवासुखी तातः प्राणता रहितस्त्वया।
मृतेऽपि त्वयि जीवन्त्या किं मयानकभार्य्यया ॥ ५८ ॥

कर्मणि लिट्। नुशब्दो वितर्के, उत वज्रेण विनिर्ममे निर्मितं, माङ् मान इत्यस्मात् कर्मणि लिट्, आतो लोपस्य द्विर्वचने चेति स्थानिवद्भावात् द्विर्वचने कृतत्वे च रूपम्। यद् यस्मात् विना रामात् रामेण विना। पृथग्विनेति पञ्चमी। न पुस्फोट न स्फुटितं, सहस्रधा सङ्ख्याया विधार्थे धा ॥ ५६ ॥ ज० म०

लौहबन्धैरित्यादि। लोहविकारैः बन्धैः मे मम मनः किं बबन्धे बद्धम् अर्थात् विधात्रा। बन्धौ ग, बन्धक्, बधक्, बन्धे। नु वितर्के। किं वा वज्रेण तन्निर्मितम्। मा ल माने कर्मणि रूपद्वयम्। यस्मात् रामेण विना सहस्रप्रकारेण न स्फुटितं, स्फुटिर्विसरणे, विशब्दो रहितार्थः, अन्यारभ्येति पञ्चमी। संख्याया धाच् प्रकारे इति धाच् ॥ ५६ ॥ भ०

उत्तेरिथेत्यादि। मदर्थे मन्निमित्तं समुद्रम् उत्तेरिथ उत्तीर्णोऽसि। तॄफलेत्यादिना एत्वाभ्यासलोपौ। तथा अरीन् निजघ्निथ निहतवानसि। थलि रूपम्। यतो मदर्थे ममर्थ मरणावस्थां गतोऽसि अतोऽतिघोराम् अतिरौद्रां मां धिक्, जीवनलघूकृतां त्याजितजीवसहत्वात् ॥ ५७ ॥ ज० म०

उत्तेरिथेत्यादि। हे प्रिय! मदर्थे मत्प्रयोजननिमित्तं त्वं समुद्रं उत्तीर्णवान्, तॄ तरेऽभिभवे प्लुत्यां, तॄफलेति अत एत्वं खिलोपश्च, वृतो वेम इत्यत्र अठोद्वीपसेरित्युक्तेरिमो दीर्घाभावः। अरीन् निजघ्निथ हतवानसि। हन लौ गतौ बधे, सृजदृशचपाठात्त्वत इति पचे इम्, हनगमित्यादौ अणावित्यस्य क्वचिद्व्यभिचाराद्ङो लोपः। जिहिंसिथेति पाठे—हिसि ध कि हिंसे इत्यस्य रूपम्। ममर्थ च मृतोऽप्यसि। मृङ् मृतौ, मृङष्टोर्ध्वे ममिति नियमादन्यत्र पं, नेमृतस्थपोऽवृश्चुरित्यनेन नेमसुमित्यादिना प्राप्त इम् प्रतिषिध्यते। मदर्थ इति सर्वत्र योज्यम्। अतोऽतिघोरां स्वामिघातकत्वेन मां धिक्, जीवनेन लघूकृतां स्वामिनाशेऽपि जीवनाल्लघुत्वम् ॥ ५७ ॥ भ०

न जिजीवेत्यादि। त्वया प्राणता जीवता, अन प्राणने, रहितो वियुक्तस्तातो

सा जुगुप्सां प्रचक्रेऽसून् जगर्हे लक्षणानि च।
देहभाञ्जि ततः केशान् लुलुञ्च लुलुठे मुहुः॥ ५९॥
जग्लौ दध्यौ वितस्तान क्षणं प्राण न विव्यथे।
दैवं निनिन्द चक्रन्द देहे चातीव मन्युना॥ ६०॥

दशरथो न जिजीव न जीवितः, त्वयि मृतेऽपि जीवन्त्या मया न किञ्चित् प्रयोजनम्। अनकभार्य्यया पापानक इति सः॥ ५८॥ ज० म०

न जिजीवेत्यादि। हे प्रिय! प्राणता जीवतापि त्वया रहितः सन् वियुक्तः सन् तव तातो दुःखितो न जीवितवान्। जीव रू प्राणने। त्वयि मृतेऽपि जीवन्त्या अनकभार्य्यया कुत्सितभार्य्यया मया किं प्रयोजनम्? इत्येवं ररास चेति पूर्वेण सम्बन्धः। "कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समा" इत्यमरः॥ ५८॥ भ०

सा जुगुप्सामित्यादि। सा सीता पूर्वोक्तकारणादेव असून् प्राणान् जुगुप्सां प्रचक्रे निन्दितान् कृतवती। जुगुप्सान्त इति घञ् तदन्तस्य सनि रूपम्। आमि प्रत्यये तु प्रचक्र इत्यनुप्रयोगो न घटते। देहभाञ्जि शरीरस्थानि लक्षणानि अवैधव्यसूचकानि च जगर्हे गर्हते स्म। गर्हगल्भः कुत्सने। मुहुः केशान् लुलुञ्च अपनीतवती, तथा लुलुठे पतिता॥ ५९॥ ज० म०

सेत्यादि। सा सीता प्राणान् निनिन्द प्रियेण विना अवस्थानात्। गुपु ङ् गोपनकुत्सनयोः, कित्तिजगुप इति सन्, इणोऽभावश्च; क्रमादेतेऽवेत्यादिना अर्थनिन्दार्थनियमः, त्यान्तत्वादाम्, सोपसर्गस्य कृञोऽनुप्रयोगः। किं वा जुगुप्सामात्मनि निन्दां प्रचक्रे। शंस्याद इति अः। असून् लक्षणानि च जगर्हे इत्यनेनान्वयः। देहस्थितानि अवैधव्यचिह्नानि निन्दितवती। गर्हङ् कुत्सने। मुहुः वारंवारं केशानुत्पाटितवती। लुञ्चापनयने गतौ, तथा लुलुठे पतिता॥ ५९॥ भ०

जग्लावित्यादि। शोकभारात् जग्लौ ग्लानिङ्गता, दध्यौ ध्यातवती, पुनः किं मया द्रष्टव्योऽसीति। वितस्तान पीडया शब्दं कृतवती। स्तन शब्दे। क्षणं न प्राण मूर्च्छिता न जिजीव निःसंज्ञत्वात्। अन प्राणने। अन आदेरिति दीर्घत्वम्। विव्यथे लब्धसंज्ञा पीड़िता। व्यथो लिटीत्यभ्यासस्य सम्प्रसारणं, दैवं निनिन्द निन्दितवती, दैव! विरूपमाचरितं त्वयेति चक्रन्द रुदिता, पुनः मन्युना शोकेन देहे दग्धा। कर्मणि लिट्॥ ६०॥ ज० म०

जग्लावित्यादि। सा जग्लौ ग्लानिं प्राप। ग्लै क्षमे। दध्यौ चिन्तितवती। ध्यै

आश्वासयाञ्चकाराथ त्रिजटा तां निनाय च ।
ततः प्रजागराञ्चक्रुर्वानराः सविभीषणाः ॥ ६१ ॥
चिचेत रामस्तत् कृच्छ्रमोषाञ्चक्रे शुचाथ सः ।
मन्युश्चास्य समापिप्ये विरुराव च लक्ष्मणम् ॥ ६२ ॥

चिन्तने । वितस्तान शब्दं चक्रे । स्तन मि शब्दे । प्राणं न प्राण मूर्च्छया निःस्पन्दत्वान्न जीवितवती, अन घ् लु प्राणने । प्राग्वन्नो ण इत्यादिना पाक्षिकं णत्वम् । विव्यथे लब्धसंज्ञा सती दुःखं प्राप, व्यथ ष म ङ दुःखे चाले, व्यथग्रहेति खेर्जिः । देवं निनिन्द निन्दितवती । निदि कुत्सने । चक्रन्द रुरोद, मन्युना शोकेन अत्यर्थं देहे दग्धा । दहौ दाहे, कर्मणि रूपम् ॥ ६० ॥ भ०

आश्वासयामित्यादि । अथानन्तरं त्रिजटा रावणभगिनी तां सीताम् आश्वासयाञ्चकार आश्वासितवती । विष्णुरसौ दाशरथिः, कथमस्य विरूपं भविष्यतीति निनाय च तस्मात् पुष्पकान्नीतवती, तत उत्तरकालं वानरा विभीषणेन सह प्रजागराञ्चक्रुः आलोचनां कृतवन्तः । अवानुप्रयोगे नात्मनेपदं पूर्वस्यानात्मनेपदित्वात् ॥ ६१ ॥ ज० म०

आश्वासयामित्यादि । अथानन्तरं रावणस्य भगिनी त्रिजटा राक्षसी तां सीताम् आश्वासयाञ्चकार, तव प्रियो न मृत इति अशोकवनिकां नीतवती च । ततोऽनन्तरं विभीषणेन सह वानरा जाग्रति स्म । राघवयोः रक्षार्थमालोकयाञ्चक्रुरित्यन्ये । जागृ च जागरे । दरिद्राकाशकासजागृ ष इति पाक्षिक आम् ॥ ६१ ॥ भ०

चिचेतेत्यादि । तत् कृच्छ्रं शरबन्धदुःखं रामः चिचेत ज्ञातवान् । चिती संज्ञाने इत्युदात्तेत् । शुचा शोकेन ओषाञ्चक्रे । कर्मणि लिट् । उषविदेत्याम् । स च मन्युः शोकः अस्य रामस्य समापिप्ये वृद्धिं गतः । श्री प्यायी वृद्धौ, तस्य लिटि प्यायः पीति पीभावः, एरनेकाच इति यण् । लक्ष्मणञ्च विरुराव शब्दितवान् । वत्स ! जीवसि इति ॥ ६२ ॥ ज० म०

चिचेतेत्यादि । रामः तत् कृच्छ्रं नागपाशबन्धनरूपं चिचेत ज्ञातवान् । चिती संज्ञाने । अथानन्तरं शुचा शोकेन स रामः ओषाञ्चक्रे दग्धः । उषु दाहे । दरिद्राकाशकासेत्याम् । अस्य रामस्य मन्युः शोकः समापिप्ये संवृद्धः । श्री प्यायी ङ् वृद्धौ प्यायः पीयङ्ङ्योः । लक्ष्मणञ्च विरुराव आहूतवान् । रु ल ध्वनौ ॥ ६२ ॥ भ०

समीहे मर्त्तुमानर्च्चे तेन वाचाखिलं बलम्।
आपप्रच्छे च सुग्रीवं स्वं देशं विससर्ज च॥ ६३॥
आदिदेश स किष्किन्ध्यां राघवौ नेतुमङ्गदम्।
प्रतिजज्ञे स्वयञ्चैव सुग्रीवो रक्षसां बधम्॥ ६४॥
नागास्त्रमिदमेतस्य विपक्षस्तार्क्ष्यसंस्मृतिः।

समीह इत्यादि। मर्त्तुं प्राणांस्त्यक्तुं समीहे इच्छति स्म। तेन रामेण अखिलं समस्तं बलं वाचा आनर्च्च पूजितं, भवद्भिः साध्वनुष्ठितम् अस्मद्भाग्यमेवापराध्यति इति। कर्मणि लिट्, तस्मान्नुट्द्विहल इति नुट्। सुग्रीवश्च आपप्रच्छे आपृच्छति स्म, आमन्त्रितवानित्यर्थः। एहि तावत् दर्शनं मे देहि परिष्वजस्वेति। आङि नुप्रच्छोरुप-संख्यानमिति तङ्। स्वञ्च देशं किष्किन्ध्यां विससर्ज प्रहितवान्॥ ६३॥ ज० म०

समीहे इत्यादि। तेन रामेण मर्त्तुं समीहे समीहितम्। ईहङ् चेष्टे भावे रूपं, कर्त्तरि इत्यन्ये, गुर्विजादेरामोऽनित्यत्वं ये वदन्ति तन्मते रूपमिदं, समीहे ईडिषे समीहिरे इत्यादयश्चिन्त्या इति केचित्, ऋषिवचनादिति केचित्। न्यासकृदादयोऽपि गुर्विजादेरामोऽनित्यत्वमाहुः। समीषे इति पाठे इषु श वाञ्छे। तेन रामेण वाचा बलम् आनर्चे पूजितं, मत्कृते भवद्भिः किं न कृतं? मद्भाग्यात् तु सर्वं निष्फलमभूदिति। अर्चक् पूजे अर्चचेति चकारात् पूजे, स्यान्तादादीति खेरान् कर्मणि रूपम्। रामः सुग्रीवम् आपप्रच्छे आमन्त्रितवान्। एहि मित्र! मां परिष्वजस्वेति प्रच्छौ श ज्ञीप्से, विपराजीति मं, ठ्यां न वेप्रच्छामिति जिनिषेधः। स्वदेशं किष्किन्ध्यां विससर्ज सुग्रीवं प्रस्थापयितुमारेभे इत्यर्थः। सृजौ श विसर्गे॥ ६३॥ भ०

आदिदेशेत्यादि। सुग्रीवो राघवौ किष्किन्ध्यां नेतुम् अङ्गदम् आदिदेश, स्वयं च रक्षसां विनाशं प्रतिजज्ञे, अहमेव व्यापादयामि इति। सम्प्रतिभ्यामिति तङ्, सकर्मकार्थं वचनम्॥ ६४॥ ज० म०

आदिदेशेत्यादि। स सुग्रीवो राघवौ किष्किन्ध्यां नेतुम् अङ्गदम् आदिदेश उक्तवान्, दिश ङ् शौचे चकाराद्दाने वर्त्तते, आङ्पूर्वः कथनार्थः, मनोरमाकृत् तु दिश अतिसर्जने इति पठित्वा व्याचष्टे—अतिसर्जनं दानं विज्ञानं कथनं वेति। स्वयञ्च रक्षसां बधं प्रतिज्ञातवान्। ज्ञा अवबोधने सम्प्रतः अस्मृताविति मम्॥ ६४॥ भ०

नागास्त्रमित्यादि। नागास्त्रमिदं न शराः एतस्य च विपक्षः प्रतिपक्षः तार्क्ष्यसंस्मृतिः

विभीषणादिति श्रुत्वा तं निदध्यौ रघूत्तमः ॥ ६५ ॥
ततो विजघटे शैलैरुद्वेलं पुप्लुवेऽम्बुधिः।
वृक्षेभ्यश्चुच्युते पुष्पैर्विरेजुर्भासुरा दिशः ॥ ६६ ॥
जगाहिरेऽम्बुधिं नागा ववौ वायुर्मनोरमः।
तेजांसि शंशमाञ्चक्रुः शरबन्धा विशिश्लिषुः ॥ ६७ ॥

गरुड़संस्मरणं, यत्संस्मरणादेवास्य शान्तिरिति, एवं विभीषणात् श्रुत्वा राघवस्तार्क्ष्यं निदध्यौ ध्यातवान् ॥ ६५ ॥ ज० म०

नागास्त्रमित्यादि। इदं नागास्त्रम् एतस्य नागास्त्रस्य शत्रुः गरुड़स्मरणम् इति विभीषणात् श्रुत्वा राघवस्तं गरुड़ं निदध्यौ चिन्तितवान् ॥ ६५ ॥ भ०

तत इत्यादि। ततो ध्यानानन्तरं तदागमनवायुवेगात् शैलैः विजघटे विघटितं, भावे लिट्। अम्बुधिः उद्वेलं वेलामतिक्रम्य पुप्लुवे गतः, वृक्षेभ्यः सकाशात् पुष्पैः चुच्युते च्युतं, दिशश्च भासुराः सुवर्णपक्षप्रभाभिर्भासनशीलाः सत्यो विरेजुः शोभन्ते स्म, फणाञ्च सप्तानामित्यत्वपक्षे रूपं, तत्र वेत्यनुवर्त्तते ॥ ६६ ॥ ज० म०

तत इत्यादि। ततो ध्यानानन्तरं तत्पक्षवायुवेगात् शैलैः विजघटे विघटितं, घटि ष ङ् म चेष्टे, विपूर्वो विश्लेषमाह, भावे रूपम्। अम्बुधिः समुद्रो वेलामतिक्रम्य पुप्लुवे गतः, प्लुङ् च सर्पणे। वृक्षेभ्यः पुष्पैः चुच्युते स्खलितं, च्युत च्युतिर क्षरे। भावे रूपम्। स्वर्णपक्षप्रभाभिर्भासनशीला दिशो विरेजुः राजन्ते स्म। राजृ ञ श दीप्तौ। तृफलेति पक्षे एत्वाभावः ॥ ६६ ॥ भ०

जगाहिरे इत्यादि। नागा भयात् अम्बुधिं जगाहिरे प्रविष्टाः, वायुः तत्प्रभवो ववौ वाति स्म। तेजांसि रक्षादीनां शंशमाञ्चक्रुः अत्यर्थं प्रशान्तानि शमेर्यङ्लुगन्तस्य रूपम्। एवञ्च कृत्वा अनुप्रयोगे परस्मैपदम्। शरबन्धा विशिश्लिषुः विश्लिष्टाः, दूरत एव तत्प्रभावात् ॥ ६७ ॥ ज० म०

जगाहिर इत्यादि। नागा भयात् अम्बुधिं जगाहिरे प्रविष्टाः, गाहू विलोडे। मनोरमो वायुस्तत्पक्षभवः शुभसूचकः स्वाभाविको वा, वाति स्म। वा ल गमनहिंसयोः। रक्षादीनां तेजांसि तत्तेजसा भृशं शान्तानि, शमु श्र इर्ष्ये, मूत्रसूत्रेति यङ् यङोऽलुक् द्वित्वं अमजपेति स्वेर्नुक् स्यान्तत्वादाम्। शमयाञ्चक्रुरिति पाठे—गरुड़स्य तेजांसि नागान् निवारयन्ति स्म इत्यर्थः। शराणां बन्धा विश्लिष्टाः तत्प्रभावात् ॥ ६७ ॥ भ०

भेजिरेऽचतवद्योधा लेभे संज्ञाञ्च लक्ष्मणः।
विभीषणोऽपि बभ्राजे गरुत्मान् प्राप चान्तिकम्॥ ६८॥
संपस्पर्शाथ काकुत्स्थौ जज्ञाते तौ गतव्यथौ।
तयोरात्मानमाचख्यौ ययौ चाथ यथागतम्॥ ६९॥

भेजिरे इत्यादि। अचतवत् अचता इव योधा भेजिरे दीप्यन्ते स्म, फणाञ्च सप्तानामित्येत्वपचे रूपम्। संज्ञां चेतनां लक्ष्मणो लेभे प्राप्तवान्, विभीषणोऽपि बभ्राजे सम्पन्ना मे मनोरथा इति। अनेत्वपचे रूपम्। अन्तिकञ्च रामलक्ष्मणयोः गरुत्मान् प्राप, गरुतः पचिणस्तेऽनुजीवितयास्य सन्तीति मतुप्, यवादेराकृतिगणत्वात् मय इति वत्वं न भवति॥ ६८॥ ज० म०

भेजिरे इत्यादि। योधा अचता इव भेजिरे शोभन्ते स्म। भाजृ ञ ण टु च चकाराद्रासि तृफलेत्यादिना पाचिकमेत्वं खिलोपश्च। लक्ष्मणश्च संज्ञां चेतनां लब्धवान्। लभ डुोङ् ष प्राप्तौ। विभीषणोऽपि बभ्राजे समीहितं मे सम्पन्नमिति, एत्वाभावपचे रूपम्। गरुत्मान् गरुड़ो राघवस्यान्तिकं समीपं प्राप, गरुतः पचिणोऽनुजीविनः प्रशस्ता वा पचाः सन्त्यस्येति गरुत्मान्। क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् मोङ्मोऽज्भपादतुरित्यस्य विषयेऽपि मतुरस्यर्थ इत्यस्याभिनिवेशः वसोर्वः सेमप्युर्मतुप्योरिति ज्ञापकात् मोङ्मोऽज्भपादतुरित्यस्य क्वचिद्व्यभिचार इति देवीदासचक्रवर्त्तिनोक्तम्। यवादिभ्यो मतुरिति परः। नदन्तसाविति पदत्वनिषेधात् न नत्वम्॥ ६८॥ भ०

संपस्पर्शेत्यादि। अनन्तरं गरुत्मान् काकुत्स्थौ राघवौ संपस्पर्श स्पृष्टवान्, तौ च स्पृष्टौ गतव्यथौ जज्ञाते जातौ, तयोः काकुत्स्थयोः आत्मानमाचख्यौ गरुत्मानहमिति कथितवान्। वा लिटीति चचिङः ख्याङ्। ययौ चापि यथागतं तथा गतवान्॥ ६९॥ ज० म०

संपस्पर्शेत्यादि। अथानन्तरं स गरुत्मान् काकुत्स्थौ संपस्पर्श, स्पृश शौ स्पृशि। तौ च स्पृष्टौ गतव्यथौ जज्ञाते जातौ, जनी य्य ङ् जनने, हनगमित्युङ्लोपः स्तुश्चुभिः-श्चुशादिति नस्य ञः। तयोः काकुत्स्थयोः स्थाने आत्मानम् आचख्यौ कथितवान् अहं गरुड़ इति। ख्या ल गतौ, चचिङः ख्याआदेशो वा। यथागतं तथा ययौ गतः॥ ६९॥ भ०

स्वेनुस्तित्विषुरुद्येमुरुच्चखनुः पर्वतांस्तरून् ।
वानरा दद्रमुश्चाथ संग्रामं चाशशंसिरे ॥ ७० ॥
डुढौकिरे पुनर्लङ्कां बुबुधे तान्दशाननः ।
जीवतश्च विवेदारीन् बभ्रंशेऽसौ धृतेस्ततः ॥ ७१ ॥
सस्रंसे शरबन्धेन दिव्येनेति वुवुन्द सः ।
बभाजाथ परं मोहमूहाञ्चक्रे जयं न च ॥ ७२ ॥

स्वेनुरित्यादि । अथानन्तरं वानराः हृष्टाः स्वेनुः शब्दितवन्तः, तित्विषुः शोभिताः, त्विष दीप दीप्तौ । उद्येमुः उद्योगं चक्रुः, पर्वतान् उच्चखनुः उत्खनितवन्तः । दद्रमुः इतस्ततो भ्रान्ताः । द्रम हम्म मीमृ गतौ । संग्रामञ्च आशशंसिरे अभीष्टवन्तः । आङः शसि इच्छायाम् आदादिकोऽनुदात्तेत् ॥ ७० ॥ ज० म०

स्वेनुरित्यादि । अथानन्तरं वानराः स्वेनुर्जयशब्दं चक्रुः । स्वन ण चेति चकारात् शब्दे, तॄ-फलेति पचे एत्वम् । तित्विषुः दीप्यन्ते स्म, त्विषौ ञ् भासे । उद्येमुः उद्यमं चक्रुः । यमौङ् विरतौ । पर्वतान् तरूंश्च उच्चखनुः । खनु ञ् विदारणे । हमगमित्युङ् लोपः । दद्रमुः शत्रून् प्रतिजग्मुः । द्रमु गतौ । संग्रामञ्च आशशंसिरे इच्छन्ति स्म । शन्सु हिंसास्तुत्योः आङ्पूर्वं इच्छामाह यदुक्तम् ।—"आशंसतिः स्यादिच्छायां शंसतीति स्तुतौ पदम्" इति ॥ ७० ॥ भ०

डुढौकिर इत्यादि । पुनर्भूयो लङ्कां डुढौकिरे जग्मुः, तान् वानरान् ढौकितान् दशाननो बुबुधे बुद्धवान्, जीवतश्च अरीन् रामादीन् विवेद ज्ञातवान् । अन्यथा कथं वानरा ढौकिता इति, ततश्च धृतेः सकाशात् बभ्रंशे भ्रष्टः ॥ ७१ ॥ ज० म०

डुढौकिरे इत्यादि । वानराः पुनर्लङ्कां डुढौकिरे जग्मुः । ढौक त्रौक विकि ङ् गत्यां खेरोकारस्य ह्रस्व उकारः । दशाननः तान् बुबुधे ज्ञातवान् । बुध्यौङ् वेदने । अरींश्च रामादीन् जीवतो विवेद जानाति स्म । विद ल मतौ ङाम्वाव्यामित्यस्याभावपक्षे रूपम् । ततः धृतेः सकाशात् असौ भ्रष्टः, लृ भ्रंश चेति चकारादधःपाते ॥ ७१ ॥ भ०

सस्रंस इत्यादि । दिव्येन शरबन्धेन सस्रंसे स्रस्तं, भावे लिट् । इत्येवं दशाननो वुवुन्द श्रुतवान् । वुदि निशामने । अथानन्तरं परं मोहं महामूर्च्छां बभाज सेवते स्म । न च जयम् ऊहाञ्चक्रे तिविर्कतवान् ॥ ७२ ॥ ज० म०

सस्रंसे इत्यादि । दिव्येन शरबन्धेन सस्रंसे स्रस्तमिति स दशाननो वुवुन्द

धूम्राक्षोऽथ प्रतिष्ठासाञ्चक्रे रावणसम्मतः।
सिंहास्यैर्युयुजे तस्य वृकास्यैश्च रथः खगैः॥ ७३॥
त्वक्त्रैः संविव्ययुर्देहान् वाहनान्यधिशिश्यिरे।
आनर्जुर्नृभुजोऽस्त्राणि वव्रजुश्चाहवक्षितिम्॥ ७४॥

---

श्रुतवान्। लृ स्रन्सु ङ् भ्रंशे वृन्दिस्रूल निशामने। अथानन्तरं परं मोहं मूर्च्छां बभाज। भज औ भागसेवयोः। स्वकीयञ्च जयं न ऊहाञ्चक्रे। ऊह ङ् वितर्के विंजादीत्याम्॥ ७२॥ भ०

धूम्राक्ष इत्यादि। अथ धूम्राक्षो रावणसम्मतो रावणेनानुज्ञातः सन्, भूते निष्ठाव द्रष्टव्या। प्रतिष्ठासाञ्चक्रे गन्तुमिच्छां कृतवान्। प्रपूर्वात्तिष्ठतेः समवप्रविभ्यः स्थ इति तङ्, सनन्तादपि पूर्ववत् सन इति तङ्, उपसर्गादित्यादिना षत्वम्। तस्य च गन्तुमिच्छतो रथः खगैः आकाशगामिभिर्यानैः सिंहमुखैः वृकमुखैश्च युयुजे युक्तः। कर्म्मणि लिट्॥ ७३॥ ज० म०

धूम्राक्ष इत्यादि। अथानन्तरं धूम्राक्षो राक्षसो रावणेन सम्मतोऽनुज्ञातः सन् प्रस्थातुमिच्छाञ्चक्रे। प्रतिज्ञानिर्णयेत्यादिना प्रपूर्वस्थाधातोर्मे, क्विलादिति षत्वं, सनः षत्वाभावात् जिघ्लोः खिः सः ष इति न नियमः, त्यान्तत्वादाम्। तस्य रथः सिंहमुखैः वृकमुखैश्च खगैः आकाशगामिभिः युयुजे युक्तः। युजिर्धौ ञ च युतौ कर्म्मणि रूपम्। "कोक ईहामृगो वृक." इत्यमरः॥ ७३॥ भ०

त्वक्त्रैरित्यादि। धूम्राक्षसम्बन्धिनो नृभुजो राक्षसाः त्वक्त्रैः सन्नाहैः त्वचं त्रायन्त इति, देहान् संविव्ययुः छादितवन्तः। व्येञ् संवरण इत्यस्य न व्यो लिटीत्यात्वप्रतिषेधः, लिट्यभ्यासस्योभयेषामिति सम्प्रसारणम्। वाहनान्यधिशिश्यिरे आरूढवन्तः। एरनेकाचो यण्, अधिशीङिति कर्म्मसंज्ञा। अस्त्राणि आनर्जुः गृहीतवन्तः। अर्ज प्रतियत्ने अत आदेरिति दीर्घः, तस्मान्नुड्द्विहलः आनर्चुरिति पाठान्तरं पूजितवन्तः। आहव-क्षितिञ्च रणभूमिं वव्रजुः गताः। व्रज गतौ॥ ७४॥ ज० म०

त्वक्त्रैरित्यादि। नृभुजो राक्षसा धूम्राक्षसम्बन्धिनः त्वक्त्रैः सन्नाहैः देहान् संविव्ययुः आच्छादितवन्तः। व्ये ञ् वृतौ व्यथयश्चेति खेर्जिः जिं वान्यः क्वितीति पक्षे जेरभावः, मा व्ये ह्वामिति आनिषेधः, तेन एचोऽशित्या इत्यस्य न प्रवृत्तिः, यत्नाय-वायाव इत्ययादेशः। त्वचं त्रायत इति ह्म-अनादिति डः। एचोऽशित्या इत्यत्र अशि-तीति विषयसप्तमी तेनादन्तत्वात्। वाहनानि अश्वादीनि अधिशिश्यिरे आरूढवन्तः।

अध्युवास रथं तेये पुराच्चुक्षाव चाशुभम् ।
संश्रावयाञ्चकाराख्यां धूम्राक्षस्तत्वरे तथा ॥ ७५ ॥
निलिल्ये मूर्ध्नि गृध्रोऽस्य क्रूरा ध्वाङ्क्षा ववाशिरे ।
शिशीके शोणितं व्योम चचाल क्ष्मातलं तथा ॥ ७६ ॥
ततः प्रजघटे युद्धं शस्त्राण्यासुः परस्परम् ।

शी ङ ल जि स्वप्ने, अधिपूर्वं आरोहणेऽपि शुध्वोरित्यादिना यत्वं, कर्म्मक्रियेत्यादिना क्रियाव्याप्यत्वेन ढत्वे द्वितीया, आरोहणार्थस्य सकर्म्मकत्वात् शीशीऽधिशतेऽहिमित्यादौ आरोहणार्थे तात्पर्य्याभावादाधारस्य कर्म्मत्वम् । अस्त्राणि आनर्जुः जगृहुः । अर्ज अर्जने स्यान्तादादौति खेरान्, आनर्चुरिति पाठे अर्चधातौ रूपम् । आहवक्षितिं रणभूमिं ववञ्चुः गतवन्तः । वञ्चु गत्याम् ॥ ७४ ॥ भ०

अध्युवासेत्यादि । धूम्राक्षो रथम् अध्युवास आरूढः । उपान्वध्याङ्वस इति कर्मसंज्ञा । पुरात् लङ्कातः तेये निष्क्रान्तः । अय-पय-तयेत्यादिषु तयिरनुदात्तेत् । चुक्षाव च शब्दं कृतवान्, अशुभं भयानकं, क्षु शब्दे । आख्याम् आत्मीयं नाम संश्रावयाञ्चकार श्रावितवान्, तथा तत्वरे त्वरते स्म युद्धाय ॥ ७५ ॥ ज० म०

अध्युवासेत्यादि । धूम्राक्षो रथम् अध्युवास आरूढः, वसौ ऐ निवासे, व्यथयङ्गति खेर्जिः, कर्म्मक्रियेत्यादिना आधारस्य कर्म्मत्वम् । पुरात् लङ्कायाः तेये गतः । तयङ्गति-रक्षयोः, तृ-फलेत्यादिना एत्वं खिलोपश्च । अशुभम् अशोभनं चुक्षाव क्षुतं, क्षु ल टु क्षुते । आख्यां स्वनाम श्रावितवान् वानरान् इत्यर्थात् । श्रु ल गतौ श्रुतौ ञिः त्यान्तत्वादाम् । तथा युद्धाय त्वरां चक्रे । ञि त्वर्षमङ् स्यदे ॥ ७५ ॥ भ०

निलिल्य इत्यादि । अस्य धूम्राक्षस्य गच्छतो मूर्ध्नि गृध्रो निलिल्ये निलीनः । एरनेकाचो यण् । ध्वाङ्क्षाः क्रूराः अशुभशंसिनः ववाशिरे वाशन्ते स्म । व्योम कर्तृ शोणितं शिशीके क्षरितवत् । शीकृ सेचने इत्यनुदात्तेत् । तथा क्ष्मातलं पृथ्वीतलं चचाल चलितम् ॥ ७६ ॥ ज० म०

निलिल्ये इत्यादि । अस्य धूम्राक्षस्य गच्छतो मूर्ध्नि गृध्रो निलीनः । ली ञ य श्री श्लिषि शुध्वोरिति यत्वम् । क्रूरा अशुभशंसिनो ध्वाङ्क्षाः काका ववाशिरे वाश ञ् ङपि अपि शब्दात् शब्दे । व्योम आकाशं कर्तृ, शोणितं शिशीके ववर्ष । शीकृ ङ सेके । क्ष्मातलं तथा चचाल चलति स्म । चल गतौ ॥ ७६ ॥ भ०

तत इत्यादि । ततो निमित्तादनन्तरं युद्धं प्रजघटे घटितं, ते हरिराक्षसाः

वव्रश्चुराजुघूर्णुश्च स्येमुश्चुकूर्दिरे तथा ॥ ७७ ॥

रुरुजुर्भेजिरे फेणुर्बहुधा हरिराक्षसाः।
वीरा न बिभयाञ्चक्रुर्भीषयाञ्चक्रिरे परान् ॥ ७८ ॥

रक्तं प्रचुश्चुतुः क्षुण्णा शिश्वियुर्बाणविक्षताः।
अस्यतां शुशुवुर्बाणान् भुजाः साङ्गुष्ठमुष्टयः ॥ ७९ ॥

वक्ष्यमाणाः शस्त्राणि आसुः क्षिप्तवन्तः, परस्परं वव्रश्चुः छिन्नवन्तः, आजुघूर्णुः चक्रवद् भ्रान्ताः। घूर्णतिरनुदात्तेत्। स्येमुः शब्दं कृतवन्तः। स्यमेः फणादित्वादेत्वम्। चुकूर्दिरे क्रीड़ितवन्तः ॥ ७७ ॥ ज० म०

तत इत्यादि। अनन्तरं युद्धं प्रजघटे प्रवृत्तं, घट ष ङ् म चेष्टे। परस्परं शस्त्राणि आसुः चिक्षिपुः, हरिराक्षसा इत्यग्रिमश्लोकेनान्वयः। असु क्षेपे। परस्परं वव्रश्चुः। ओ व्रश्चू छेदे ठ्यां न वेप्रच्छामिति जिनिषेधः। आजुघूर्णुः चक्रवद् भ्रमन्ति स्म। घूर्ण-श्च भ्रमणे। जुघूर्णिरे च वव्रश्चुरिति क्वचित्पाठः। स्येमुः शब्दं चक्रुः, स्यमु ण श ध्वनने, णित्वात् फणादिः, तॄफलेत्यादिना पाक्षिकमेत्वं खिलोपश्च। चुकूर्दिरे क्रीड़ितवन्तः। कूर्द ङ क्रीड़ायाम् ॥ ७७ ॥ भ०

रुरुजुरित्यादि। रुरुजुः भग्नवन्तः, भेजिरे शोभिताः, बहुधा बहुप्रकारं फेणुः गताः। फण गतौ। वीराः सात्विका न बिभयाञ्चक्रुः न बिभ्यति स्म। भी क्री भृ हुवां श्लुव-च्चेत्यां बिभेतेः परस्मैपदित्वात् अनुप्रयोगे परस्मैपदम्। परान् शत्रून् शौर्य्यगुणयुक्ताः प्रयोजकाः भीषयाञ्चक्रिरे भीषयन्ते स्म। अत्र भी-स्मोर्हेतुभय इति तङ्, अनुप्रयोगे-ऽपि ॥ ७८ ॥ ज० म०

रुरुजुरित्यादि। हरयो वानरा राक्षसाश्च परस्परं रुरुजुः भग्नवन्तः। रुजो शौ भङ्गे। भेजिरे शुशुभिरे। भाजृ ङ् ण टु चेति चकाराद्भासि, तॄ-फलेति पाक्षिकमेत्वं खिलोपश्च। बहुभिः प्रकारैः फेणुः। फण मिण गतौ। वीराः शत्रून् बिभयाञ्चक्रुः बिभ्यति स्म। ञि भी लि भीत्यां पक्षे वा भी-क्रीति पाक्षिकः पक्षाम् लीत्वात् ह्रादीरेद्धिः णुर्घूङ इति गुणः। परान् शत्रून् भीषयन्ते स्म। भीर्भीष् वेति भीषादेशो मन्व त्यान्तत्वादाम् ॥ ७८ ॥ भ०

रक्तमित्यादि। केचित् क्षुण्णाः खण्डिताः सन्तो रक्तं प्रचुश्चुतुः प्रक्षरिताः, केचित् शिश्वियुः विभाषा श्वेरित्यसम्प्रसारणपक्षे रूपम्। बाणान् अस्यतां क्षिप्यतां योधानां

रणे चिक्रीड धूम्राक्षस्तं ततर्जानिलात्मजः ।
आददे च शिलां साश्वं पिपेषास्य रथं तया ॥ ८० ॥
पपात राक्षसो भूमौ रराट च भयङ्करम् ।
तुतोद गदया चारिं तं दुध्रावाऽद्रिणा कपिः ॥ ८१ ॥
अकम्पनस्ततो योद्धुं चकमे रावणाज्ञया ।
स रथेनाभिदुद्राव जुघुरे चातिभैरवम् ॥ ८२ ॥

भुजाः साङ्गुष्ठमुष्टयः अङ्गुष्ठमुष्टिसहिताः शरविक्षताः शरभिन्नाः शश्वुः गताः । श्वि गत्यर्थे द्रष्टव्यं सम्प्रसारणपक्षे रूपम् ॥ ७९ ॥ ज० म०

रक्तमित्यादि । केचित् क्षुणाः खण्डिताः सन्तो रक्तं चरन्ति स्म । क्षुतिर चूर्णे । केचित् विक्षिप्ताः सन्तः शिश्वियुः शोथयुक्ता बभूवुः । टुश्वि गतिवृद्ध्योः । बाणान् अस्यतां क्षिप्यतां योधानां अङ्गुष्ठमुष्टिना सहिता भुजाः शरविक्षताः सन्तः शश्वुः गताः पतिता इत्यर्थः । श्वेर्जिर्वा यङ्‌ल्योरिति पाक्षिको जिः ॥ ७९ ॥ भ०

रण इत्यादि । धूम्राक्षो रणे चिक्रीड़ क्रीड़ति स्म । तम् अनिलात्मजो हनूमान् ततर्ज भर्त्सितवान्, शिलाम् आददे च गृहीतवान्, तया शिलया अस्य धूम्राक्षस्य साश्वं रथं पिपेष चूर्णितवान् ॥ ८० ॥ ज० म०

रण इत्यादि । धूम्राक्षो रणे क्रीड़ितवान् । क्रीड़ृ खेले । अनिलात्मजो हनूमान् तं धूम्राक्षं ततर्ज । तर्ज भर्त्से । शिलाम् आददे जग्राह च । आङ्‌पूर्वो दाञ ग्रहणे । तया शिलया अस्य धूम्राक्षस्य अश्वेन सहितं रथं पिपेष । धौ पिष् ऌ चूर्णने ॥ ८० ॥ भ०

पपातेत्यादि । राक्षसो धूम्राक्षो भूमौ पपात, पतितः सन् भयङ्करं रराट रटितवान् । ततोऽरिं हनूमन्तं गदया तुतोद आहतवान्, तं राक्षसं स कपिः अद्रिणा दुध्राव व्यापादितवान् ॥ ८१ ॥ ज० म०

पपातेत्यादि । धूम्राक्षो राक्षसो भूमौ पपात । पत ऌ ज गत्याञ्च । रराट शब्दं चक्रे । रट वाचि । ततः उत्थितः सन् गदया च अरिं हनूमन्तं तुतोद पीड़ितवान् । तुद श औ व्यथे । कपिः हनूमान् पर्वतेन तं राक्षसं दुध्राव मारितवान् । ध्रु श्रि कम्पे । अनेकार्थत्वात् हिंसायामपि । जघानेति क्वचित्पाठः दुद्रावेति च क्वचित् ॥ ८१ ॥ भ०

अकम्पन इत्यादि । ततो धूम्राक्षविनाशानन्तरम् अकम्पनो राक्षसः रावणाज्ञया युध्यस्वेति युद्धं चकमे इष्टवान् । आयादय आर्द्धधातुके वेति णिङभावपक्षे रूपम् ।

पस्पन्दे तस्य वामाक्षि सस्वनुश्चाशिवाः खगाः।
तान् वव्राजावमत्यासौ बभासे च रणे शरैः॥ ८३॥
खमूयुर्वसुधामूवुः सायका रज्जुवत्तताः।
तस्माद् बलैरपत्रेपे पुप्रोथास्मै न कश्चन॥ ८४॥

सोऽकम्पनः रथेन अभिदुद्राव अभिमुखं गतः, जुघुरे च शब्दं कृतवान्, अतिभैरवम् अतिभयानकम्। घुर भीमार्थशब्दयोरित्यनुदात्तेत्॥ ८२॥ ज० म०

अकम्पन इत्यादि। ततोऽनन्तरम् अकम्पनो राक्षसो रावणस्य आज्ञया योद्धुं चकमे इष्टवान्। कमु क ङ् स्पृहि वारे इत्यनेन णिङोऽभावपक्षे रूपम्। सोऽकम्पनो रथेन अभिदुद्राव अभिमुखं गतः। द्रु स्रु ती गतौ। अतिभैरवम् अतिभयङ्करं जुघुरे शब्दं चकार। घुर्षङो हिंसाज्यान्योः अनेकार्थत्वात् शब्देऽपि, घुर श ध्वनौ भीमार्थ इत्यस्य भावे रूपं वा। तेनेति विभक्तिव्यत्ययेन सम्बन्धः, क्वचित् परस्मैपदिनोऽपि आत्मनेपदित्वात् कर्त्तरि रूपं वा शब्दार्थघुरधातुरपि आत्मनेपदी इति जयमङ्गला जुघोरेति केचित् पठन्ति॥ ८२॥ भ०

पस्पन्द इत्यादि। तस्य अकम्पनस्य अनिमित्तत्वसूचकं वामाक्षि पस्पन्दे स्पन्दितम्, अशुभाश्च अशिवसूचकाः खगाः सस्वनुः शब्दं कृतवन्तः। अनेत्वपक्षे रूपम्। तान् खगान् अवमत्य अवज्ञाय असौ वव्राज गतः। रणे शरैश्च बभासे शोभितम्॥ ८३॥ ज० म०

पस्पन्द इत्यादि। अकुशलमुच्यते। तस्य अकम्पनस्य वामं चक्षुः स्पन्दते स्म। स्पदि ङ् ईषत्कम्पे। अशुभसूचकाः खगाः पक्षिणः सस्वनुः शब्दं चक्रुः। स्वनु ण श ध्वनने, तॄ-फलेत्यादेरप्रवृत्तिपक्षे रूपम्। असौ अकम्पनः तान् खगान् अवमत्य अवज्ञाय वव्राज। व्रज गतौ। रणे शरैश्च बभासे। भासृङ् दीप्तौ॥ ८३॥ भ०

खमित्यादि। तेन सायका रज्जुवत्तया विस्तृताः सन्तः खम् आकाशम् ऊयुः आवृतवन्तः, वसुधाञ्च ऊवुः छादितवन्तः। वेञ् तन्तुसन्ताने तस्य लिटि वयिरादेशः, वश्चास्यान्यतरस्यामिति यकारस्य वकारादेशः। तस्मादिति तम् अकम्पनं वीक्ष्य। ल्यब्लोपे पञ्चमी। त्रेपे लज्जितं, भावे लिट्। तॄ-फलेत्यादिना एत्वाभ्यासलोपौ। अस्मै अकम्पनाय न कश्चित् पुप्रोथ न प्रभवति स्म। प्रोथ-पर्य्याप्ताविति स्वरितेत्, अत्र कर्त्तुः क्रियाफलायोगान्नात्मनेपदं, नमःस्वस्तीत्यत्र अलंशब्दस्य पर्य्याप्तार्थग्रहणात् तदर्थयोगे चतुर्थी॥ ८४॥ ज० म०

स भस्मसाच्चकारारीन् दुदाव च कृतान्तवत् ।
चुक्रोध मारुतिस्तालमुच्चखान च महाशिखम् ॥ ८५ ॥
यमायाकम्पनं तेन निरुवाप महापशुम् ।
बभञ्ज निहते तस्मिन् शोको रावणमग्निवत् ॥ ८६ ॥

खमूयुरित्यादि । तेन रज्जुवत्तता विस्तृताः सायकाः खम् आकाशम् ऊयुः वसुधाञ्च ऊवुः आहतवन्तः । ऐ ङ् वे सूतौ, वेञो वय वेति पाक्षिको वयादेशः, व्यथग्रहेत्यादौ वयग्रहणात् ञ्यां न वेप्रच्छामित्यस्याप्रवृत्तिः, तेन व्यथ-ग्रहेत्यादिना खेर्जिः ग्रह-स्वपाद्योरिति प्रकृतेर्जिः, यवः कितीत्यस्य पक्षद्वये रूपम् । तस्मात् अकम्पनं वीक्ष्य वानरसैन्यैः अपत्रेपे लज्जितं, त्रपू षमिङ् क्रियि, तृफलेत्यादिना एत्वं खिलोपश्च, भावे रूपं, तस्मादिति अन्यारभ्येत्यादिना यबर्थे पञ्चमी । अस्मै अकम्पनाय कश्चन वीरो न पुप्रोथ न समर्थः । प्रोथृञ् पर्य्याप्तौ खेरीकारस्य ह्रस्व उकारः, शक्तार्थेत्यादिना चतुर्थी ॥ ८४ ॥ भ०

स भस्मसादित्यादि । सोऽकम्पनः अरीन् भस्मसाच्चकार कात्स्न्येन भस्मभूतान् कृतवान् । कृतान्तवत् यम इव दुदाव सुष्ठु पीड़ितवान् । टु दु उपतापे । तं दृष्ट्वा मारुतिः चुक्रोध क्रुद्धः, तालञ्च वृक्षं महाशिखम् अत्युच्छ्रायम् उच्चखने उत्खातवान् । अत्र क्रियाफलयोगात् तङ् ॥ ८५ ॥ ज० म०

स भस्मसादित्यादि । सोऽकम्पनोऽरीन् कात्स्न्येन भस्मीभूतांश्चकार कात्स्न्यायस्योरित्यादिना षसात् । कृतान्तवत् यम इव दुदाव पीड़ितवान् । टुो न दु उपतापे । तं दृष्ट्वा मारुतिः हनूमान् चुक्रोध क्रुद्धः । क्रुध ल यौ कोपे । महाशिखम् अतिदीर्घं तालवृक्षञ्च उत्खातवान् । खनु ञ् विदारणे । हन-गमित्युङ्लोपः ॥ ८५ ॥ भ०

यमायेत्यादि । तेन तालेन स च अकम्पनं महापशुमिव यमाय निरुवाप दत्तवान् । निष्पूर्वो वपिर्दाने वर्त्तते, तत्र धातोर्यजादित्वात् सम्प्रसारणं न भवति, अकित्वात् अभ्यासस्य लिटि भवत्येव । तस्मिन्निहते शोकोऽग्निरिव रावणं बभञ्ज दग्धवान् ॥ ८६ ॥ ज० म०

यमायेत्यादि । तेन तालवृक्षेण हनूमान् अकम्पनं महापशुमिव यमाय निरुवाप दत्तवान् । वपी ञ् डु मुण्डतन्तुवीजोप्तौः निष्पूर्वो दाने वर्त्तते, व्यथ-ग्रहेति खेर्जिः । तस्मिन् अकम्पने निहते सति शोकोऽग्निरिव रावणं बभञ्ज ददाह

स बिभ्रेष प्रचुक्षोद दन्तैरोष्ठं चखाद च।
प्रगोपयाञ्चकाराशु यत्नेन परितः पुरम्॥ ८७॥

प्रहस्तमर्थयाञ्चक्रे योद्धुमद्भुतविक्रमम्।
किं विचारेण राजेन्द्र! युद्धार्था वयमित्यसौ॥ ८८॥

चक्राणाशङ्कितो योद्धुमुत्सेहे च महारथः।
नियेमिरेऽस्य योद्धारश्चक्लृपे चाश्वकुञ्जरम्॥ ८९॥

---

भ्रस्ज औ श पाके भ्रप्भ्रसोरिति सस्य दत्वे स्तुश्चुभिश्चुशादिति जः, भ्रस्जोऽरे वा भर्ज वेत्यस्याप्रवृत्तिपक्षे रूपम्॥ ८६॥ भ०

स बिभ्रेषेत्यादि। स राजा बिभ्रेष चलितः, भ्रेष चलने स्वरितेत्। प्रचुक्षोद क्रोधाल्लोष्टादीन् चूर्णितवान्, ओष्ठञ्च दन्तैः चखाद दष्टवान्। पुरं लङ्कां समन्तात् यत्नेन प्रगोपयाञ्चकार रक्षितवान्। गुपू रक्षण इत्युदात्तेत्, आयप्रत्ययान्तत्वादाम्॥ ८७॥ ज० म०

स बिभ्रेषेत्यादि। स रावणो बिभ्रेष चलितः, धैर्य्यादित्यर्थात्। भ्रेषृ ञ चलने। क्रोधात् प्रचुक्षोद लोष्टादीन् चूर्णितवान्। ञ धौ क्षुदिर क्षुदि। दन्तैरोष्ठं चखाद दष्टवान्। खाद्द भक्षणे खद स्थैर्य्ये बधे वा। पुरं लङ्कां परितः समन्तात् आशु शीघ्रं यत्नेन प्रगोपयाञ्चकार रक्षितवान्। गुपू रक्षे, वाऽरे इति पाक्षिकः आयः, त्यान्त-त्वादाम्॥ ८७॥ भ०

प्रहस्तमित्यादि। अद्भुतविक्रमं प्रहस्तं रावणो योद्धुं युध्यस्वेति अर्थयाञ्चक्रे प्रार्थितवान्। अर्थ उपयाञ्चायामिति चौरादिक आत्मनेपदीति वचनात्। असौ प्रहस्तः प्रार्थितः चक्राण बभाणेति वक्ष्यमाणेन सम्बन्धः। हे राजेन्द्र! युद्धार्था वयं युद्धप्रयोजनाः; ततश्च किं विचारेणेति॥ ८८॥ ज० म०

प्रहस्तमित्यादि। रावणः अद्भुतविक्रमं प्रहस्तं योद्धुं प्रार्थितवान् अर्थत्कङ् याचने। असौ प्रहस्त इति चक्राणेति वक्ष्यमाणेन सम्बन्धः। किं चक्राणेत्याह,—हे राजेन्द्र! किं विचारेण यतो वयं युद्धप्रयोजना एव॥ ८८॥ भ०

चक्राणेत्यादि। उक्ता च स महारथो योद्धा अशङ्कितो निर्भयः सन् योद्धु-मुत्सेहे उत्साहं कृतवान्। अस्य योद्धारो रावणेन नियेमिरे नियमिताः, अन्येन सह एतावद्भिर्योद्धव्यमिति, कर्मणि लिट्। अश्वकुञ्जरं चक्लृपे सज्जीकृतम्। पशुद्वन्द्वैकवद्भावः क्लृपे रो लः॥ ८९॥ ज० म०

युयुजुः स्यन्दनानश्वैरीजुर्देवान् पुरोहिताः ।
आनर्चुर्ब्राह्मणान् सम्यगाशिषश्चाशशंसिरे ॥ ९० ॥
ऊहिरे मूर्ध्नि सिद्धार्था गावश्चालेभिरे भटैः ।
प्रचुक्ष्णुवुर्महास्त्राणि जिज्ञासाञ्चक्रिरे हयान् ॥ ९१ ॥

चकूणेत्यादि । पूर्वोक्तं चकूण उक्तवान् । कूण च शब्दे । उक्त्वा महारथोऽसौ निःशङ्कः सन् योद्धुमुत्सहते स्म । अस्य प्रहस्तस्य अनुजीविनो योद्धारो रावणेन निर्येमिरे नियमिताः, प्रहस्तेनैव सह एतावद्भिर्योद्धव्यमिति, यमो उ विरतौ, निपूर्वो नियममाह, कर्म्मणि रूपम् । अश्वकुञ्जरं चक्लृपे सज्जीकृतम् । कृपूङ्च कम्पने, कृपः कृपोऽकृपादौ । अश्वाश्च कुञ्जराश्चेति समाहारद्वन्द्वः, सेनाङ्गत्वात् समाहार इति परः । महान् रथो यस्य स तथा महारथशब्दः पारिभाषिकोऽप्यस्ति । तथा च,—"रथनैकेन यो वीरः शास्ति शत्रुकुलं महत् । महारथः स विज्ञेयः संग्रामेषु परायणः ॥" इति ॥ ८९ ॥ भ०

युयुजुरित्यादि । स्यन्दनान् रथान् अश्वैः युयुजुः युञ्जन्ति स्म । पुरोहिताः देवानीजुः पूजितवन्तः यजादित्वात् सम्प्रसारणम् । ब्राह्मणान् आनर्चुः पूजितवन्तः, ते च पूजिताः आशिषः आशशंसिरे उदितवन्तः । आङ्शासु इच्छायामनुदात्तेत्, शास इत्वे आङ्शासोः क्वावुपसङ्ख्यानमित्याशीः ॥ ९० ॥ ज० म०

युयुजुरित्यादि । अश्वैः स्यन्दनान् रथान् युयुजुः सङ्घट्टयन्ति स्म, सारथय इत्यर्थात् । युजिर्यो ज्च युतौ युज कि संयमे इत्यस्य ण्वादिपचे वा रूपम् । पुरोहिता देवान् यजन्ति स्म । यजे ञौ देवार्च्चादानसङ्गतिकृतौ कर्त्तुः फलवत्त्वाभावात् पं, व्यथ-ग्रहेति खेर्जिः, ग्रह-स्वपाद्योरिति मूलस्य जिः । ब्राह्मणांश्च पूजयन्ति स्म । स्वान्तादादीति अर्च्चः खेरान् । ते ब्राह्मणा अर्च्चिताः सन्तः आशिषश्च आशशंसिरे इच्छन्ति स्म । आङः शन्सु इच्छायाम् । आशशासिरे इति पाठे—आङः शास इच्छायामपि ॥ ९० ॥ भ०

ऊहिरे इत्यादि । भटैः योधैः सिद्धार्थाः सर्षपाः मूर्ध्नि ऊहिरे ऊढाः, गावश्च आलेभिरे स्पृष्टाः । कर्म्मणि लिट् । महास्त्राणि प्रचुक्ष्णुवुः तेजितवन्तः, तथा तैः योद्धुं पार्थ्यत इति । क्ष्णु तेजने । भटाः हयान् जिज्ञासाञ्चक्रिरे ज्ञातुमिच्छां कृतवन्तः, किमेते योद्धुं क्षमा नेति, ज्ञा-श्रु-स्मृ-दृशां सन इत्यात्मनेपदित्वादनुप्रयोगेऽपि तङ् ॥ ९१ ॥ ज० म०

ललुः खड्गान् ममार्जुश्च ममृजुश्च परश्वधान्।
अलञ्चक्रे समालेभे ववसे बुभुजे पपे॥ ९२॥
जहसे च क्षणं यानैर्निर्जग्मे योद्धृभिस्ततः।
विप्रान् प्रहस्त आनर्च्च जुहाव च विभावसुम्॥ ९३॥
संवर्गयाञ्चकाराप्तान् चन्दनेन लिलेप च।
चचाम मधु माध्वीकं त्वक्त्राञ्चाचकचे वरम्॥ ९४॥

ऊहिरे इत्यादि। भटैः योधैः मूर्ध्नि सिद्धार्थाः श्वेतसर्षपा ऊहिरे धृता मङ्ग-लार्थं, वहे णौ प्रापणे, व्यय-ग्रहेति खेर्जिः,ग्रह-स्वपादोरिति प्रकृतेर्जिः। गावश्च आलेभिरे स्पृष्टाः, लभ डुलभष् प्राप्तौ आङ्पूर्वः स्पर्शनेऽपि कर्म्मणि रूपम्। महास्त्राणि प्रचुक्षुवुः तेजितवन्तः। भटा इति विभक्तिव्यत्ययेनानुषज्यते, क्ष्णु ल तेजने। हयान् ज्ञातुमिच्छां चक्रुः, किमेते युद्धकुशला न वेति। ज्ञा अवबोधने। स्मृ-दृश-ननुज्ञेति सम्॥ ९१॥ भ०

ललुरित्यादि। खड्गान् ललुः गृहीतवन्तः। ला आदाने। ममार्जुश्च विशुद्धान् कृतवन्तः। तथा परश्वधान् परशून् शोधितवन्तः, मृजेरजादौ संक्रमे विभाषा वृद्धिः। योद्धृभिः वक्ष्यमाणैः। अलञ्चक्रे अलङ्कृतं, समालेभे समालब्धं, ववसे छादितम्। वस आच्छादने। बुभुजे भुक्तं, पपे पीतम्। भावे लिट्॥ ९२॥ ज० म०

ललुरित्यादि। भटाः खड्गान् गृहीतवन्तः, लल ग्रहे। ममार्जुः खड्गान् शुद्धान् चक्रुः। तदा परश्वधान् परशून् ममृजुः शोधितवन्तः। मृज ल शुद्धौ मृजोऽकङिति विर्वेति रूपद्वयम्। अलञ्चक्रे योद्धृभिरिति वक्ष्यमाणेन सम्बन्धः। समालेभे अनुलेपनं कृतं, ववसे आच्छादनं कृतं, वस ल स्तृतौ। बुभुजे भुक्तं, भुज धौ वाणे भक्षे। पपे पीतं, पा पाने, सर्वत्र भावे ठौ॥ ९२॥ भ०

जहस इत्यादि। क्षणं जहसे हसितं, यानैः करणभूतैः निर्जग्मे निर्गतम्। ततः प्रहस्तः विप्रान् गोसुवर्णादिदानेन आनर्च्च पूजितवान्। विभावसुं चाग्निम् आज्यादिना जुहाव प्रीणितवान्॥ ९३॥ ज० म०

जहसे इत्यादि। योद्धृभिः क्षणं जहसे हसितं, यानैः रथादिभिः निर्जग्मे योद्धुं निर्गतम्। ततोऽनन्तरं प्रहस्तो विप्रान् आनर्च्च पूजितवान्। विभावसुम् अग्निं जुहाव प्रीणितवान्। हु खि होमेऽदने च धातूनामनेकार्थत्वात् प्रीणनेऽपि॥ ९३॥ भ०

संवर्गयामित्यादि। आप्तान् विश्वासिनः संवर्गयाञ्चकार कटकादिप्रदानेन

उष्णीषं मुमुचे चारु रथञ्च जुजुषे शुभम् ।
आललम्बे महास्त्राणि गन्तुं प्रववृते ततः ॥ ९५ ॥
आजघ्नुस्तूर्य्यजातानि तुष्टुवुश्चानुजीविनः ।
रजः प्रववृधे घोरं घोषश्च व्यानशे दिशः ॥ ९६ ॥

संवर्गितवान् संवर्गं करोतीति इति णन्तस्य रूपम् । चन्दनेन लिलेप समालब्धवान्, मृद्विका द्राक्षा तस्या विकारः मार्द्वीकं मधु चचाम त्वक्राञ्च सन्नहनं वरं श्रेष्ठं आचकचे बद्धवान्, कच बन्धन इत्यनुदात्तेत् ॥ ९४ ॥ ज० म०

संवर्गयामित्यादि । प्रहस्त आप्तान् जनान् संवर्गयाञ्चकार सम्भावितवान् सजातीयसमुदायो वर्गः, दक्षिणहस्तादिदानेन शपथपूर्वकं संवर्गितवान् सम्बद्धी-कृतवानित्यर्थो वा । संवर्गं करोति इति णिः । चन्दनेन लिलेप लेपनं कृतवान् । णि लि-पौशपञ् लेपे । मधु माध्वीकं मद्यं चचाम वरं श्रेष्ठं त्वक्रं कवचम् आचकचे बद्धवान् कच ङ बन्धलिषोः ॥ ९४ ॥ भ०

उष्णीषमित्यादि । उष्णीषं शिरस्त्राणं मुमुचे, रथञ्च जुजुषे, जुषिरनुदात्तेत् । महास्त्राणि आललम्बे गृहीतवान् । लवि अवस्रंसन इत्यनुदात्तेत् । तत उत्तरकालं गन्तुं प्रववृते प्रवृत्तः ॥ ९५ ॥ ज० म०

उष्णीषमित्यादि । चारु उष्णीषं शिरस्त्राणं मुकुटं वा मुमुचे परिदधे । मुच्लृश-मञौ मोचे, परिधानेऽपि दृश्यते । "उष्णीषञ्च शिरोवेष्टे किरीटे लक्षणान्तर" इति विश्वः । शुभं शोभमानं रथं जुजुषे सेवितवान् आरूढ इत्यर्थः । शङीञ्जि जुष मुदि सेवे । महास्त्राणि आललम्बे जग्राह । लवि ङ् अवस्रंसने च । ततोऽनन्तरं गन्तुं प्रवृत्तः । वृतु ङ्वृ वर्त्तने ॥ ९५ ॥ भ०

आजघ्नुरित्यादि । तूर्य्यजातानि वाद्यसमूहान् आजघ्नुः ताड़ितवन्तः तन्नियुक्ता इत्यर्थात् । आङोयमहन इति तङ् न भवति सकर्मकत्वात् । अनुजीविनश्च तुष्टुवुः जय जीवेति स्तुवन्ति स्म, पदक्षोभाद् घोरं रजः प्रववृधे वर्द्धते स्म । घोषश्च कलकलशब्दः दिशो व्यानशे व्याप्तवान् ॥ ९६ ॥ ज० म०

आजघ्नुरित्यादि । तूर्य्यसमूहान् आजघ्नुः वाद्यकारास्ताड़ितवन्तः आत्माङ्गदा-दित्यस्याविषयः आत्माङ्गकर्मकत्वाभावात् हनगमित्युङ्लोपः । अनुजीविनो जय जयेति स्तुवन्ति स्म । स्तु ञ स्तुतौ क्रिलादिति णले ष्टुभिरिति टः । घोरं भीषणं रजो वर्द्धते स्म

तं यान्तं दद्रमुर्गृध्राः क्रव्यादश्च सिषेविरे।
आववुर्वायवो घोराः खादुल्काश्च प्रचस्खरुः॥ ८७॥
सस्यन्दे शोणितं व्योम रणाङ्गानि प्रजज्वलुः।
रथाः प्रचस्खलुः साश्वा न ररंहाश्वकुञ्जरम्॥ ८८॥
प्रतोदा जगलुर्वाममानञ्चुर्यज्ञिया मृगाः।
ददाल भूः पुपूरे द्यौः कपीनामपि निस्वनैः॥ ८९॥

प्रवव्रध इति क्वचित्पाठः। घोषः कोलाहलश्च दिशो व्याप्तवान्। अशू ङ् व्याप्तिसंहत्योः स्वान्नादादीति खेरान्॥ ८६॥ भ०

तं यान्तमित्यादि। तं प्रहस्तं यान्तं गृध्रा अशुभसूचकाः दुद्रुवुः गतवन्तः, क्रव्यादश्च शृगालाः सिषेविरे सेवितवन्तः, वायवो घोराः पांशुग्राहिणः आववुः समन्तात् वान्ति स्म। उल्काश्च तदा तस्मिन् काले प्रचस्खरुः पतिताः। स्वर सञ्चलन इत्यकर्मकः॥ ८७॥ ज० म०

तं यान्तमित्यादि। गृध्रा अशुभसूचकाः पक्षिणः तं यान्तं गच्छन्तं प्रहस्तं दद्रमुः गतवन्तः। दुद्रुवुरिति पाठे—द्रु स्नु गतौ। क्रव्यादः शृगालाः सेवितवन्तः सेवृङ् सेवने, खेरेकारस्य ऋस्व इकारः। घोराः प्रतिकूला वायवः सर्वतो वान्ति स्म। वा ल-गमनहिंसयोः। तदा तस्मिन् काले उल्काः प्रचस्खरुः आ पतन्ति स्म। स्वर-सञ्चलने॥ ८७॥ भ०

सस्यन्द इत्यादि। व्योम कर्तृ शोणितं सस्यन्दे सिञ्चति स्म। स्यन्दिः सकर्मकः। रणाङ्गानि खड्गादीनि जज्वलुः ज्वलन्ति स्म। साश्वाः सहाश्वैः रथाः प्रचस्खलुः स्खलन्ति स्म। अश्वकुञ्जरं न ररंह न गतम्॥ ८८॥ ज० म०

सस्यन्द इत्यादि। व्योम आकाशं कर्तृ शोणितं स्रवति स्म। स्यन्दू ङ् स्रुतौ। रणाङ्गानि खड्गादीनि ज्वलन्ति स्म। ज्वलजम चलत्विषोः। अश्वैः सह रथाः स्खलन्ति स्म। स्खलमिचये चले। अश्वकुञ्जरं कर्तृ न ररंह न जगाम। रहि गत्याम्। नेहाचक्रे इति पाठे—न चेष्टते स्मेत्यर्थः॥ ८८॥ भ०

प्रतोदा इत्यादि। प्रतोदाः जगलुः हस्तेभ्यो गलिताः। गल अदने, अनेकार्थत्वात् पतनेऽपि। मृगा यज्ञियाः यज्ञार्हाः कृष्णसाराः यज्ञर्लिंग्भ्यां घ खञौ। वामम् अङ्गम् आनञ्चुः गतवन्तः, अत आदेरिति दीर्घः तस्मान्नुट्द्विहलः। भूः ददाल विदीर्णा। नभ्याः

मिमेह रक्तं हस्त्यश्वं राक्षसाश्च नितिष्ठिवुः ।
ततः शुशुभतुः सेने निर्दयञ्च प्रजह्रतुः ॥ १०० ॥
दिद्विषुर्दुद्युवुश्चच्छुश्चक्लमुः सुषुपुर्हताः ।
चिखिदिरे चखादुश्च विलेपुश्च रणे भटाः ॥ १०१ ॥

लेति पाठान्तरं, चचालेत्यर्थः । कपिनिस्वनैः द्यौः आकाशं पुपूरे पूर्णा, दिवः पूरणनिमित्तम् । यतः कपयो हर्षात् तद्विनाशसूचका एवम् आचरन्ति ॥ ९९ ॥ ज० म०

प्रतीदा इत्यादि । सारथिहस्तात् प्रतीदाः ताड़नदण्डाः गलिताः । गल भक्षे । अनेकार्थत्वात् पतनेऽपि । यज्ञार्हा मृगाः कृष्णसारादयो वामं भागं गताः । अञ्चु श्लिष्टोक्तौ गतौ । आनञ्चुरिति पाठे अन्जू धञ्जि व्यक्तिगतिम्रक्षणे । भूमिः ददाल विदीर्णा दल मि भेदे । जिह्वालेति पाठे ह्वल म चाले । कपीनां निस्वनैः द्यौः आकाशं पुपूरे पूर्णा । तथा अशुभं दृष्ट्वा कपीनां हर्षनिस्वनो जात इति भावः । पूरी ङ् पूर्त्तौ ॥ ९९ ॥ भ०

मिमेहेत्यादि । हस्त्यश्वं कर्त्तृ रक्तं मिमेह मूत्रितवत् इत्यर्थः । मिह सेचने । राक्षसाश्च स्वरक्तं नितिष्ठिवुः निरस्तवन्तः । ततो दुर्निमित्तादनन्तरं ते सेने सन्नद्धे शुशुभतुः शोभितवत्यौ । निर्दयं प्रजह्रतुः प्रहृतवत्यौ ॥ १०० ॥ ज० म०

मिमेहेत्यादि । हस्त्यश्वं कर्त्तृ रक्तं मिमेह मूत्रित्वत्, मिहौ सिचि । राक्षसाश्च रक्तं निष्ठीवन्ति स्म, ष्ठिवु निरसने, ष्ठिवजाद्योरिति पाक्षिकः खेत्तकारः । तत ईदृशामङ्गलनिमित्तानन्तरं द्वे सेने शुशुभतुः, शुभ शुन्भ दीपनहिंसयोरित्यस्य रूपम् । शुभ्लङ् दीप्तौ, क्वचिदात्मनेपदिनोऽपि परस्मैपदित्वमिति केचित् । निर्दयञ्च प्रहारं चक्रतुः । हृञ हृत्याम् ॥ १०० ॥ भ०

दिद्विषुरित्यादि । रणे भटाः दिद्विषुः परस्परं द्विष्टवन्तः । द्विष अप्रीतौ । दुद्युवुः अभिमुखं गतवन्तः । द्यु अभिगमने । चच्छुः छिन्नवन्तः । छो छेदने । हताश्चक्लमुः मूर्च्छां गतवन्तः, सुषुपुः भूमौ पतिताः । वच्यादिना सम्प्रसारणम् । चखादिरे खादिताः । कर्म्मणि लिट् । चखादुः खादितवन्तः, विलेपुश्च विलापं कृतवन्तः, अत एकहलीत्येत्वम् ॥ १०१ ॥ ज० म०

दिद्विषुरित्यादि । भटा रणे द्वेषं चक्रुः द्विषौ ञ वैरे । दुद्युवुः अभिमुखं जग्मुः द्यु ल अभिसर्पणे । चच्छुः छिन्नवन्तः । छो लूनौ च, हताः सन्तश्चक्लमुः मोहं गताः । ञि क्लम्य-क्लमु भिर्ल्लानौ । सुषुपुः भूमौ पतिताः । स्वपौ ञि शये । अनेन पतनं लक्ष्यते । व्यथ-ग्रहेति

प्रहस्तस्य पुरोऽमात्यान् जिहिंसुर्दधृषुस्तथा।
वानराः कर्म्म सेनानी रक्षसां चक्षमे न तत्॥ १०२॥
ऊर्णुनाव स शस्त्रौघैर्वानराणामनीकिनीम्।
शशास च बहून् योधान् जीवितेन विवेच च॥ १०३॥
आससञ्ज भयं तेषां दिद्युते च यथा रविः।
नाययास द्विषां देहैर्जगाहे च दिशो दश॥ १०४॥

खंर्जिः, ग्रह-स्वपाद्योरिति प्रकृतेर्जिः। चखादिरे अन्यैः खादिताः। चिखिदिरे इति पाठे दैन्यं गताः। खिद ङ् धौ दैन्ये। चखादुश्च अन्यान् खादितवन्तः खादृङ् भक्षणे। विलेपुः विलापं चक्रुः, क्ट लप भाषे, विपूर्वः परिदेवने॥ १०१॥ भ०

प्रहस्तस्येत्यादि। अमात्यान् सचिवान् प्रहस्तस्य पुरोऽग्रतः वानरा जिहिंसुः हतवन्तः। तथा दधृषुः परिभूतवन्तः। ञि धृषा प्रागल्भ्ये। तच्च कर्म्म वानरैः यत् कृतं रक्षसां सेनानीः प्रहस्तः न चक्षमे न क्षमते स्म॥ १०२॥

प्रहस्तस्येत्यादि। वानराः प्रहस्तस्य पुरोऽग्रतोऽमात्यान् हिंसन्ति स्म। हिस धि कि-हिंसे। अमा सहार्थे त्यबाद्यचिरित्यादिना त्यः। तथा दधृषुः, ञि धृषा न प्रागल्भ्ये। तत् वानरैः कृतं कर्म्म रक्षसां सेनानीः प्रहस्तो न क्षमते स्म, क्षमू ङ् ञि मर्षे॥ १०२॥ भ०

ऊर्णुनावेत्यादि। स सेनानीः वानराणाम् अनीकिनीः सेनाः शस्त्रौघैः ऊर्णुनाव छादितवान्। ऊर्णोतेर्णुवद्भावादितीजादेरित्याम् न भवति। शशास च योधान्, शसु हिंसायाम्। जीवितेन च विवेच पृथक् कृतवान्। विचिर पृथग्भावे इति रुधादौ स्वरितेत्॥ १०३॥ ज० म०

ऊर्णुनावेत्यादि। स प्रहस्तो वानराणाम् अनीकिनीं सेनां शस्त्रसमूहैः ऊर्णु-नाव आच्छादितवान्। ऊर्णु लङ् आच्छादने, विजादीत्यादौ ऊर्णुवर्जनाम्नाम्, नाज-न्तादेरादिर्हिः स्यादौ नवद्वीय इति वचनात् नोरेव द्वित्वम्। बहून् योधान् शशास जघान। उ शस वधे। जीवितेन च विवेच पृथक् कृतवान्। विचिर्लिं धौ ञ पृथक्ते॥ १०३॥ भ०

आससञ्जेत्यादि। तेषां योधानां युयुत्सूनां भयम् आससञ्ज आलग्नं, सञ्ज सङ्ग-इत्यकर्म्मकः। प्रहस्तश्च रविरिव दिद्युते द्योतते स्म। द्युतिस्वाप्योः सम्प्रसारणमित्यभ्यासस्य

केचित् संचुकुटुर्भीता लेजिरेऽन्ये पराजिताः ।
संग्रामाद्दभ्रशुः केचित् ययाचुश्चापरेऽभयम् ॥ १०५ ॥
एवं विजिग्ये तां सेनां प्रहस्तोऽतिददर्प च ।
शशाम न च संक्रुद्धो निर्जुगोप निशाचरान् ॥ १०६ ॥

सम्प्रसारणम् । नाययास युद्धमानो नायस्तति स्म । यसु प्रयत्ने । द्विषां देहैश्च शवकायैः करणभूतैः दश दिशो जगाहे अवष्टब्धवान् ॥ १०४ ॥ ज० म०

आससञ्जेत्यादि । प्रहस्तस्तेषां वानराणां भयम् आससञ्ज आरोपितवान् सन्जौ ञि सङ्गे, अन्तर्भूतण्यर्थोऽत्र बोध्यः, सन्जेरकर्म्मकत्वात् । किं वा भयं कर्म्म आससञ्ज आसक्तवत् । प्रहस्तो रविरिव द्योतते स्म । द्युत् लङपि, अपिशब्दात् द्युत्यां द्युत्स्वाप्योः खेर्जिरिति जिः । बध्यमानोऽपि नाययास नायासं प्राप । इर्यसु यतने, आङ् पूर्वः श्रमे । द्विषां देहैः कपिशरीरैः करणभूतैः दश दिशो जगाहे विष्टब्धवान् ङ गाह्र विलोड़ने ॥ १०४ ॥ भ०

केचिदित्यादि । केचित् भीताः सन्तः सञ्चुकुटुः सङ्कुटिताः निष्प्रयत्नाः स्थिता इत्यर्थः । कुट कौटिल्ये । अन्ये पराजिताः सन्तः लेजिरे भर्त्सिताः प्रहस्तेन मृगा इव कातरा यूयमिति । लज लाजि भर्त्सने कर्म्मणि लिट् । केचित् संग्रामात् वभ्रशुः पलायिताः । भ्रसुभ्रंशु अधःपतने । अपरे चाभयं ययाचुः याचितवन्तः ॥ १०५ ॥ ज० म०

केचिदित्यादि । केचन भीताः सन्तः सञ्चुकुटुः कौटिल्यं प्रापुः, कुटिलयुद्धाश्रयणात् । कुट शि कौटिल्ये । अन्ये पराजिताः लेजिरे प्रहस्तेन भर्त्सिताः, लज भर्त्सने, कर्म्मणि रूपम् । केचित् संग्रामात् वभ्रशुः पलायिताः । ल भनृशु ङ्भ्रंशु च, चकारात् अधःपाते । अपरे चाभयं देहीति याचितवन्तः । टुडु याचृ ञ याचने ॥ १०५ ॥ भ०

एवमित्यादि । एवमुक्तेन प्रकारेण प्रहस्तः तां सेनां विजिग्ये जितवान् । विपराभ्यां जेरिति तङ्, सन्लिटो र्जेरिति कुत्वम् । अतिददर्प च सुष्ठु हृष्टवान्, दृप हर्ष-विमोहनयोः । न च शशाम न च शमनं गतः । निशाचरान् स्वीयान् अमात्यान् निर्जुगोप रक्षितवान् । आयाभावपक्षे रूपम् ॥ १०६ ॥ ज० म०

एवमित्यादि । उक्तप्रकारेण प्रहस्तः तां कपिसेनां विजितवान् । जि जये । वि-पराजीति मं, जेर्गिः सन्लिटोः । अत्यर्थं दृप्तोऽपि जातः, दृप्यङ् हर्ष-गर्वयोः, दृप कि सन्दीपन इत्यस्य वा णेरभावपक्षे रूपम् । संक्रुद्धः सन् न शान्तो बभूव, शमु दमने । निशाचरान् निर्जुगोप । गुपू रक्षे । वाऽरे इति पक्षे आयस्याभावः ॥ १०६ ॥ भ०

चुक्रुधे तत्र नीलेन तरुश्चोच्चिक्षिपे महान्।
प्रहस्तोऽभिहतस्तेन बाणान् विससृजे बहून् ॥ १०७ ॥
सेहे कपीरथाश्वांश्च रिपोस्ततर्द शाखिना।
धरित्रीं मुषली तेये प्रहस्तश्चिखिदे न च ॥ १०८ ॥
संदुधुक्षे तयोः कोपः पस्फाये शस्त्रलाघवम्।
नुनोद शाखिनं नील आवव्रे मुषली तरुम् ॥ १०९ ॥

चुक्रुध इत्यादि। तत्र तस्मिन् संग्रामे नीलेन चुक्रुधे क्रुद्धं, भावे लिट्। तरुश्च उच्चिक्षिपे उत्क्षिप्तः, कर्म्मणि लिट्। तेन तरुणा उन्मूलितेन अभिहतः सन् प्रहस्तो बाणान् विससृजे क्षिप्तवान्, सृज विसर्गे इति दैवादिकोऽनुदात्तेत् ॥ १०७ ॥ ज० म०

चुक्रुधे इत्यादि। तत्र प्रहस्तविषये नीलेन चुक्रुधे क्रोधः कृतः, क्रुध् लृञौ कोपे, भावे रूपम्। महान् तरुश्च तस्योपरि उच्चिक्षिपे उत्क्षिप्तः, क्षिप श औ क्षिपि कर्मणि रूपम्। तेन नीलेन तरुणा वा अभिहतः प्रहस्तो बहून् बाणान् विससृजे त्यक्तवान्। सृज्यौङ् विसर्गे ॥ १०७ ॥ भ०

सेहे कपिरित्यादि। कपिः नीलो बाणान् सेहे सोढ़वान्, रथान् अश्वांश्च, रिपोः प्रहस्तस्य, शाखिना तरुणा ततर्द हतवान्, तृह हिंसि हिंसायाम्। हतरथाश्वश्च प्रहस्तो मुषली गृहीतमुसलः धरित्रीं तेये गतवान्, अय पयेत्यत्र तयिः अनुदात्तेत्। न च चिखिदे खिन्नः, खिद दैन्य इत्यनुदात्तेत् ॥ १०८ ॥ ज० म०

सेहे इत्यादि। कपिः नीलः सेहे सोढ़वान्, तत् बाणवृष्टिमित्यर्थात्। रिपोः प्रहस्तस्य रथम् अश्वांश्च शाखिना ततर्द। तर्द हिंसे। ततः प्रहस्तो मुषलान्वितः सन् धरित्रीं तेये गतः, तयङ्गति-रक्षयोः, न च चिखिदे खेदं प्राप्तः। खिदङ्ध्यौ-दैन्यके ॥ १०८ ॥ भ०

सन्दुधुक्ष इत्यादि। तयोः नीलप्रहस्तयोः कोपः सन्दुधुक्षे वृद्धिं गतः। अस्त्र-लाघवम् अस्त्रकौशलं पस्फाये वृद्धिं गतः। नुनोद शाखिनं प्रेरितवान्। मुषली प्रहस्तः तरुम् आवव्रे मुषलेन आहतवान् ॥ १०९ ॥ ज० म०

सन्दुधुक्षे इत्यादि। तयोः नीलप्रहस्तयोः कोपः सन्दुधुक्षे संप्रदीप्तः, धिक्ष धु क्षङ् सन्दीपने क्लेशे जीवे। अस्त्रविषये लाघवं शीघ्रता वर्द्धते स्म, स्फायीञ् संवृद्धौ।

वियत्यानभतुर्भूमौ मण्डलानि विचेरतुः ।
प्रदुद्रुवतुरन्योऽन्यं वीरौ शश्रमतुर्न च ॥ ११० ॥
समीरयाञ्चकाराथ राक्षसस्य कपिः शिलाम् ।
क्षतस्तया ममारासावाशिश्राय च भूतलम् ॥ १११ ॥
तुतुषुर्वानराः सर्वे नेशुश्चित्रा निशाचराः ।
जेरुराशा दशास्यस्य सैन्यं नीलं नुनाव च ॥ ११२ ॥

नीलः शाखिनं नुनोद नुद ञ् प्रेरणे । मुषली प्रहस्तस्तं निवारितवान् । व्रज गव्रज व्रतौ ॥ १०९ ॥ भ०

वियतीत्यादि । वीरौ तौ वियति आकाशे आनभतुः गतौ, अभ्र वभ्रेति गत्यर्थः वियतीऽधिकरणत्वेन विवक्षितत्वात् द्वितीया न कृता । भूमौ च मण्डलानि तिर्य्यग्भ्रमणानि विचेरतुः आचरितवन्तौ । अन्योऽन्यं प्रदुद्रुवतुः उपतापितवन्तौ । न च शश्रमतुः श्रान्तौ ॥ ११० ॥ ज० म०

वियतीत्यादि । तौ नीलप्रहस्तौ वीरौ वियति आकाशे गतौ, अभ्र गत्यां स्वान्तादादि इति खेरान् । भूमौ मण्डलानि तिर्य्यग्भ्रमणानि विचेरतुः विचरितवन्तौ । अन्योऽन्यं प्रदुद्रुवतुः उपतापितौ द्रुर्णोपतापे, द्रुसु गतौ, न तु शश्रमतुः श्रान्तौ श्रमु भ्यञिद्रर् तप खेदयोः ॥ ११० ॥ भ०

समीरयामित्यादि । अथानन्तरं कपिः राक्षसस्य शिलां समीरयाञ्चकार क्षिप्तवान् । ईर क्षेप इति चौरादिक उदात्तेत् । असौ राक्षसः तया शिलया क्षतः सन् ममार मृतवान् । भूतलञ्च शिश्राय आश्रितवान्, पतित इत्यर्थः ॥ १११ ॥ ज० म०

समीत्यादि । अथानन्तरं कपिः नीलः राक्षसस्य प्रहस्तस्य शिलां समीरयाञ्चकार विक्षिप्तवान् । ईर्कि गतौ नुदि । तया शिलया क्षतस्ताड़ितोऽसौ प्रहस्तो मृतः । मृङ्ष्टौव्येमिति नियमात् पम् । भूतलञ्च आश्रितवान् । श्रिञ सेवने ॥ १११ ॥ भ०

तुतुषुरित्यादि । वानराः सर्वे तुतुषुः तुष्टाः । निशाचरा नेशुः पलायिताः । विचित्रा नानाप्रकाराः । दशास्यस्य आशाः मनोरथा जेरुः जीर्णाः, वा जॄ-भ्रमु इत्येलम् । सैन्यञ्च कर्तृ नीलं नुनाव स्तौति स्म ॥ ११२ ॥ ज० म०

तुतुषुरित्यादि । ततः सर्वे वानराः तुष्टाः । तुषल्ययौञिच । चकारात् तुष्टौ । तुष्टुवुरिति पाठे—नीलमिति योज्यम् । चित्रा नानाप्रकारा निशाचरा नेशुः

यदा न फेलुः क्षणदाचराणां मनोरथा रामबलाभियोगे।
लङ्कां तदा भेजुरुदीर्णदैन्या व्याचख्युरुच्चैश्च हतं प्रहस्तम्॥ ११३॥

इति भट्टिकाव्ये तिङन्तकाण्डे लिङ्विलसितो नाम
प्रथमः काव्यस्य चतुर्दशः सर्गः।

## पञ्चदशः सर्गः।

राक्षसेन्द्रैस्ततोऽभैषीदैच्चिष्ट परितः पुरम्।

---

पलायिताः। णश्लृ ऊ नाशे। दशास्यस्य आशा मनोरथा जीर्णाः जॄ गि कि ज्यानौ ऋतोणुः कित्र्त्यां तॄ-फलेत्यादिना पाचिकमेत्वं खिलोपश्च। गेलुरिति पाठे—गल भक्षे, अनेकार्थत्वात् गतावपि। सर्वमेव सैन्यं कर्तृ नीलं नुनाव। नु ल स्तुतौ। नूशिस्तवने वा॥ ११२॥ भ०

यदेत्यादि। क्षणदाचराणां रामबलाभियोगे मनोरथा वाञ्छितानि यदा न फेलुः न फलिताः, प्रहस्तस्य व्यापादितत्वात्। तदा लङ्कां भेजुः सेवितवन्तः। उदीर्णदैन्याः उदीर्णं महत् दैन्यं दीनभावो येषामिति प्रहस्तञ्च हतं मृतम् उच्चैः आचख्युः आख्यातवन्तः, रावणायेत्यर्थात्॥ ११३॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लिङ्विलसितो
नाम प्रथमः परिच्छेदः काव्यस्य चतुर्दशः सर्गः।

यदा नेत्यादि। रामबलस्य हनने क्षणदाचराणां राक्षसानां मनोरथा यदा न फेलुः। फल निष्पत्तौ। तॄ-फलेति एत्वं खिलोपश्च। तदा निशाचरा लङ्कां भेजुः सेवितवन्तः। भज औ भागसेवयोः। हतं प्रहस्तम् उच्चैः आख्यातवन्तश्च रावणमित्यर्थात् ख्या ल ख्यातौ, चक्षिङः ख्याङ् वा, उदीर्णं महत् दैन्यं येषाम्। ऋ गि गत्यां क्तः॥११३॥भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मज श्रीभरतसेन-
विरचितायां मुग्धबोधिन्यां भट्टिटीकायां शरबन्धो नाम
चतुर्दशः सर्गः।

—*—

इतः प्रभृति लुङमधिकृत्य तद्विलसितमाह, तत्र भूतसामान्ये लुङ्, ततोऽन्यत्रापि दर्शयिष्यति।

राक्षसेत्यादि। ततः प्रहस्तवधश्रवणानन्तरम् ईदृशोऽपि व्यापादित इति

प्रातिष्ठिपच्च बोधार्थं कुम्भकर्णस्य राक्षसान् ॥ १ ॥
तेऽभ्यगुर्भवनं तस्य सुप्तं चैक्षिषताथ तम् ।
व्याहार्षुस्तुमुलान् शब्दान् दण्डैश्चावधिषुर्द्रुतम् ॥ २ ॥

अभैषीत्, सिचि वृद्धिः । परितः समन्तात् पुरं लङ्काम् ऐक्षिष्ट दृष्टवान् । किमत्र शक्यते स्थातुं न वेति कुम्भकर्णस्य सुप्तस्य बोधनार्थं राक्षसान् प्रातिष्ठिपत् प्रस्थापितवान् । तिष्ठतेश्चङ् परे णावुपधाह्रस्वापवादः, तिष्ठतेरिदिति त्वं द्विर्वचनमभ्यासकार्यं धात्वादेशः षत्वं ष्टुत्वञ्च ॥ १ ॥ ज० म०

अथ टीमधिकृत्य तद्विलसितमुच्यते पाणिनिमते लुङिति संज्ञा ।

राक्षसेन्द्र इत्यादि । राक्षसेन्द्रो रावणः, ततः प्रहस्तवधात् अभैषीत् भीतः । ञि भी लि भीत्यां, भवद्भूतभव्ये विशः इति भूतसामान्ये टी घोटीषीष्वमिति धातोः आदौ मित्त्वादम्, ष्यां सिः, नेमेकाजादिति इमो भावः, व्रजवदेत्यादिना त्रिः, वदाद्यलि-सेरिति ईम्, क्लिलादिति षः । परितः समन्तात् पुरं लङ्कां वीक्षितवान् । किमत्र स्थातुं शक्यते न वेति । ईक्षङ् दर्शने । भूयोऽमजादेरिति अमि कृते पुनरम्, आदिगेचोरिति सन्धिः, वसोऽरस्येति इम् षत्वं, ष्टुभिरिति तस्य टः । राक्षसान् कुम्भकर्णस्य बोधार्थं प्रस्थापितवांश्च । ष्ठा स्थाने ञिः प्रेरणे, क्रीव्लीत्यादिना आदन्तत्वात्पन्, ञिश्रिद्रुसुकम् इति अङ्; स्थोऽोऽञ्रङीरितीत्वं धुर्ह्रिश्व्रङ्ञिर्लोपः ॥ १ ॥ भ०

तेऽभ्यगुरित्यादि । ते राक्षसाः तस्य कुम्भकर्णस्य भवनं गृहम् अभ्यगुः गताः । इणोगेति लुङि विषयभूते गादेशः, गातिस्थेति सिचो लुक्, तस्य पदान्तादिति पररूपत्वम् । ते च सुप्तम् ऐक्षिषत दृष्टवन्तः । अथानन्तरं प्रबोधार्थं तुमुलान् महतो ध्वनीन् व्याहार्षुः व्याहृतवन्तः । नेटीति वृद्धिप्रतिषेधः हल्समुदायपरिग्रहणात् वृद्धेः प्राप्तत्वात् ॥ २ ॥ ज० म०

तेऽभ्यगुरित्यादि । ते राक्षसाः तस्य कुम्भकर्णस्य भवनं गृहम् अभ्यगुः गतवन्तः । इण गतौ । गा ष्यामिति इणोगादेशः, अनुस्विदेः भूस्थापिबदेण इति सेर्लुक् उस्येचोत्या-लोपः । सुप्तं तं कुम्भकर्णम् ऐक्षिषत दृष्टवन्तः मान्तोऽदनतः । अथानन्तरं प्रबोधार्थं तुमुलान् महतः शब्दान् व्याहार्षुः व्याहृतवन्तः, चक्रुरित्यर्थः । हृञ् हृत्यां नेमेकाजा-दिति इमनिषेधः, व्रजवदेत्यादिना त्रिः, अनुस्विदेः । दण्डैश्च द्रुतम् आवधिषुः हनवधष्टीति वधादेशः, हसादेः सेम इत्यादौ वधवर्जनान्न त्रिः ॥ २ ॥ भ०

केशानलुञ्चिषुस्तस्य गजान् गात्रेष्वविभ्रमन्।
शीतैरभ्यषिचंस्तोयैरलातैश्चाप्यदम्भिषुः ॥ ३ ॥
नखैरकर्त्तिषुस्तीक्ष्णैरदाङ्क्षुर्दशनैस्तथा।
शितैरतौत्सुः शूलैश्च भेरीश्चावीवदन् शुभाः ॥ ४ ॥

केशानित्यादि। तस्य केशान् अलुञ्चिषुः उत्पाटितवन्तः। गात्रेषु गजान् अचिक्रमन् क्रमयन्ति स्म, क्रमेर्मान्तत्वान्मित्संज्ञायां ह्रस्वत्वं, चङि सन्वद्भावादभ्यासस्य सन्यत इति इत्वम्। शीतैः तोयैः अभ्यषिचन् सिञ्चन्ति स्म, अत्र सिचिरभ्युत्तणे वर्त्तते। तेन उदकस्य करणत्वं, लिपि सिचिक्रश्चेत्यङ् प्राक् सितादड्व्यवायेऽपि इति षत्वम्। अलातैः अङ्गारैः चापि अदम्भिषुः दग्धवन्तः, अनेकार्थत्वात् धातूनाम् ॥ ३ ॥ ज० म०

केशानित्यादि। ते राक्षसाः तस्य कुम्भकर्णस्य केशान् अलुञ्चिषुः उत्पाटितवन्तः। लुञ्चापनयने। गात्रेषु हस्तिनो भ्रमयन्ति स्म। भ्रमु जण चाले, ञिः अङ् द्वित्वं, उपधाह्रस्वः इति ह्रस्वः, घटादीत्यादिना वा ह्रस्वः सन्वत् ह्रस्वस्येत्सनि अचिक्रमन्निति पाठे क्रमु गतौ। शीतैः तोयैः अभिषिञ्चन्ति स्म। षिच् पशौज क्षरणे, अभिपूर्वः प्रोक्षणमाह। तेन तोयानां करणत्वं वक्ष्यस्येत्यादिना ङः, लोपीतोदेचोः गीक इत्यादिना षत्वम्। अलातैः अङ्गारैः अपि अदम्भिषुः दग्धवन्तः। दन्भुन दम्भे, अनेकार्थत्वात् दाहार्थः ॥ ३ ॥ भ०

नखैरित्यादि। तीक्ष्णैः नखैः अकर्त्तिषुः छिन्नवन्तः। तथा दशनैः तीक्ष्णैः अदाङ्क्षुः दशन्ति स्म। दंशेरनिटो हलन्तलक्षणा वृद्धिः, व्रश्चेत्यादिना षत्वं, षढोः कस्सि। शितैः तीक्ष्णैः शूलैः अतौत्सुः व्यथयन्ति स्म। तुदेरनिटो हलन्तलक्षणा वृद्धिः। भेरीश्च शुभाः उच्चैः शब्दा अवीवदन् वादितवन्तः। सन्वल्लघुनीति सन्वद्भावादभ्यासस्येत्वं दीर्घो लघोरिति दीर्घत्वम् ॥ ४ ॥ ज० म०

नखैरित्यादि। तीक्ष्णैः नखैः चिच्छिदुः। कृती शप छिदि। तथा तीक्ष्णैः दन्तैः दशन्ति स्म। दन्शौ दंशने, ण्यां सिः औदित्त्वात् नेम्, अनिम्त्वात् व्रजवदेत्यादिना व्रिः, शच्छाजिति षङ्, षढोः कः, खोर्नुः अम्नोः क्लिलादिति षः, अनुस्विदेः। शितैः तीक्ष्णैः शूलैरपि व्यथयन्ति स्म। तुद शओ व्यथे। अनिम्लाद व्रिः, झपृझसीरिति दस्य तः। शुभा शोभनाः उच्चैः शब्दा भेरीः वादितवन्तः। वदेर्ञिः कर्त्तुः फलवत्त्वाविवक्षायां पम्, वदक्वाक्सन्देशयोरित्यस्मात् चुरादेर्ञन्ताद्दाञिरङ्, द्वित्वं उपधाह्रस्वः-स्वः खिः सन्वत् ञेर्लोपः ॥ ४ ॥ भ०

स तान्नाजीगणत् सर्वानिच्छयाबुद्ध च स्वयम् ।
अबूबुधत कस्मान्मामप्राक्षीच्च निशाचरान् ॥ ५ ॥
तेऽभाषिषत राजा त्वां दिदृक्षुः क्षणदाचर ! ।
सोऽज्ञासीद्व्यलिपन्मांसमप्सासीद्वारुणीमपात् ॥ ६ ॥

स तानित्यादि । कुम्भकर्णः तान् सर्वान् उपद्रुतान् नाजीगणत् न गणयति स्म, न वेदितवान् इत्यर्थः । गणेः स्वार्थिकण्यन्तस्यादन्तस्याभ्यासस्य ई च गण इतीत्वम् । स्वयं चात्मन इच्छयाबुद्ध बुध्यते स्म । झलोझलीति सिचोलोपः । निशाचरांश्च अप्राक्षीत् पृष्टवान्, हलन्तलक्षणा वृद्धिः, व्रश्चेत्यादिना षत्वं, षढोः कस्से । कस्मात् माम् अबूबुधत यूयं प्रबोधितवन्तः । बुधेर्ण्यन्तस्य मध्यमपुरुषबहुवचने णौ चङ्युपधाया ह्रस्वत्वम् । अभ्यासस्य दीर्घो लघोरिति दीर्घत्वम् ॥ ५ ॥ ज० म०

स तानित्यादि । स कुम्भकर्णः तान् तुमुलशब्दादीन् न गणयति स्म । गणस-सङ्ख्याने चुर्य्योञि: अदन्तत्वात् ञ्णित्यन्तेजुङ्तोरित्यस्य न विषयः । इसाल्लोपोऽश्रि-न्ययोरित्यकारलोपः । वेङ्गणकथेति पाचिकः खेरीङ् । स्वयम् इच्छया च प्रबुद्धः । बुध्यौङ् वेदने पदस्तनौण्धेप्यायेत्यस्याप्रवृत्तिपक्षे सिः । तस्य इगुड्भंढीस्य-निमिति किच्वात् गुणाभावः । झसस्वादिति सेर्लोपः । ढभात्तथोरिति धः । झपझसोरिति धस्य दः । खेः सन्वदिति दीर्घः । प्रच्छौश ज्ञीप्से । अनिम्त्वाद् त्रिः, षढोः कः ॥ ५ ॥ भ०

त इत्यादि । ते राक्षसा यथोक्ताः सन्तः अभाषिषत भाषितवन्तः । हे क्षण-दाचर ! राजा रावणः त्वां दिदृक्षुः द्रष्टुमेषणशील इति न लोकेति षष्ठीप्रतिषेधः । स कुम्भकर्णः श्रुत्वा अज्ञासीत् ज्ञातवान् । यमरमेत्यादिना सुगिटौ । व्यलिपत् समालिप्त-वान् । लिपि-सिचीत्यङ् । मांसमप्सासीत् । प्सा भक्षणे । वारुणीम् अपात् पीतवान् । गाति-स्थेति सिचो लुक् ॥ ६ ॥ ज० म०

तेऽभाषिषतेत्यादि । ते पृष्टा निशाचरा भाषितवन्तः । भाषङ् वाचि मान्तो-ऽदन्तः । किमित्याह—हे क्षणदाचर ! राजा रावणः त्वां द्रष्टुमिच्छुः । ढघेक्तेत्यादौ उदन्तक्षद्वर्जनात् न कर्मणः षष्ठी । स कुम्भकर्णः ज्ञातवान् । ष्णा ल शोचने । भ्वाद्या-दीति षस्य सत्वे तन्निमित्तस्य णस्य नत्वं, ष्यां सिः रुदादास्तीति इम्, यम-रमेति इम्सनौ, भसस्वाज्झसीति सेर्लोपः, इष्टे वेष्टे । अनेकार्थत्वात् स्नानमप्याहेत्यन्ये,

न्यवसिष्ट ततो द्रष्टुं रावणं प्रावृतत् गृहात्।
राजाऽऽयान्तं तमद्राक्षीदुदस्थाच्चेषदासनात् ॥ ७ ॥
अतुषत् पीठमासन्ने निरदिक्षच्च काञ्चनम्।
अस्मेष्ट कुम्भकर्णोऽत्यमुपाविक्षदथान्तिके ॥ ८ ॥

स्नातः सन्। व्यलिपत् चन्दनानुलेपनं कृतवान्। लिप लिपौञप लेपे, वक्तास्येत्यादिना ङः। मांसम् अघासीत् भक्षितवान्। घ्सा ल भक्षणे। वारुणीं मदिराम् अपात्। पा पाने। भू-स्था-पिबेति सेर्लुक् ॥ ६ ॥ भ०

न्यवसिष्टेत्यादि। ततो रावणं द्रष्टुं न्यवसिष्ट पूर्वं निवसितं वसनं त्यक्त्वा अन्यत् वस्त्रं परिदधाति स्म। गृहात् स्वस्मात् अप्रावृतत् प्रवृत्तः, द्युद्भ्यो लुङीति परस्मैपदं, पुषादित्वादङ्। तम् आयान्तं राजा अद्राक्षीत् दृष्टवान्। सृजिदृशोरित्यम् हलन्तलक्षणा वृद्धिः। आसनाच्च ईषत् उदस्थात् उत्थितः। ऊर्द्धकर्मकत्वादात्मनेपदं न भवति ॥ ७ ॥ ज० म०

न्यवेत्यादि। कुम्भकर्णो न्यवसिष्ट राजदर्शनोचितवस्त्रं परिहितवान्। वस लङ् स्तुतौ। ततोऽनन्तरं स्वकीयाद् गृहात् रावणं द्रष्टुं प्रवृत्तः। वृत ङ्वृत्तु वर्त्तने, शासलिद्युदिति द्युतादित्वात् ङः, तेनैव पम्। राजा रावणः तम् आगच्छन्तम् अद्राक्षीत् दृष्टवान्, दृहँशी प्रेक्षे, इरित्त्वात् पाक्षिकोङः, तदभावे ष्यां सिः, इण्ससोऽनिमिजुङ् इत्यादौ दृशवर्जनान्न सक्, वद्रोऽकिति च्टद्रः अनिमूलाद् व्रजवदेति वृिः, शच्छाजिति षङ्, षढ़ोः कः, किलादिति षः। दृष्ट्वा आसनात् ईषदुत्थितः। उत्पूर्वतिष्ठतेरूर्द्धचेष्टायां पम्। उदोऽनूर्द्धेहे इत्युक्तेः भू-स्था-पिबेति सेर्लुक् ॥ ७ ॥ भ०

अतुषदित्यादि। दृष्ट्वा चातुषत् तुष्टः। पुषादित्वात् ङः। आसन्ने चात्मनः काञ्चनं पीठं निरदिक्षत् आदिष्टवान्। दिशिः शल इगुपधादनिटः क्स इति क्सः। अथानन्तरं कुम्भकर्णः अस्मेष्ट ईषत् हसितवान्। स चार्थो येनायमादर इति अन्तिके च अस्य काञ्चनं पीठमध्यास्य पीठे उपाविक्षत् उपविष्टः। पूर्ववत् क्सः ॥ ८ ॥ ज० म०

अतुषदित्यादि। दृष्ट्वा अतुषत् तुष्टोऽभूत्। तुषल्ठयोञि च। चकारात् तुष्टौ पुषादित्वात् ङः, लितोङष्टीपेइरितस्तु वेत्यनेनैवेष्टसिद्धौ पूर्वाचार्य्यक्रमदर्शनात्। शासलिदद्युतपुषादेरित्यादिसूत्रस्य तथाकरणे मुग्धबोधस्य कविकल्पद्रुमात् प्राक् कृतत्वात् गौरवं न वाच्यम्। एवमन्यत्रापि अवधेयम्। आसन्ने आत्मन आसन्ने समीपदेशे

अवादीन्मां किमित्याह्वो राज्ञा च प्रत्यवादि सः ।
मा ज्ञासीस्त्वं सुखी रामो यदकार्षीत् स रक्षसाम् ॥ ९ ॥
उदतारीदुदन्वन्तं पुरं नः परितोऽरुधत् ।
व्यद्योतिष्ट रणे शस्त्रैरनैषीद्राक्षसान् क्षयम् ॥ १० ॥

---

काञ्चनं पीठम् आदिष्टवान्, दिशेः इगुपधात् अनिमिलुङ् इति लङ् घटोः कः से, काञ्चनस्य विकार इति विकारसङ्केति षः। अनन्तरं कुम्भकर्णोऽल्पम् असोष्ट स्मितं चकार स्मिङ् स्मिते। यद्यपि स्मितम् ईषद्धसनं तथापि राजसान्निध्ये स्मितस्याप्यनौचित्यादनुपलभ्यमानहसनायाल्पम् इत्युक्तं, हास्यमात्रेऽपि स्मितमिति केचित्। स्मितोत्पत्तिः कार्य्यवशात्ताद्दशादरदर्शनात् नेमकाजादिति इमनिषेधः। अन्तिके रावणसमीपे उपविष्टवान्। अर्थात् काञ्चनपीठे। विद्यासागरस्तु अल्प रावणपीठापेक्षया स्वल्पं काञ्चनपीठमुपाविक्षदित्याह, तन्न साधु आधारप्रसङ्गात्, शो विश प्रवेशे उपपूर्व आसने ॥ ८ ॥ भ०

अवादीदित्यादि। तत उपविश्य तम् अवादीत् उक्तवान्, व्रजेत्यादिना वृद्धिः। किमिति कस्मात् कारणात् माम् आह्वः आहूतवान् लिपि-सिचि-ह्वश्चेत्यङ् आतोलोपः। राज्ञा च स कुम्भकर्णः प्रत्यवादि प्रत्युक्तः कर्मणि लुङ् चिण् भावकर्मणोरिति चिण् चिणोलुगिति तलोपः। सुखी त्वं येन रामो रक्षसां यत् अकार्षीत् तत्त्वं नाज्ञासीः न ज्ञातवानसि, यमरमेति सुगिटौ ॥ ९ ॥ ज० म०

अवादीदित्यादि। उपविश्य कुम्भकर्णो रावणम् अवादीत् उक्तवान्, वदं वाचि व्रजवदेति वृः। किमवादीदित्याह किमिति कस्मात् कारणात् त्वं माम् आह्वः आहूतवान्। ह्वेञ् स्पर्द्धे वक्ष्यस्येति ङः, एचोऽशित्या उस्येचीत्यालोपः। राज्ञा रावणेन च स कुम्भकर्णः प्रत्यवादि प्रत्युक्तः रतनोर्यगिणावितीण् ञिणात्यन्तेलुङ्त इति वृः इणस्तनलोपः। स नरात्मा रामो रक्षसां यत् कृतवान् भयम् इत्यर्थात् तत्सर्वं सुखी त्वं न ज्ञातवान्। ज्ञा ग बोधने यमरमेति इम्सनौ कृञ् कृतौ कृञदडुकृतौ वा नेमिकाजिति इमनिषेधः, व्रजवदित्यादिना वृः ॥ ९ ॥ भ०

उदतारीदित्यादि। स ह्युदन्वन्तं समुद्रम् उदतारीत् उत्तीर्णः, सिचि वृद्धिः। नोऽस्माकं पुरं परितः समन्तात् अरुधत् आवृतवान् इरितोवेत्यङ्। रणे शस्त्रैः व्यद्योतिष्ट द्योतितवान्, द्युतादिर्लुङीति विकल्पेन परस्मैपदविधानादात्मनेपदम्। राक्षसान् क्षयं विनाशम् अनैषीत् नीतवान् ॥ १० ॥ ज० म०

न प्रावोचमहं किञ्चिन्प्रियं यावदजीविषम्।
बन्धुस्त्वमर्चितः स्नेहान्मा द्विषो न बधीर्मम ॥ ११ ॥
वीर्य्यं मा न ददर्शस्त्वं मा न त्रास्थाः क्षतां पुरम्।
तवाद्राक्ष्म वयं वीर्य्यं त्वमजैषीः पुरा सुरान् ॥ १२ ॥

---

उदतारीदित्यादि। राम उदन्वन्तं समुद्रम् उत्तीर्णवान् तृ तरेऽभिभवे प्लुत्यां क्यां सि., कदायसीति ईम्, वसीरस्येतौम्, व्रजवदेति व्रिः, झसस्यादिति सेर्लोपः। उदकं विद्यतेऽस्य इत्युदन्वान्, मनीषादित्वात् कस्य नत्वम्। अस्माकं पुरं परितः समन्तात् रुद्धवान्, रुधिरौञ् आवृतौ इरित्त्वात् शासलिद्युदित्यादिना पाचिकोङः। रणे शस्त्रैः विद्योतितवान्, द्युत लुङपि अपिशब्दात् द्युत्यां द्युतादेष्टीपे ङविधानात् पं गम्यते ङित्त्वान्मं भवत्येव, तेन क्यां द्युतादेरुभयपदित्वं मे सिरेव। राक्षसान् क्षयं नीतवान् णीञ् प्रापणे तत्त्वं नाज्ञासीरिति सम्बन्धः ॥ १० ॥ भ०

न प्रावोचमित्यादि। यावदजीविषं यावन्तं कालं जीवितः तावन्तं कालं कस्यचित् प्रियं किञ्चिन्न प्रावोचं नोक्तवान् अहमिति तव विदितमेव, किन्तु बन्धुस्त्वं स्नेहात् अर्थितः सन् मम सम्बन्धिनो द्विषः शत्रून् मा न बधीः मा न मारयेति किन्तु मारयेति, माङि लुङ् सर्वलकारापवादः। प्रावोचमिति वच उस् ॥ ११ ॥ ज० म०

न प्रावोचमित्यादि। यावन्तं कालम् अहं जीवितवान् तावन्तं कालं किञ्चित् प्रियं न प्रावोचं नोक्तवान् अपि प्रार्थयामि स्म इति भावः। सम्प्रति बन्धुस्त्वमिति कृत्वा स्नेहात् प्रार्थितोऽसि मम द्विषः शत्रून् त्वं मा न बधीः किन्तु मारय वचौ-वाचि वक्त्यस्येत्यादिना ङः वचस्यश्विपतामिति वोचादेशः, जीवप्राणे हन लौ गतौ बधे, माटौ वेति टौ। घौटौथौष्विति मायोगेऽमोऽभावः, हनबधष्टीति बधादेशः ॥ ११ ॥ म०

वीर्य्यमित्यादि। त्वं वीर्य्यं मा न दर्शः किन्तु दर्शय, ण्यन्तस्य चङि रूपम्। क्षतां परैः अवसादितां पुरं मा न त्रास्थाः किन्तु त्रायस्व, त्रैङ् पालने। न च त्वम् अशक्तः, यतः तव वीर्य्यम् अद्राक्ष्म दृष्टवन्तो वयं, न दृशः इति क्सादेशो न भवति। इरितो वेति विकल्पेनाङ्विधानात्तदभावपक्षे रूपम्। पुरा पूर्वं त्वं सुरान् देवान् अजैषीः जितवानसि ॥ १२ ॥ ज० म०

वीर्य्यमित्यादि। त्वं वीर्य्यं स्वसामर्थ्यं मा न दर्शः किन्तु दर्शय, दृशेर्ण्यन्ता-

अवोचत् कुम्भकर्णस्तं वयं मन्त्रेऽभ्यधाम यत् ।
न त्वं सर्वं तदश्रौषीः फलं तस्येदमागमत् ॥ १३ ॥
प्राज्ञवाक्यान्यवामंस्था मूर्खवाक्येष्ववास्थिथाः ।
अध्यगीष्ठाश्च शास्त्राणि प्रत्यपत्था हितन्न च ॥ १४ ॥

दङ् । त्वतां शरैः पीड़ितां पुरं लङ्कां मा न वास्थाः किन्तु वायस्व, वैङ् पालने । न त्वम् असमर्थः, यतः तव वीर्य्यं वयं दृष्टवन्तः, दृट् शौ प्रेचे इरित्वात् ङस्याप्रवृत्तिपचे सिः, वद्रौऽकिदिति ऋतीरः अनिमत्वात् व्रजवदेति व्रिः षङ्, षढ़ीः कः से । त्वं पुरा पूर्व्वस्मिन् काले सुरान् जितवान्, जि जये च ॥ १२ ॥ भ०

अवोचदित्यादि । इत्युक्तवन्तं तं रावणं कुम्भकर्णोऽवोचत् उक्तवान्, मन्त्रे मन्त्रणासमये क्रियासमारम्भगतोऽभ्युपाय इत्यादिना यत् वयम् अभ्यधाम अभिहितवन्तः, धाधातोर्गातिस्थेति सिचोलुक् । तत्सर्वं त्वं नाश्रौषीः न श्रुतवानसि, तस्याश्रवणस्य इदं फलं विनाशरूपम् आगमत् आगतं, गमेर्लृदित्वादङ् ॥ १३ ॥ ज० म०

अवोचदित्यादि । इत्युक्तवन्तं तं रावणं कुम्भकर्णं उक्तवान्, वचेः पूर्ववत् ङः वोचादेशश्च । मन्त्रे मन्त्रणायां वयं यदुक्तवन्तः तत्सर्वं त्वं न श्रुतवान्, तस्याश्रवणस्य इदं फलं विनाशरूपम् आगतं डु धाञ् लृधारणे पुष्टौ दानेऽभिपूर्वोभाषणे वर्त्तते भूस्थापिबदेन इति सेर्लुक् देत्यनेन दाधादेति दासंज्ञकस्य ग्रहणात् श्रुन्गतौ श्रुतौ ;नेमेकाजिति इमनिषेधः गम्लृ गत्यां लृदित्वात् ङः ॥ १३ ॥ भ०

प्राज्ञवाक्यानीत्यादि । प्राज्ञानां विभीषणादीनां वाक्यानि अवामंस्थाः अवज्ञातवानसि, मन ज्ञाने । मूर्खवाक्येषु प्रहस्तादिवाक्येषु अवास्थिथाः अवस्थितोऽसि समवप्रविभ्यः स्थ इति तङ्, स्थाघ्वोरिच्चालश्च । शास्त्राणि अध्यगीष्ठा अधीतवानसि विभाषा लुङ्लृङोरिति इङोग्यादेशः । न च हितं प्रत्यपत्थाः प्रतिपन्नवानसि, पद गतौ झलोझलीति सिचोलोपः ॥ १४ ॥ ज० म०

प्राज्ञवाक्यानीत्यादि । त्वं प्राज्ञानां विभीषणादीनां वाक्यानि अवामंस्थाः अवज्ञातवान्, मनदुङ्बोधे । मूर्खाणां प्रहस्तादीनां वाक्येषु अवस्थितोऽसि प्रतिज्ञानिर्णयेत्यादिना अवपूर्वतिष्ठतेर्मं, स्थादोर्ङिरिति ङिः गुणाभावश्च झस्वान्झलीति सेर्लोपः । शास्त्राणि अधीतवानसि किन्तु हितं न प्रतिपन्नवानसि अधीङ्लध्ययने ;अभ्युपसर्गोपादानं सहप्रयोगनियमार्थं गीङ्ष्टौथ्योर्वेति ग्यादेशः

मूर्खास्त्वामववञ्चन्त ये विग्रहमचीकरन्।
अभाणीन्माल्यवान् युक्तमचंस्थास्त्वन्न तन्मदात् ॥ १५ ॥
राघवस्यामुषः कान्तामाप्तैरुक्तो न चार्पिपः।
मा नानुभूः स्वकान् दोषान् मा मुहोमा रुषोऽधुना ॥ १६ ॥

दीर्घादेशो गुणाभावः स्पष्टार्थः घत्वान्नणुरित्युक्तञ्च यौपदङ् गतौ भ्रस्स्वान्भ्रसीति सलोपः ॥ १४ ॥ भ०

मूर्खा इत्यादि। मूर्खाः सर्व एवैते त्वाम् अववञ्चन्त विप्रलब्धवन्तः, वञ्चु-प्रलम्भने ण्यन्तस्य गृधिवञ्च्योत्यादिना तङि चङि रूपम्। ये विग्रहम् अची-करन् कारितवन्तो भवन्तम् एष मातामही माल्यवान् युक्तम् अभाणीत् भणित-वान्, भणशब्दे इट ईटीति सिचोलोपः। तत् त्वं मदान्न अचंस्थाः न सोढ़वानसि चमू सहने ॥ १५ ॥ ज० म०

मूर्खास्त्वामित्यादि। ये प्रहस्तादयो विग्रहं कारितवन्तः ते मूर्खाः त्वां वञ्चित-वन्तः, माल्यवान् यद्युक्तं न्याय्यम् उक्तवान् त्वं मदान्न सोढ़वान्, वन्च ङक वञ्चने प्रतारे वञ्चिगर्द्धेरिति मं, ञिश्रीत्यङ्क्तञीञन्तादङ् आद्ध्युङःस्व इति ङ्स्वत्वे खेः सन्वङ्गे इति सन्वत् ख्यस्येत्सनीति इत्त्वं हसादेर्घश्चेति दीर्घत्वम्। भण च चका-रात् शब्दे हसादेः सेम इति पचे त्रिः, चमू ङ्ञिषच चकारान्मर्षे ऊदित्वाद्दमू-दित्स्वरेत्यस्याप्रवृत्तिपचे स्नोर्नुः ॥ १५ ॥ भ०

राघवस्येत्यादि। प्रमादित्वमपि तेऽस्ति, यतो राघवस्य कान्ताम् अमुषः खण्डि-तवानसि, खण्डनञ्चास्या इदं यद्भर्त्रा वियोजनं, मुष खण्डने पुषादित्वादङ् पुषा-दयश्च गणान्ता गृहीताः, आप्तैः विभीषणादिभिः उक्तो न चार्पिपः नार्पित-वानसि कान्ताम्, अर्त्तर्णौ अर्त्तिह्रीत्यादिना पुगन्तगुणः, चङि द्विर्वचने चौति स्थानिवद्भावादजादेर्द्वितीयस्येति पिशब्दो द्विरुच्यते, रेफस्य नन्द्रा इति प्रतिषेधः। तत् अधुना स्वकान् आत्मीयान् दोषान् दुश्चरितानि मा नानुभूः अपि तु अनुभव माङि लुङ् गातिस्थेति सिचो लुक्। मा मुहः मोहं मा गमः, मा रुषः रोषं मा कार्षीः, मुहिरुषिभ्यां पुषादित्वादङ् ॥ १६ ॥ ज० म०

राघवस्येत्यादि। प्रमादित्वमपि तवास्ति, यतस्त्वं राघवस्य कान्ताम् अमुषः अपहृतवान्, मुष्य इ च्छिदि, अनेकार्थत्वादपहारार्थः, कान्तावियोजनमेव वाच

तस्याप्यत्यक्रमीत् कालो यत्तदाहमवादिषम् ।
अघानिषत रक्षांसि परैः कोषांस्त्वमव्ययीः ॥ १७ ॥
सन्धानकारणं तेजो न्यगभूत्तेऽक्रथास्तथा ।
यत्त्वं वैराणि कोषञ्च सहृदण्डमजिग्लपः ॥ १८ ॥

छेदः, शासलिद्युदित्यादिना पचे ङः । आप्तैः विभीषणादिभिः उक्तोऽपि त्वं तां न चार्पितवानसि, ऋ लि गत्यां ऋ प्रापणे च क्लीव्लीरीत्यादिना पन् णश्च, नाजन्तादेरादिर्द्विः, स्यादौनवद्धीऽये इति वचनात् पौत्यस्य द्वित्वं ञेर्लोपः । अधुना स्वीयान् दोषान् आत्मीयचेष्टितानि मा न अनुभूः किञ्च अनुभव, अनुपूर्वभवतेर्भस्यापिवेति सेर्लुक् । त्वं मा मुहः मोहं मा गमः, मा रुषः रोषं माकार्षीः, मुह्यूञि वैचित्त्ये रुषिर्ञि क्रुधि आभ्यां शासलिद्युदिति ङः ॥ १६ ॥ भ०

तस्येत्यादि । यत् तदा तस्मिन् कालेऽहम् अवादिषम् अभिहितवानस्मि रामः सन्धीयतामिति तस्यापि सन्धेः कालोऽत्यक्रमीत् अतिक्रान्तः, स्नुक्रमोरनात्मनेपदनिमित्त इतीट्, मान्तत्वादवृद्धिप्रतिषेधः । यतः परैः शत्रुभिः रक्षांसि अघानिषत हतानि, चिण्वद्भावाद्द वृद्धिघत्वे । त्वञ्च कोषान् अव्ययीः त्यक्तवानसि लङ्कादाहे तस्यारचितत्वात्, व्यय वित्तसमुत्सर्ग इति चुरादौ पठ्यते यदा आधृषाद्वेति णिज् नास्ति तदा रूपं, ह्यन्तत्वाद्द वृद्धिप्रतिषेधः, व्ययगतावित्यस्यापि रूपम्, अनेकार्थत्वाद्धातूनामुत्सर्जनेऽपि द्रष्टव्यम् ॥ १७ ॥ ज० म०

तस्येत्यादि । तस्मिन् काले तव यत् अहम् अवादिषं रामेण सह सन्धिः क्रियताम् इत्युक्तवानस्मि तस्यापि सन्धेः कालोऽतिक्रान्तः, यतः परैः शत्रुभिः रक्षांसि हतानि, त्वं कोषद्रव्यं व्ययितवानसि । लङ्कादाहे तस्यारक्षणात् वीरेभ्यः प्रदानाच्च क्रम्य क्रमु गतौ हसादेः सेम इत्यादौ मान्तवर्जनान्न ञिः, वदेर्व्रजवदेति ञिः, हन्तेः कर्मणि हनग्रहदृशश्च इति मिण्, हनस्तङित्यादौ इण्वर्जनान्न तङ्, खेर्ह्रोधोर्ञ्णिति चेति घः मान्तोऽदनत इत्यत्, व्ययश्च गत्याम् अनेकार्थत्वात् व्ययार्थेऽपि यान्तत्वान्न ञिः ॥ १७ ॥ भ०

सन्धानेत्यादि । तथा त्वम् अक्रथाः कृतवानसि, तनादिभ्यस्तथासोरिति सिचोलुक् । यथा सन्धानकारणं सन्धानहेतुकं यत् तव तेज प्रचण्डत्वं तत् न्यगभूत् न्यग्भूतं, गातिस्थेति सिचोलुक् । कुत इत्याह यत् त्वं वैराणि शत्रु-

अक्रुधच्चाभ्यधाद्वाक्यं कुम्भकर्णं दशाननः।
किं त्वं मामजुगुप्सिष्ठा नैदिधः स्वपराक्रमम्॥ १९॥
मोज्जिग्रहः सुनीतानि मास्म क्रंस्था न संयुगे।
मोपालब्धाः कृतैर्दोषैर्मा न वाचीर्हितं परम्॥ २०॥

भावान् कोषञ्च सह दण्डं ससैन्यम् अजिग्लपः ग्लपितवानसि, ग्लायतेर्णौ पुकि ग्लास्नावनुवमाञ्चेति मित्त्वात् ह्रस्वत्वं ग्लपयतेश्चङि रूपम्। यदि हि तेजो भवेत् सर्वं तथावस्थितमेव स्यात्। ततश्च तेजसोऽभावात् कथं सन्धानं द्वयोः परस्परानुपतापात्। यथोक्तम्, यावन्मात्रमुपकुर्य्यात् तावन्मात्रमेवास्य प्रत्युपकुर्य्यात्। तेजो हि सन्धानकारणं, तप्तं लोहं तप्तेन लोहेन सन्धत्त इति ॥ १८॥ ज० म०

सन्धेत्यादि। त्वं तथा अक्रथाः कृतवानसि यथा सन्धानकारणं तव तेजो न्यग्भूतं, कोहि तेजस्विना सन्धिं करोति कृञ इगुङ्र्मढोति से: कित्त्वाद् गुणाभावः भसस्वादिति सिलोपः। यद् यस्मात् त्वं वैराणि वीरभावान् वीरयोग्यानि दुर्गाणि वा शतुत्वानि वा सह दण्ड सैन्येन सह कोषञ्च ग्लपितवानसि, ग्लै क्षमे ञिः क्रीव्लीति पन्॥ १८॥ भ०

अक्रुधदित्यादि। अथ एवमुक्ते दशाननः अक्रुधत् क्रुद्धवान्, पुषादित्वादङ्। क्रुद्धश्च कुम्भकर्णम् अभ्यधात् अभिहितवान्, गातिस्थेति सिचोलुक्। किमिति त्वं माम् अजुगुप्सिष्ठाः निन्दितवानसि स्वविक्रमं नैदिधः न वर्द्धितवानसि, एधधातोर्ण्यन्तस्य चङि स्थानिवद्भावादजादेर्द्वितीयस्येति धि शब्दो द्विरुच्यते॥ १९॥ ज० म०

अक्रुधदित्यादि। एवमुक्तो दशाननोऽक्रुधत् क्रुध लृयो कोपे, पुषादित्वात् ङः। कुम्भकर्णञ्च उक्तवान् डु धाञ् लृ धारणे पुष्टौ दाने टो भूस्थापिबेति सेर्लुक्। किमभ्यधादित्याह किं त्वं मां निन्दितवानसि, गुपुङ गोपनकुत्सनयोः कित्तिजगुप इति सन् निन्दायां निशानार्जवनिन्दासु इत्युक्तेः। स्वपराक्रमं किं न वर्द्धितवानसि एधङ् वृद्धौ आन्तादङ् द्वित्वञ्च॥ १९॥ भ०

मोज्जिग्रह इत्यादि। सुनीतानि सुनयान् मा उज्जिग्रहः मा उदग्राहय, ग्रहेर्ण्यन्तस्य चङि रूपम्। संयुगे युद्धे विषयभूते मा क्रंस्था मा उत्साहं न कार्षीः अपितु सहस्व, स्मोत्तरे लङ्चेति चकाराल्लुङ्, वृत्तिसर्गेत्यादिना क्रमेः सर्गे उत्साहे

कुम्भकर्णस्ततोऽगर्जीद्भटांश्चान्यान् न्यवीवृतत्।
उपायंस्त महास्त्राणि निरगाच्च द्रुतं पुरः॥ २१॥
मूर्ध्ना दिवमिवालेखीत् खं व्यापद्वपुषोरुणा।
पादाभ्यां क्ष्मामिवाभैत्सीत् दृष्ट्वाधाक्षीदिव द्विषः॥ २२॥

---

तङ्। दोषैः अस्मत्कृतैः मोपालब्धाः मोपालभस्व, झलोझलीति सिचो लोपः झषस्तथोर्धोऽधः झलाञ्जश्। छितं परं कार्य्यस्य मा न वाचीः मा न वह, किन्तु वह, वहेरनिटी हलन्तलक्षणा वृद्धिः, ढत्वकत्वषत्वानि॥ २०॥ ज० म०

मोज्झिग्रह इत्यादि। शोभनानि नीतानि न उद्ग्राहय ग्रहेर्ण्यन्तादङ्। प्रस्तुतमुपन्यसन्नाह संयुगे युद्धविषये मास्म न क्रंस्थाः, किन्तु अवश्यम् उत्साहं कुरु, मास्मेन घोव्यौ इति सर्वकाले टौ वृत्युत्सादतायने क्रम इति मं, सुक्रमोऽमे इति मवर्जनादिमोऽभावः। कृतैर्दोषैः मा उपालब्धाः नोपलभस्व, न भर्त्सयेत्यर्थः। लभङ्लौङ्ष प्राप्तौ झसस्वाज्झसीति सिलोपः। छितं युद्धं परं मा न वाचीः अपितु अवश्यं वहेति भावः। वहैञो प्रापणे अनिमत्वाद् त्रिः ह्रोढः षढोः कः॥ २०॥ भ०

कुम्भकर्ण इत्यादि। ततः तद्वचनानन्तरं कुम्भकर्णोऽगर्जीत् गर्जितवान्, अन्यांश्च भटान् पृष्ठतो गच्छतो न्यवीवृतत् निवर्त्तितवान्, वृतेश्चङ्परे णावुपधाया उदित्यपवाद ऋकारादेशः। महास्त्राणि उपायंस्त स्वीकृतवान्, औपचारिकमत्र स्वीकरणं, तेन तङ् यदि वा उपाङ्पूर्वाद् यमेः समुदाङ्भ्योयमोऽग्रन्थ इति तङ्। पुरश्च लङ्कातः द्रुतं निरगात् निर्गतः, इणो गादेशः, गातीति सिचो लुक्॥ २१॥ ज० म०

कुम्भकर्ण इत्यादि। ततो रावणवाक्यानन्तरं कुम्भकर्णो गर्जितवान्, गर्जोर्जशब्दे। अन्यात् भटान् योद्धुमुद्यतान् निवर्त्तयामास, वृतेर्ण्यन्तादङ्। महास्त्राणि उपायंस्त स्वीचकार, यमौ विरतौ उपयमो विवाहे इति मं, विवाहः स्वीकार इति व्याख्यातं यमः सूचने वातूद्वाहे इति पक्षे सेः किस्वाभावात् मलोपाभावः, किं वा आङ्पूर्वस्य यमोञ्ज्यिग्रन्थेत्यादिना मम्। पुरो लङ्कायाः सकाशात् शीघ्रं निर्गतः इणोगा भूस्थापिबेति सेर्लुक्॥ २१॥ भ०

मूर्ध्नेत्यादि। निर्गच्छन् मूर्ध्ना दिवम् अलेखीदिव लिखितवानिव। उरुणा महता वपुषा खं व्यापत् व्याप्तवान्, लृदित्वादङ्। क्ष्मां पृथ्वीं पादाभ्याम् अभैत्सीदिव विदारितवानिव, द्विषः शत्रून् दृष्ट्वा अधाक्षीदिव भस्मसात् कृतवानिव, दह भस्मीकरणे॥ २२॥ ज० म०

दग्धशैल इवाभासीत् प्राक्रंस्त क्षयमेघवत् ।
प्राचकम्पदुदन्वन्तं राक्षसानप्यतित्रसत् ॥ २३ ॥
सपक्षोऽद्रिरिवाचालीत्र्यश्वसीत् कल्पवायुवत् ।
अभार्षीद् ध्वनिना लोकानभ्राजिष्ट क्षयाग्निवत् ॥ २४ ॥

मूर्ध्नेत्यादि। स गच्छन् मूर्ध्ना दिवम् आकाशं स्पृष्टवानिव, लिखश लेखने। उरुणा महता वपुषा शरीरेण खम् आकाशं व्याप्तवानिव, आप्लृ लौकि व्यापने लृदित्वात् ङः। चरणाभ्यां क्ष्मां भूमिं भिन्नवानिव, अधौ भिदिर्भिदि ङाभावपक्षे सिः अनिमत्वादव्रिः। दर्शनमात्रेणैव शत्रून् दग्धवानिव, दहौ दाहे दादेर्धः झभान्तस्यादि-जवामिति धः झपझसीरिति कः ॥ २२ ॥ भ०

दग्धेत्यादि। महत्त्वात् कृष्णत्वाच दग्धशैलवत् अभासीत् भाति स्म, भा दीप्तौ यमरमेति सगिटौ। क्षयमेघवत् प्राक्रंस्त प्रस्थितः, प्रोपाभ्यां समर्थाभ्यामिति तङ्। प्रतिष्ठमानश्च उदन्वन्तम् अचकम्पत् कम्पितवान्, कपि चलने इदितोण्यन्तस्य चङि रूपम्। राक्षसानपि अतित्रसत् त्रासितवान्, त्रसेर्ण्यन्तस्य चङि रूपम् ॥ २३ ॥ ज०म०

दग्धेत्यादि। अतिकृष्णत्वात् महत्त्वाच्च दग्धपर्वत इव स भाति स्म, भा लष दीप्तौ यमरमेति इम्सनौ। प्रलयसम्बन्धिमेघ इव प्रक्रमते स्म, प्रोपादारम्भ इति मम्। गच्छन् समुद्रमपि कम्पितवान्, कपि ङ् विचाले अन्तादङ्। न केवलं कपीन् राक्ष-सानपि त्रासयामास, त्रसेर्अन्तादङ् ॥ २३ ॥ भ०

सपक्ष इत्यादि। सपक्ष इवाद्रिः वाह्वोः पक्षानुकारित्वात् अचालीत् चलितः लान्तत्वात्सिचि वृद्धिः। क्रोधात् कल्पान्तवायुवत् न्यश्वसीत् निश्वसितवान्, ह्यान्तेति वृद्धिप्रतिषेधः। ध्वनिना लोकान् अभार्षीत् पूरितवान्, भृञ भरणे ईडन्तस्य सिचि वृद्धिः। अभ्राजिष्ट भ्राजते स्म क्षयाग्निवत् पिङ्गलकेशत्वात् लोकविनाशहेतुत्वाच्च ॥ २४ ॥ ज० म०

सपक्ष इत्यादि। स पक्षयुक्तः पर्वत इव चलितः वाह्वोः पक्षतुल्यत्वात्, चले-र्ब्रजवदेत्यादिना व्रिः। प्रलयवायुरिव निश्वासं चकार, ह्रसादेः सेम इत्यादौ श्वस-वर्जनात् न व्रिः। ध्वनिना लोकत्रयं पूरितवान्, भृ लिट्डुञ् भृतिपुष्ण्योः, नेमेकाजिति अनिम्। प्रलयाग्निरिव भ्राजते स्म, लोकविनाशकत्वात् पिङ्गलकेशाच्च भ्राजृ ङ्-णट्चराज्ञासि ॥ २४ ॥ भ०

अनंसीत् भूर्भरेणास्य रंहसा शाखिनोऽलुठन् ।
सिंहाः प्राद्रुवन् भीताः प्राक्षुभन् कुलपर्वताः ॥ २५ ॥
उत्पाताः प्रावृतंस्तस्य द्यौरशीकिष्ट शोणितम् ।
वायवोऽवासिषुर्भीमाः क्रूराश्चाकूषत द्विजाः ॥ २६ ॥
अस्पन्दिष्टाक्षि वामञ्च घोराश्चाराटिषुः शिवाः ।
न्यपप्तन् मुषले गृध्रा दीप्तयापाति चोल्कया ॥ २७ ॥

अनंसीदित्यादि । अस्य भरेण भूः अनंसीत् नता, यमरमेति सगिटौ । रंहसा वेगेन शाखिनो वृक्षा अलुठन् पतिताः, रुठ लुठ प्रतिघाते, द्युतादित्वादङ्, द्युतादीना-मनुदात्तेत्त्वात्तङ् दुद्भ्यो लुङीति परस्मैपदविकल्पः । सिंहाः भीताः सन्तः प्राद्रुवन् पलायिताः, णिश्रीत्यादिना चङ् । कुलपर्वताः प्राक्षुभन् सञ्चलिताः, द्युतादित्वा-दङ्, पूर्ववन्नात्मनेपदम् ॥ २५ ॥ ज० म०

अनंसीदित्यादि । अस्य भरेण भूः नमति स्म, यम रमेति इम् सनौ । अस्य रंहसा वेगेन शाखिनो वृक्षाः पतिताः, लृलुच्य विलोटविलोडयोः, लृदित्त्वात् ङः ठान्तपाठे द्युतादित्वात् ङः तेनैव पम् । सिंहाः भीताः सन्तः पलायिताः द्रु श्रु गतौ णिश्रिद्रुश्रुकम इति अङ् । कुलपर्वताः क्षोभं प्रापुः क्षुभ ङ् सञ्चले द्युतादित्वात् ङः ॥ २५ ॥ भ०

उत्पाता इत्यादि । तस्य गच्छत उत्पाताः प्रावृतन् प्रवृत्ताः, वृतु वर्त्तने द्युतादिः द्यौः शोणितम् अशीकिष्ट सिञ्चति स्म, शीकृ सेचने अनुदात्तेत् । वायवो भीमाः प्रचण्डा अवासिषुः वान्ति स्म, यमरमेति सगिटौ । क्रूराश्च अशुभसूचका द्विजाः पक्षिणोऽकूषत शब्दिताः, कुङ शब्द इत्यनिट् ;कुटादित्वात् सिचः कित्त्वे न गुणः ॥ २६ ॥ ज० म०

उत्पाता इत्यादि । गच्छतः तस्य उत्पाता विनाशसूचकाः प्रवृत्ताः, द्युतादित्वात् ङः । द्यौः आकाशं शोणितं क्षरति स्म, शीकृ, ङ् सेके । भीमाः प्रचण्डा वायवः वान्ति स्म, वा ल गमनहिंसयोः, यमरमेति इम्सनौ अनुस्विदै: । क्रूरा भयदा द्विजाः पक्षिणश्च शब्दं चक्रुः, कूषिङ् आर्त्तस्वरे, कुटां चञ्चोञ्णितीति नियमाद्गुणाभावः नेमेकाजिति अनिम् ॥ २६ ॥ भ०

अस्पन्दिष्टेत्यादि । वामश्च अस्याक्षि अस्पन्दिष्ट स्पन्दते स्म, घोराः अनिष्टाशंसिन्यः

आंहिष्ट तानसंमान्य दर्पात्स प्रधनक्षितिम्।
ततोऽनर्दीदनन्दीच्च शत्रूनाह्वास्त चाहवे॥ २८॥
प्राशीन्न चाव्यपत् क्रूरः क्षुधास्यावृधदश्नतः।
अधाद्वसामधासीच्च रुधिरं वनवासिनाम्॥ २९॥

शिवाः अराटिषुः रटन्ति स्म, अतोहलादेरिति वृद्धिविकल्पः। गृध्रा मुषले न्यपप्तन् उपविष्टवन्तः, लृदित्वादङ्, पतेः पुमिति पुमागमश्च। दीप्तया उल्कया अपाति पतितं भावे चिणादेशः॥ २७॥ ज० म०

अस्यन्दिष्टेत्यादि। अस्य वामम् अक्षि स्पन्दते स्म, स्पदि ङ् ईषत्कम्पे। क्रूराः भीमाः शृगालाः शब्दं चक्रुः रट वाचि इत्यादेः सेम इति त्रिः। मुषले गृध्राः पतिताः पत्लृ ञ गत्यां लृदित्वात् ङः, वच्यस्यश्विपतामिति पत्तादेशः। दीप्तया उल्कया च पतितं, रतनीर्यगिणाविति भावे इण्, इनस्तनलोपः॥ २७॥ भ०

आंहिष्टेत्यादि। तान् उत्पातान्, कुम्भकर्णोऽसंमान्य दर्पात् अवज्ञाय प्रधनक्षितिं युद्धभूमिम् आंहिष्ट गतवान्, तत उत्तरकालम् अनर्दीत् गर्जितवान्। क्व यास्यतीदानीमिति अनन्दीच्च जयश्रियं श्लाघितवानित्यर्थः। आहवे संग्रामे शत्रून् आह्वास्त आहूतवान् आगच्छत युध्यध्वमिति, स्पर्द्धायामाङिति तङ्, आत्मनेपदेष्वन्यतरस्यामित्यङभावपक्षे रूपम्॥ २८॥ ज० म०

आंहिष्टेत्यादि। स कुम्भकर्णः तान् उत्पातान् दर्पात् असंमान्य प्रधनक्षितिं रणस्थलीम् आंहिष्ट गतः, अहि, ङ गतौ मान किचार्च इत्यस्मात् क्लाच्। ततोऽनर्दीत् सिंहनादं चकार, नर्द शब्दे। अनन्दीत् आनन्दयुक्तो बभूव। आहवे युद्धे शत्रून् आहूतवान्, स्पर्द्धायामाङ् इति मं, वक्ष्यस्येति पाक्षिकोऽङस्तदभावे सिः॥ २८॥ भ०

प्राशीदित्यादि। प्राशीत् भक्षितवान् वनवासिन इत्यर्थात्, न चासौ क्रूरः दुष्टचेता अव्यपत् व्यथवान्, पुषादित्वादङ्। अश्नतोऽप्यस्य खादतः क्षुत् बुभुक्षा अवृधत् वर्द्धते स्म, वृधु वृद्धौ द्युतादिः। वनवासिनां वानराणां वसाम् अधात् पीतवान्। विभाषा घ्रा-धेङिति सिचोलुक्पक्षे रूपम्। रुधिरश्चाधासीत् विभाषा धेट् श्व्योरिति चङभावपक्षे रूपम्॥ २९॥ ज० म०

प्राशीदित्यादि। प्राशीत् भक्षितवान् कपीन् इत्यर्थात्, अश ग् भोजने। असौ

मांसेनाश्वाश्वतां कुक्षी जठरं चाप्यशिश्वियत् ।
बह्वनामम्लुचत् प्राणानम्लोचीच्च रणे यशः ॥ ३० ॥
सामर्थ्यञ्चापि सोऽस्तम्भीद्विक्रमञ्चास्य नास्तभन् ।
शाखिनः केचिदध्यष्ठुर्न्यमाङ्क्षुरपरेऽम्बुधौ ॥ ३१ ॥

---

क्रूरो दुष्टाशयो न तृप्तः जिल तृष्युङ्ककारात् प्रीणने पुषादित्वात् ङः । अश्वतः खादतोऽप्यस्य क्षुत् बुभुक्षा वर्द्धते स्म, वृध ङ्लृ वृद्धौ द्युतादित्वात् ङः । असौ वनवासिनां वानराणां वसां पपौ, रुधिरञ्च अधासीत् पपौ, धेट पाने, धेश्राच्छासाश्च इति पक्षे सिलुक्, तदभावपक्षे यमरमेति इम्सनौ, झसस्वादिति सिलोपः ॥ २९ ॥ भ०

मांसेनेत्यादि । वनवासिनां मांसेन अस्य कुम्भकर्णस्य कुक्षी उदरपार्श्वौ अश्वतां शूनौ, जृस्तम्भित्यादिना अङ्,श्वयते र इत्यलम् । जठरञ्च उदरम् अशिश्वियत् शूनं विभाषाधेट्श्व्योरिति चङ् इयाजादेशः । बहूनां वनवासिनां प्राणान् अम्लुचत् हृतवान् । ग्रुचु म्लुचु कुजु खुजु स्तेयकरणे, जृस्तम्भित्यादिना अङ्विकल्पनादङभावपक्षे रूपम् । यशश्च बहूनां रणे अम्लोचीत् अपनीतवान्, चम्लुवच्चित्यादौ म्लुचिर्गत्यर्थः अङभावपक्षे रूपम् ॥ ३० ॥ ज० म०

मांसेनेत्यादि । अस्य कुम्भकर्णस्य कुक्षी उदरपार्श्वौ वानरादीनां मांसेन अश्वतां शूनौ, टुओशौ श्वीर्गतिवृद्धोः, शासलिद्युदित्यादिना पक्षे ङः, वच्यस्यश्विपतामिति श्वादेशः । अस्य जठरम् उदरञ्च आशिश्वियत् वव्रधे, जिश्वीत्यादिना पक्षेऽङ् । असौ बहूनां प्राणान् अम्लुचत् जहार, रणे बहूनां यशोऽम्लोचीत्, म्लुचु इर् चौर्य्ये, शासलिद्युदित्यादिना पाक्षिकोङस्तदभावपक्षे सिः । अम्लोचीदिति पाठे म्लुचु इर्गत्यां यशः प्रापेत्यर्थः ॥ ३० ॥ भ०

सामर्थ्यमित्यादि । स कुम्भकर्णः केषाञ्चित् बलवतामपि वनवासिनां सामर्थ्यम् अस्तम्भीत् नियमितवान्, अङभावपक्षे रूपम् । विक्रमञ्च केचिदस्य नास्तभन् न नियमितवन्तः, अङ्पक्षे रूपं, क्ङित्यनुनासिकलोपः । केचिद् भयाद् वृक्षान् अध्यष्ठुः अधिष्ठितवन्तः, तिष्ठतेर्गातिस्थेति सिचोलुक्, आदेशसकारस्य षत्वं ष्टुत्वञ्च । अपरेऽम्बुधौ न्यमाङ्क्षुः निमग्नाः, मस्जिनशोर्झलीति नुम्, मस्जेरन्त्यात्पूर्वं नुममिच्छन्ति अनुषङ्गसंयोगादिलोपार्थम् ॥ ३१ ॥ ज० म०

सामर्थ्यञ्चापीत्यादि । स कुम्भकर्णः प्रभूणां सामर्थ्यम् अस्तम्भीत् निवारित-

अन्ये त्वलङ्घिषुः शैलान् गुहास्वन्ये न्यलेषत।
केचिदासिषत स्तब्धा भयात् केचिदघूर्णिषुः ॥ ३२ ॥
उदतारिषुरम्भोधिं वानराः सेतुनापरे।
अलज्जिष्टाङ्गदस्तत्र प्रत्यवास्थित चोर्जितम् ॥ ३३ ॥

वान्। अस्य विक्रमं केचिदपि नास्तभन् न निवारितवन्तः, स्तन्भ स्तुन्भ स्कन्भ रोधने सौत्रः, पूर्ववत् पचे ञ्लुतदभावे सिः, ङे ह्रस्मुङ्लोपोऽनाविति नस्य लोपः। केचित् भयात् वृचान् अधितिष्ठन्ति स्म, भूस्थेति सेर्लुक्, गौकः स्तुस्तुभेति षत्वम्। अपरेऽम्बुधौ निमग्नाः, मस्जौशट्त्वे स्नानेऽनिमित्वाद ञिः, मुनर्धामुचामित्यादिना मुन्, स्नादेः सौलोपः, शक्राजिति षङ्, षढोः कः, मोर्नुभ्पेऽमनोः क्लिलादिति षः अनुस् ॥ ३१ ॥ भ०

अन्ये त्वित्यादि। अन्ये शैलात् अलङ्घिषुः भयात् आरूढा इत्यर्थः। अन्ये गुहासु न्यलेषत, लीङ्श्लेषणे। केचित् स्तब्धाः स्थाणुवत् आसिषत आसते स्म। अपरे भीत्या भयात् अघूर्णिषुः घूर्णन्ते स्म ॥ ३२ ॥ ज० म०

अन्ये इत्यादि। अन्ये कपयः शैलात् अलङ्घिषुः तद्भयाकुलत्वात्, लघि शोषे अनेकार्थत्वाद्गतावपि, लघिङ् असुगत्योरित्यस्य क्वचिदात्मनेपदिनोऽपि परस्मैपदित्वाद्वा रूपम्। अन्ये गुहासु लीनाः, लीङ यमो श्लेषणे, नैकाजिति अनिम्। केचित् स्तब्धाः सन्तः स्थाणुवत् आसन्ते स्म, ञिलासङ् उपवेशे। केचित् भयात् घूर्णन्ते स्म। घूर्ण ङ्म्र भ्रमणे ॥ ३२ ॥ भ०

उदतारिषुरित्यादि। अपरे वानराः सेतुना अम्भोधिम् उदतारिषुः उत्तीर्णाः। तत्र तेषु तथाभूतेषु अङ्गदोऽलज्जिष्ट लज्जते स्म। ऊर्जितञ्च पराक्रमं प्रत्यवास्थित प्रतिपन्नवान्, समवप्रविभ्यस्थ इति तङ्, ह्रस्वादङ्गादिति सिचोलोपः ॥ ३३ ॥ ज० म०

उदतारिषुरित्यादि। अपरे वानराः सेतुना, समुद्रम् उत्तीर्णाः तॄ तरेऽभिभवे प्लुत्याम् अजन्तत्वाद व्रजवदेति ञिः। वानरेषु एवम्भूतेषु सत्सु तत्र अङ्गदो लज्जते स्म लस्जि श्रीङ् लजङ् व्रीडे। ऊर्जितं पराक्रमञ्च प्रत्यवास्थित प्रतिपन्नवान् प्रतिज्ञानिर्णयेत्यादिना मं, स्थादीर्ङिः, भसखादिति सिलोपः ॥ ३३ ॥ भ०

सत्त्वं समदुधुक्षच्च वानराणामयुद्ध च ।
ततः शैलानुदक्षैप्सुरुदगूरिषत द्रुमान् ॥ ३४ ॥
अनर्दिषुः कपिव्याघ्राः सम्यक् चायुत्सताहवे ।
तानमर्दीदखादीच्च निरास्थच्च तलाहतान् ॥ ३५ ॥
प्राचुचूर्णच्च पादाभ्यामबिभीषत च द्रुतम् ।
अतर्दीच्चैव शूलेन कुम्भकर्णः प्लवङ्गमान् ॥ ३६ ॥

---

सत्त्वमित्यादि । वानराणां सत्त्वं समदुधुक्षत् सन्दीपितवान् । धुक्षेः सन्दीपनार्थात् ण्यन्ताच्चङ् । स्वयम् अयुद्ध च युध्यते स्म । झलो झलीति सिचो लोपः । ततः सत्त्वधुक्षणानन्तरं वानराः शैलान् उदक्षैप्सुः उत्क्षिप्तवन्तः । हलन्तलक्षणा वृद्धिः । द्रुमांश्च उदगूरिषत उत्थापितवन्तः । गूरी उद्यमे ॥ ३४ ॥ ज० म०

सत्त्वमित्यादि । अङ्गदो वानराणां सत्त्वं बलं संधुक्षयामास । धुक्ष ङ् सन्दीपे । ण्यन्तादङ् । स्वयञ्च युध्यते स्म । युध्यौ ङ् युद्धे, झसस्यादिति सिलोपः । ततः संधुक्षणानन्तरं शैलान् उत्क्षिप्तवन्तः । कपिव्याघ्रा इत्यग्रिमश्लोकेनान्वयः । क्षिप श औ, क्षिप्यौ तुदि । अनिम्त्वात् व्रजवदेति वृः । द्रुमांश्च उदगूर्णवन्तः । गुर ङ् क उद्यमे । चुर्भ्यो जिर्वेति ञेरभावपक्षे रूपम् । गूरी यङ्ःवधे गत्यामित्यस्य रूपं वा, गुरी ङ श्नि उद्यमे इत्यस्य तु नायं प्रयोगो ङ्सोङ्त्वात् ॥ ३४ ॥ भ०

अनर्दिषुरित्यादि । उत्क्षिप्तशैलद्रुमाः कपिव्याघ्रा अनर्दिषुः नर्दितवन्तः, हष्टोऽस्माभिः क्व यास्यसीति । सम्यक् निर्भयम् आहवे अयुत्सत युध्यन्ते स्म । हलन्ताच्चेति सिचः कित्त्वे गुणाभावः । तान् प्लवङ्गमान् युध्यमानान् कुम्भकर्णोऽमर्दीत् मर्दितवान् । मर्देर्लघूपधगुणः । अखादीच्च भक्षितवान्, हस्ततलेनाहतवान् । निरास्थत् इतस्ततः क्षिप्तवान् । अस्यतीत्यादिना अङ्, अस्यतेः स्थुक् ॥ ३५ ॥ ज० म०

अनर्दिषुरित्यादि । कपिश्रेष्ठा नर्दितवन्तः, मारय मारयेति शब्दं चक्रुः । नर्द शब्दे । सम्यक् निर्भयं संग्रामे युध्यन्ते स्म । इगुङ्कुर्मढोति कित्त्वात् गुणाभावः । तान् वानरान् मर्दितवान्, कुम्भकर्ण इत्यग्रिमश्लोकेनान्वयः । मृद ग क्षुदि । अखादीत् खाद्ट भक्षणे । तलेन हस्ताघातेन आहतवान्, निरास्थच्च इतस्ततः चिक्षेप च । असु इर् क्षेपे । वच्यस्यिपतामिति अस्थादेशः ॥ ३५ ॥ भ०

प्राचुचूर्णदित्यादि । पादाभ्यां प्राचुचूर्णत् पिष्टवान् । चूर्ण प्रेरण इति चुरादिः ।

अतौत्सीत् गदया गाढमपिषच्चोपगूहनैः।
जानुभ्यामदमीच्चान्यान् हस्तवर्त्तमवीवृतत्॥ ३७॥
अदालिषुः शिला देहे चूर्णीभूवन्महाद्रुमाः।
क्षिप्तास्तस्य न चाचेतीत्तानसौ नापि चाक्षुभत्॥ ३८॥

---

एवं चूर्णयन् द्रुतम् अबिभीषत भीषयते स्म। भियो हेतुभये षुक्, भीस्म्योर्हेतुभय इति तङ्। शूलेन प्रहरणेन अतर्हीच्च विद्धवान्। तृहि हिंसायां ह्मयन्तक्षणश्वसेति न वृद्धिः॥ ३६॥ ज० म०

प्राचुचूर्णदित्यादि। पादाभ्यां चूर्णयामास। चूर्णक् पेषे, चुरादिर्णिजन्तादङ्। द्रुतं भीषयते स्म। भीर्भीष् वेति औ पाचिको भीषादेशो मश्च। कर्तृकुम्भकर्ण एव भयस्य उत्पत्तेः। शूलेन च अतर्दीत्। तर्द हिंसे। अतर्हीदिति पाठे—तृह ध तृ न्भूशहिंसे इत्यस्य रूपम्॥ ३६॥ भ०

अतौत्सीदित्यादि। कांश्चित् गदया गाढम् अतौत्सीत् व्यथितवान्। उपगूहनैः अपिषत् चूर्णितवान्। लृदित्त्वादङ्। अन्यांश्च जानुभ्यां अदमीत् शासितवान्। अवष्टभ्य नियमितवान् इत्यर्थः। ह्मयन्तत्वान्न वृद्धिः। हस्तवर्त्तमवीवृतत् हस्ताभ्यां वर्त्तितवान् पिष्टवानित्यर्थः। वृतेर्ण्यन्तात् हस्ते वर्त्तिग्रहोरिति णमुल्। कषादिषु यथाविध्यनुप्रयोगः॥ ३७॥ ज० म०

अतौत्सीदित्यादि। गदया कांश्चित् प्लवङ्गमान् गाढम् अत्यर्थम् अतौत्सीत्। तुद श औ व्यथेऽनिमत्वाद् त्रिः। अन्यान् उपगूहनैः आलिङ्गनैः पिष्टवान्। धौ पिष् लृ चूर्णने। लृदित्त्वात् ङः। अन्यान् जानुभ्यां दमितवान्। दम्यु ई चूर्णने। मान्तत्वान्न त्रिः। अन्यान् हस्तवर्त्तमवीवृतत् हस्ताभ्यां पीड़यित्वा चूर्णितवान् इत्यर्थः। वृतेर्ण्यन्तादङ् वर्द्ङौ धुरिति पक्षे गुणाभावः। हस्तवर्त्तमिति हस्तार्थाद् ग्रहवर्त्तिवृतां गतार्थत्वे णम्, तदनुप्रयोगश्चेति परः, स्वमते चणम् वेत्यस्य योगविभागात्॥ ३७॥ भ०

अदालिषुरित्यादि। वानरैः तस्य देहे क्षिप्ताः शिला अदालिषुः विशीर्णाः। दल विशरणे भौवादिकः, लान्तत्वाद्वृद्धिः। महाद्रुमाः चूर्णाभूवन् चूर्णीभूताः। न च तान् क्षिप्तान् असौ कुम्भकर्णो अचेतीत् चेतितवान्। चिती संज्ञाने। नापि चाक्षुभत् क्षुभितः। क्षुभ सञ्चलने दिवादिः॥ ३८॥ ज० म०

अदालिषरित्यादि। कपिभिः क्षिप्ताः शिलाः तस्य कुम्भकर्णस्य देहे अदालिषुः

अद्राष्टां तं रघुव्याघ्रौ आख्यच्चैनं विभीषणः ।
एष व्यजेष्ट देवेन्द्रं नाशङ्किष्ट विवस्वतः ॥ ३९ ॥
यक्षेन्द्रशक्तिमाच्छासीन्नाप्रोथीदस्य कश्चन ।
कुम्भकर्णान्न भैष्टं मा युवामस्मान्नृपात्मजौ ॥ ४० ॥

विदीर्णाः । दल मि भेदे । व्रजवदेति व्रिः । महाद्रुमाः चूर्णीभूताः । भुवी वन् टौर्य्याच । तान् हक्षान् असौ कुम्भकर्णो न अचेतीत् । चिती संज्ञाने । नापि क्षुभितः । क्षुभ लृङ् सञ्चले द्युतादिः ॥ ३८ ॥ भ०

अद्राष्टामित्यादि । तं तादृशौ रघुव्याघ्रौ रामलक्ष्मणौ अद्राष्टां दृष्टवन्तौ, विभीषणश्च एनमाख्यत् कथितवान्, कुम्भकर्णोऽयमिति । अस्यतीत्यादिनाऽङ् । प्रभावञ्चास्य कथयन्नाह—देवेन्द्रम् एष व्यजेष्ट विजितवान् । विपराभ्याञ्जेरिति तङ् । विवस्वतः सूर्य्यात् नाशङ्किष्ट न शङ्कते स्म ॥ ३९ ॥ ज० म०

अद्राष्टामित्यादि । रघुव्याघ्रौ तं कुम्भकर्णं दृष्टवन्तौ । दृर् दृशौ प्रेक्षे । वर्द्रोऽकिदिति अद्रः, झलस्वाज्झलीति सेर्लोपः । शक्छाजिति षङ्, द्दुभिरिति टः । विभीषण एनमाख्यातवान् । ख्या ल ख्यातौ कथने । वक्त्यस्यख्येति ङः, उस्येत्यालोपः । केन प्रकारेणाख्यदित्याह—एष देवेन्द्रं जितवान् । विपराजीति मम् । विवस्वतः सूर्य्यादपि नायं शङ्कितवान् । शकि ङ् वासशङ्कयोः ॥ ३९ ॥ भ०

यक्षेत्यादि । यक्षेन्द्रस्य कुबेरस्य शक्तिं प्रहरणम् अच्छासीत् खण्डितवान् । छो छेदने । अस्य तु कश्चन कश्चित् नाप्रोथीत् न प्रभवति स्म, शक्त्यै प्रहरणायेत्यर्थात् । प्रोथ पर्य्याप्तौ । पर्य्याप्तियोगे चतुर्थी न भविष्यति, पर्य्याप्तेरविवक्षितत्वात् । अतोऽस्मात् एवंविधात् कुम्भकर्णात् युवां नृपात्मजौ मा न भैष्ट, किन्तु बिभीतं स्म । माङि लुङ् मध्यमपुरुषद्विवचने रूपम् । माशब्दः प्रतिषेधे ॥ ४० ॥ ज० म०

यक्षेन्द्रेत्यादि । यक्षेन्द्रस्य कुबेरस्य शक्तिम् अस्त्रविशेषं सामर्थ्यं वा अच्छासीत् चिच्छेद । छो य लूनौ येशाच्छासाम्र इत्यस्याप्रवृत्तिपक्षे यमरमेति इम्सनौ, झलस्वाज्झलीम ईमीति सेर्लोपः । अस्य कुम्भकर्णस्य कश्चित् नाप्रोथीत् न शक्तः । प्रोथृ ञ् पर्य्यापणे, पर्य्यापणं सामर्थ्यम् । शक्तार्थेत्यादिना चतुर्थीप्राप्तौ सम्बन्धविवक्षया षष्ठी, शक्तार्थैः षष्ठ्यपीष्यत इत्यन्ये । अस्य शक्तिं कश्चन नाप्रोथीत् न हिंसितवान्, अनेकार्थत्वात् हिंसार्थत्वमपीति भट्टभास्करः । हे नृपात्मजौ ! अस्मात् कुम्भकर्णात्

घ्नन्तं मोपेक्षिषाथाञ्च मा न कार्ष्टमिहादरम्।
अमुं मा न बधिष्टेति रामोऽवादीत्ततः कपीन्॥ ४१॥
ते व्यरासिषुराह्वन्त राक्षसं चाप्यपिप्लवन्।
अबभासन् स्वकाः शक्तीर्द्रुमशैलं व्यकारिषुः॥ ४२॥

युवां मा भेष्टमिति। ञि भी लि भीत्यां, ष्मां सिः, नेमेकाजिति इम्निषेधः, व्रजवदेति व्रिः॥ ४०॥ भ०

घ्नन्तमित्यादि। तस्मात् घ्नन्तम् एनं युवां मोपेक्षिषाथां मोपेक्षकौ भूताम् इत्यर्थः। इह च कुम्भकर्णे आदरं मा न कार्ष्टम्, अपि तु कुरुतम्। ततो विभीषणवचनानन्तरं रामः कपीन् अवादीत् उक्तवान्। अमुं कुम्भकर्णं मा न बधिष्टेति किन्तु हतेति। हनो बध लुङि॥ ४१॥ ज० म०

घ्नन्तमित्यादि। घ्नन्तं प्रहरन्तम् एनं युवां मा उपेक्षिषाथाम्। ईक्ष ङ् दर्शने, उपपूर्वोऽयम् अनादरे वर्त्तते। इह कुम्भकर्णे आदरं मा कार्ष्ट, किन्तु अवश्यं कुरुतं, कृञ्भ्यां सिः, व्रजवदेति व्रिः। इत्येवं विभीषण आख्यत् इत्यर्थः। ततोऽनन्तरं रामो वानरान् अवादीत् उक्तवान्। किं तदित्याह—अमुं कुम्भकर्णं यूयं मा न बधिष्ट किन्तु अवश्यं हतेति। हनबधष्टीति बधादेशः॥ ४१॥ भ०

त इत्यादि। ते वानराः हर्षात् व्यरासिषुः किलकिलाशब्दं कृतवन्तः। अतो हलादेरिति वृद्धिः। राक्षसञ्च कुम्भकर्णम् आह्वन्त स्पर्द्धमाना आहूतवन्तः। आत्मनेपदेष्वन्यतरस्यामिति ह्वेञः पक्षे अङ्। अपिप्लवन् प्लावितवन्तः, अपि शब्दार्थे, तथा कृतवन्तः, यथासौ धृतिं कर्त्तुमारब्धः; प्लवतेर्ण्यन्तस्य चङि सन्वत्कार्य्यमिति स्रवति शृणोतीत्यादिना अभ्यासस्येत्वम्। स्वका आत्मीया शक्तीः अबभासन् प्रकाशयन्ति स्म। भासेर्ण्यन्तस्य चङि भ्राजभासेत्यादिना उपधाह्रस्वविकल्पः। द्रुमाश्च शैलाश्च द्रुमशैलं जातिरप्राणिनामित्येकवद्भावः। व्यकारिषुः तदुपरि क्षिप्तवन्तः। कॄ विक्षेपे॥ ४२॥ ज० म०

ते व्यरासिषुरित्यादि। ते वानरा व्यरासिषुः किलकिलाशब्दं चक्रुः। रस शब्दे, हसादेः सेम इति व्रिः। राक्षसं कुम्भकर्णं स्पर्द्धमाना आहूतवन्तः। स्पर्द्धायामाङ इति मं, वक्ष्यस्येत्यादिना ङः। तमेव अपिप्लवन्। प्लुङ्च सर्पणे। अन्तादङि खेः सन्वत्, शुस्रुद्रुप्रुप्लुच्युङां वेति पक्षे खेरुकारस्य इकारः। स्वका आत्मीयाः

ते तं व्याश्नुषताचोक्षुः पादैर्दन्तैस्तथाच्छिदन्।
आर्जिजत् शरभो वृक्षं नीलस्त्वादित पर्वतम्॥ ४३॥
ऋषभोऽद्रीनुदक्षैप्सीत् ते तैररिमतर्दिषुः।
अस्फूर्जीद्गिरिशृङ्गञ्च व्यस्राक्षीद्गन्धमादनः॥ ४४॥

शक्तीः सामर्थ्यानि प्रकाशितवन्तः। भासृ ङ् दीप्तौ। अन्तादङ्, भ्राजभासभाषे-त्यादिना पक्षे अङो ह्रस्वः, तदभावपक्षे खेः सन्वद्भावित्यस्याविषयः परे लघ्वक्षरा-भावात्। द्रुमशैलं तदुपरि चिप्तवन्तः। कृ श् विक्षेपे। शजवदेति ञिः। द्रुमाश्च शैलाश्चेति समाहारः॥ ४२॥ भ०

ते तमित्यादि। ते वानराः तं राक्षसं व्याश्नुषत व्याप्तवन्तः। अशू व्याप्तौ। पादैश्च अक्षोक्षुः पिष्टवन्तः। क्षुदिर सम्पेषणे। दन्तैः अच्छिदन् छिन्दन्ति स्म, इरितो वेत्यङ्। शरभो नाम कपिः वृक्षम् आर्जिजत् ग्रहीतुं यतते स्म। अर्ज प्रतियत्न इति स्वार्थिकण्यन्तात्चङि द्विर्वचने चोति स्थानिवद्भावादजादेर्द्वितीयस्येति द्विर्वचनं रेफस्य न न्द्रा इति प्रतिषेधः। नीलः पर्वतम् आदित गृहीतवान्, स्थाघ्वोरिच्च॥ ४३॥ ज० म०

ते तमित्यादि। ते वानराः तं कुम्भकर्णं व्याप्तवन्तः। अशू न ङ् व्याप्तिसंहत्योः, वेमूदिति पक्षे इम्। पादैः क्षुण्णवन्तः। जघौ क्षुदिर्क्षुदि इरित्त्वात् पाक्षिकङाभावे सिः, अनिम्त्वाद्द ञिः। तथा दन्तैः अच्छिदन्। छिदिर धौञ् छेदे, इरित्त्वात् पक्षे ङः। शरभनामा कपिः वृक्षम् आर्जिजत् ग्रहीतुं यतते स्म। अर्ज क् संस्कारे युङ्क्ते वृक्ष-संस्कारो ग्रहणप्रेरणानुकूलव्यापारः। चुरादिअन्तादङ्। नीलः पर्वतम् आदित अग्राह्। आङ्पूर्व्वदाञ् ग्रहणे स्थादोर्ङिः॥ ४३॥ भ०

ऋषभ इत्यादि। ऋषभो नाम कपिः अद्रीन् उदक्षैप्सीत् उत्क्षिप्तवान्। ते शरभादयः तैः वृक्षादिभिः अरिम् अतर्दिषुः हतवन्तः। तर्द हिंसायाम्। गन्धमादनो नाम कपिः अस्फूर्जीत् वज्रमिव शब्दञ्चकार, गिरिशृङ्गञ्च व्यस्राक्षीत् विसृष्टवान्। सृज-स्तौदादिक उदात्तत्॥ ४४॥ ज० म०

ऋषभ इत्यादि। ऋषभो नाम कपिः पर्वतान् उत्क्षिप्तवान्। क्षिप् शऔक्षिप्यौ तुदि, अनिम्त्वाद्द ञिः। ते शरभादयः तैः वृक्षादिभिः अरिं कुम्भकर्णम् अतर्दिषुः। तर्द हिंसे। गन्धमादनः कपिः अस्फूर्जीत् वज्रवत् शब्दञ्चकार। ट्वी स्फूर्जा

अकूर्दिष्ट व्यकारीच्च गवाक्षो भूधरान् बहून् ।
स तान्नाजीगणद्वीरः कुम्भकर्णोऽव्यथिष्ट न ॥ ४५ ॥
अमन्थीच्च परानीकमप्लोष्ट च निरङ्कुशः ।
निहन्तुं चात्वरिष्टारीनजक्षीच्चाङ्कमागतान् ॥ ४६ ॥
व्यक्रुक्षद्वानरानीकं संपलायिष्ट चायति ।
हस्ताभ्यां नश्यदक्राक्षीद्गोमि चोपाधितानने ॥ ४७ ॥

वज्रनिर्घोषे। गिरिशृङ्गञ्च क्षिप्तवान्। सृजौश च चकारादिसर्गे वद्रोऽकिदिति अट्र अनिमत्वाद्व त्रिः, षङ् षढोः कः ॥ ४४ ॥ भ०

अकूर्दिष्टेत्यादि। गवाक्षो नाम कपिः अकूर्दिष्ट क्रीड़ापूर्वकं चेष्टते स्म। महीधरांश्च व्यकारीत् विक्षिप्तवान्, वीरः कुम्भकर्णः तान् शरभादीन् नाजीगणत् न गणयामास। अजगणदिति पाठान्तरं, तत्र चकारेणात्वमप्यनुवर्त्तते, न चाव्यथिष्ट व्यथितोऽभूत् ॥ ४५ ॥ ज० म०

अकूर्दिष्टेत्यादि। गवाक्षो नाम कपिः अकूर्दिष्ट क्रीड़ापूर्वकं चेष्टते स्म। कुर्द कूर्दङ् क्रीड़ायाम्। बहून् पर्वतांश्च विक्षिप्तवान्, कृञ् विक्षेपे। स कुम्भकर्णः तान् शरभादीन् न गणयामास। गणत्व संख्याने। चुरादिअन्तादङ्, वेङ्गणकथ इति पाक्षिकः खरीङ्। न च व्यथितो बभूव, यतो वीरः। व्यथ षमङ्दुःखे चाले ॥ ४५ ॥ भ०

अमन्थीदित्यादि। परानीकं शत्रुसैन्यम् अमन्थीत् क्षोभितवान्। मन्थविलोडने। निरङ्कुशश्च अप्रतिहतशक्तिः अप्लोष्ट भ्रान्तवान्। प्लुङ् गतौ। अरींश्च वानरान् निहन्तुम् अत्वरिष्ट त्वरते स्म। ञि त्वरा संभ्रमे। अङ्कञ्च समीपम् आगतान् अजक्षीत् भक्षितवान्। जक्षभक्षहसनयोरिति भक्षणे जक्षि ॥ ४६ ॥ ज० म०

अमन्थीदित्यादि। कुम्भकर्णः परानीकं शत्रुसैन्यञ्च क्षोभितवान्। मन्थ ग गाढे। निरङ्कुशोऽप्रतिहतः सन् गतिं चकार। प्लुङ च सर्पणे। नेमैकाजिति अनिम्। अरीन् निहन्तुं त्वराञ्चक्रे, अङ्कमागतान् क्रोड़प्रविष्टान् भक्षितवान्। जक्ष क्लु भक्षहासयोः ॥ ४६ ॥ भ०

व्यक्रुक्षदित्यादि। तस्मिन् आयति आगच्छति सति, आङ्पूर्वस्येणः शतरि रूपम्। वानरानीकं अक्रुक्षत् विक्रोशति स्म। शलइगुपधादनिटः क्सः। सम्पला-

रक्तैरचिक्लिदद्भूमिं सैन्यैश्चातस्तरद्धतैः ।
नातार्प्सीद्भक्षयन् क्रूरो नाश्रमद् घ्नन् प्लवङ्गमान् ॥ ४८ ॥
न योद्धुमशकन् केचिन्नाढौकिषत केचन ।
प्राणश्नासिकाभ्याञ्च वक्त्रेण च वनौकसः ॥ ४९ ॥

यिष्ट पलायते स्म । तच्च नश्यत् पलायमानं हस्ताभ्याम् अक्राक्षीत् आकृष्टवान् कुम्भकर्णः, कृष विलेखने, अनुदात्तस्य चेत्यम्, हलन्तलक्षणा वृद्धिः । आकृष्टं चाति भीमेऽतिभयङ्करे विकृते आनने वक्त्रे उपाधित न्यस्तवान् । धाञः स्थाध्वोरिच्च ॥ ४७ ॥ ज० म०

व्यक्रुक्षदित्यादि । अस्मिन् आयति समागच्छति सति वानरसैन्यं विक्रोशति स्म । क्रुशौज रोदे हृतौ इगुपधात् शलोऽनिटः क्सः इति सक्, संपलायते स्म । अयङ् गतौ परापूर्वः मनीषादित्वाल्लकारः । कुम्भकर्णो नश्यत् पलायमानं वानरसैन्यं हस्ताभ्याम् आकृष्टवान् । कृषमृशस्पृशेत्यादिना पाक्षिकः सिः, वद्रोऽकितिति पाक्षिकऋकारस्य रः, अनिम्त्वाद् व्रिः, षढोः कः । भीमे आनने उपाधित न्यस्तवान् । डुधाञ् लि धारणे पुष्टौ दाने, स्थाघ्वोरिच्चेति ङिः, गुणाभावश्च, दासंज्ञकस्य ग्रहणात् ॥ ४७ ॥ भ०

रक्तैरित्यादि । वानरानीकस्य रक्तैः भूमिम् अचिक्लिदत् क्लेदितवान् । क्लिदू आर्द्रीभावे, तस्य ण्यन्तस्य चङि रूपम् । सैन्यैश्च हतैः भूमिम् अतस्तरत् छादितवान् । स्तृणातेर्णौ चङि रूपम्, अत्स्मृदृत्वरेत्यादिना अत्त्वम् । तांश्च भक्षयन्नपि क्रूरः नातर्पीत् न तृप्तः । तृप प्रीणने पुषादिः । स्पृशमृशकृषतृपदृपां सिज्वेति पक्षे सिच् । प्लवङ्गमांश्च घ्नन् हिंसन् नाश्रमत् न श्रान्तवान् । श्रमु तपसि खेदे चेति खेदे पुषादित्वादङ् ॥ ४८ ॥ ज० म०

रक्तैरित्यादि । स कपिसैन्यस्य रक्तैः भूमिम् आर्द्रतां नीतवान् । क्लिदू इर् क्लेदे ञ्यन्तादङ् । हतैः सैन्यैः भूमिम् आच्छादितवान् । स्तृ स्तृतौ स्तृ ञ गि च्छादने वा ञ्यन्तादङ् । क्रूरोऽसौ तान् भक्षयन्नपि न तृप्तो बभूव । त्रिप्ल तृप्यू च, चकारात् प्रीणने । कृषमृशस्पृशेत्यादिना पक्षे सिः, वद्रोऽकिदित्यस्य पक्षेऽप्रवृत्तिः, रधादित्वात् पक्षे इमोऽभावः, तेन व्रजवदेत्यादिना व्रिः । प्लवङ्गमान् घ्नन् श्रान्तो न जातः । श्रमुश्यङिङ्स्ंप:खेदयोः, पुषादित्वात् ङः, इरनुबन्धेन कस्यचिन्मते विभाषा दर्शिता ॥ ४८ ॥ भ०

न योद्धुमित्यादि । तेषां मध्ये केचित् वनौकसो वानराः योद्धुं नाशकन् न

उदरे चाजरन्नन्ये तस्य पातालसन्निभे।
आक्रन्दिषुः सखीनाह्वन् प्रपलायिषताखिदन् ॥५०॥
रक्तमश्नोतिषुः क्षुण्णाः क्षताश्च कपयोऽतृषन्।
उपास्थायि नृपो भग्नैरसौ सुग्रीवमैजिहत् ॥ ५१ ॥

शक्ता अभवन्। लृदित्वादङ्। केचित् नाढौकिषत न ढौकन्ते स्म। ये तु तेन पदेन क्षिप्तास्ते नासिकाभ्यां नासिकाविवराभ्यां वक्त्रेण च प्राणशन् प्रनष्टाः, निःसृताः इत्यर्थः। नशेः पुषादित्वादङ्। उपसर्गादित्यादिना णत्वम् ॥ ४९ ॥ ज० म०

न योद्धुमित्यादि। केचित् वनौकसो वानरा योद्धुं न शक्ताः। शक यम् शकि- च न शक्तौ पुषादिः। केचन वानरा न अढौकिषत समीपं न जग्मुः। ढौकृङ् गत्याम्। ये च तेन मुखे क्षिप्ताः ते नासाविवराभ्यां वक्त्रेण च प्राणशन् पला- यिताः। णश् लृ नाशे पुषादिः, प्राग्वन्नेण इत्यादिना णत्वं, नशनेशवाङ इत्यस्याप्र- वृत्तिपक्षे रूपम् ॥ ४९ ॥ भ०

उदरे चेत्यादि। अन्ये च तस्य उदरे पातालसदृशे अजरन् जीर्णाः। जृ स्तम्भी- त्यादिनाऽङ्, ऋदृशोऽङि गुणः। आक्रन्दिषुः आक्रन्दितवन्तः, सखीन् मित्राणि आह्वन् आहूतवन्तः। लिपिसिचीत्यादिनाङ्। प्रपलायिषत प्रपलायन्ते स्म पलाय- मानाः अखिदन् प्रखिन्नाः। पुषादित्वादङ् ॥ ५० ॥ ज० म०

उदर इत्यादि। पातालतुल्ये तस्य उदरे केचित् कपयो जीर्णाः। जृ गिकि- ज्यानौ शासलिदद्युदित्यादिना पक्षे ङः, दृशोर्गुरिति गुणः। अपरे आक्रन्दित- वन्तः। अन्ये सखीन् मित्राणि आहूतवन्तः। वक्ष्यसेत्यादिना ङः। अन्ये प्रखिन्नाः लृमिदाञिङ च, चकारात् खिद्दि खेदयुक्ता बभूवुः इत्यर्थः। ञि मिदा गात्रप्रक्षरणे इति पठन्त्यन्ये पुषादिः। अखिदन्निति पाठे स एवार्थः ॥ ५० ॥ म०

रक्तमित्यादि। अन्ये क्षुण्णाः सन्तः रक्तम् अश्नोतिषुः श्नोतन्ति स्म, इरितो वेत्यङ्भावपक्षे रूपम्। क्षताश्च खण्डिता अतृषन् तृष्यन्ति स्म। ञि तृष पिपासायां पुषादित्वादङ्। नृपो रामः तैः भग्नैः उपास्थायि उपस्थापितः अन्तर्भावितो- प्यर्थः, कर्मणि चिण्। असौ रामः सुग्रीवम् ऐजिहत् योद्धुम् इच्छां कारितवान्। ईहतेर्णौ न्नाशङि द्विर्वचने चेति स्थानिवद्भावात् द्वितीयस्य द्विर्वचनम्, आट् वृद्धिः। योद्धुमिति वक्ष्यमाणेन योज्यम् ॥ ५१ ॥ ज० म०

योद्धुं सोऽप्यरुषच्छत्रोरैरिरच्च महाद्रुमम् ।
तं प्राप्तं प्रासहिष्टारिः शक्तिं चोग्रामुदग्रहीत् ॥ ५२ ॥
स तामविभ्रमद्भीमां वानरेन्द्रस्य चामुचत् ।
प्रापप्तन्मारुतिस्तत्र ताञ्चालासीद्वियद्गताम् ॥ ५३ ॥

वक्रमित्यादि । अन्ये कपयः चुक्षाः खण्डिताः सन्तो रक्तं चरन्ति स्म । युगतिरचरेः, पचे ञिः । चताः सन्तोऽतृषन्, इर्यञ्जि तृष तृषि । तट् पिपासा । पुषादिः । भग्नैः कपणैः पलायमानैर्वा नृपो राम उपास्थायि आराधितः, एतमोर्यङ्गिणाविति कर्मणि इण्, यनञ्जिदिति यन् । असौ रामः सुग्रीवम् ईहां कारितवान् । योद्धुमिति वच्यमाणेन सम्बन्धः । ईहङ चेष्टे आन्तादङ् ॥ ५१ ॥ भ०

योद्धुमित्यादि । सोऽपि सुग्रीवः अरुषत् क्रुध्यति स्म । रुष रोषे पुषादिः । शत्रोश्च द्रुमम् ऐरिरत् चिप्तवान् । ईर चेप इति स्वार्थिकण्यन्तस्य रूपम् । तं द्रुमं प्राप्तम् अरिः कुम्भकर्णः प्रासहिष्ट प्रसहते स्म, शक्तिञ्च उग्रां प्राणहराम् उदग्रहीत् उद्गृहीतवान् ॥ ५२ ॥ ज० म०

योद्धुमित्यादि । तत्प्रेरणया सुग्रीवो रुष्टः रुष्यिर्षि क्रुधि पुषादिः । शत्रोः कृते समीपे वा महाद्रुमं प्रेरयामास ईर्कि गतौ नुदि चुरादिः आन्तादङ् । अरिः कुम्भकर्णः प्राप्तं तं वृत्तं सोढ़वान् । उग्रां शक्तिम् अस्त्रं जग्राह । हान्तत्वान्न वृिः ॥ ५२ ॥ भ०

स तामित्यादि । तां गृहीतां शक्तिं स कुम्भकर्णः अविभ्रमत् भ्रमयति स्म । भ्रमेर्ण्यन्तात् चङि रूपम् । वानरेन्द्रस्य सुग्रीवस्य उपरि अमुचत् मुक्तवान् । लृदित्वादङ् । तत्र तस्यां मुक्तायां मारुतिः हनूमान् प्रापप्तत् प्रत्युपस्थितः । लृदित्वादङीति पतेः पुमिति पुमागमः । ताञ्च वियद्गताम् अलासीत् आप्तवान् । ला आदाने । यमरमेति सगिटौ ॥ ५३ ॥ ज० म०

स तामित्यादि । स कुम्भकर्णः तां भीमां शक्तिं भ्रमयामास भ्रमेर्ण्यन्तादङ् । सुग्रीवस्य कृते त्यक्तवान् । मुच्लृ शपत्नौ मोचे । लृदित्वात् ङः । तत्र तस्यां मुक्तायां सत्यां तद्देशे मारुतिः हनूमान् उपस्थितः । पत लृज गत्यां लृदित्त्वात् ङः । वच्यस्यश्विपतामिति पप्तादेशः । तां शक्तिञ्च वियद्गतां जग्राह । यमरमेति इम्सगौ ॥ ५३ ॥ भ०

अशोभिष्टाचखण्डञ्च शक्तिं वीरो न चायसत्।
लौहभारसहस्रेण निर्मिता निरकारि मे ॥ ५४ ॥
शक्तिरत्यकुपद्रक्षो गिरिञ्चोदखनीद्गुरुम्।
व्यसृष्ट तं कपीन्द्रस्य तेनामूर्च्छीदसौ क्षतः ॥ ५५ ॥
अलोठिष्ट च भूपृष्ठे शोणितञ्चाप्यसुस्रुवत्।
तमादायापलायिष्ट व्यरोचिष्ट च राक्षसः ॥ ५६ ॥

---

अशोभिष्टेत्यादि। असौ गृहीतशक्तिः वीरः अशोभिष्ट शोभते स्म, शक्तिम् अचखण्डञ्च भग्नवान्। खड खडि भेदने चौरादिकः। ताञ्च खण्डयन् नायसत् नायस्यति स्म। यसु यत्ने पुषादिः। लौहभारसहस्रेणनिर्मिता घटिता मम शक्तिः निरकारि भग्ना, अनेनेति। रक्षः कुम्भकर्णोऽकुपदिति वक्ष्यमाणेन सम्बन्धः ॥ ५४ ॥ ज० म०

अशोभिष्टेत्यादि। गृहीतशक्तिः मारुतिः वीरोऽशोभिष्ट। शुभ लृङ दीप्तौ, मं ङाभावात् सिः। शक्तिञ्च खण्डयामास। खडि खड क् भेदे चुरादिः आन्तादङ्। तां खण्डयन् न चायासं प्राप। इयंस्यु यत्ने पुषादिः। लौहभारसहस्रेणनिर्मिता मे मम शक्तिः अनेन निरकारि भग्ना इति। रक्षः कुम्भकर्णोऽकुपदिति वक्ष्यमाण-श्लोकेनान्वयः। कृञ न वधे इण्। तुलास्त्रियां पलशतं भारः स्याद्विंशतिस्तुला इत्यमरः ॥ ५४ ॥ भ०

शक्तिरित्यादि। अकुपत् कुपितः, कुप क्रोधे पुषादिः। गिरिञ्च गुरुम् उदखनीत् उत्खातवान्। अतो हलादेर्लघोरिति वृद्ध्यभावपक्षे रूपम्। कपीन्द्रस्य सुग्रीवस्य उपरि तञ्च गिरिं व्यसृष्ट विसृष्टवान्। सृज विसर्गेऽनुदात्तेत्, तस्माद्धलन्ता-दात्मनेपदे सिचः कित्त्वे गुणाभावः। असौ कपीन्द्रः तेन क्षतः सन् अमूर्च्छीत् मोहमुपगतः ॥ ५५ ॥ ज० म०

शक्तिरित्यादि। अकुपत् कुपितः। कुप्य इर कोपे पुषादिः। गुरुं महान्तं गिरिम् उत्खातवान्। खनुञ् विदारे इसादेः सेम इति ञेः पाक्षिकत्वादभावः। तं पर्वतं कपीन्द्रस्य कृते विसृष्टवान्। सृज्यौङ् विसर्गे, झस्खाज्झसीति सेर्लोपः, अच्छा जिति षङ्। तेन गिरिणा क्षतोऽसौ कपीन्द्रो मूर्च्छां प्राप। मूर्छ्र सम्मोहे उच्छ्रये च ॥ ५५ ॥ भ०

अलोठिष्टेत्यादि। मूर्च्छितश्च भूपृष्ठे अलोठिष्ट लुठति स्म। रुठ लुठ प्रतिघात

अभैषुः कपयोऽन्वारत् कुम्भकर्णं मरुत्सुतः ।
शनैरबोधि सुग्रीवः सोऽलुञ्चीत् कर्णनासिकम् ॥ ५७ ॥
राक्षसस्य न चात्रासीत् प्रनंष्टुमयतिष्ट च ।
अक्रोधि कुम्भकर्णेन पेष्टुमारम्भि च क्षितौ ॥ ५८ ॥

इति द्युतादिः, द्युद्भ्यो लुङीति परस्मैपदविकल्पेनात्मनेपदम् । अस्य शोणितञ्च व्यसुस्रुवत् सुतं, णिश्रीत्यादिना चङ् । तं सुग्रीवम् आदाय राक्षसः कुम्भकर्णः अपलायिष्ट पलायते स्म । व्यरोचिष्ट रोचते स्म । रुच दीप्तौ ॥ ५६ ॥ ज० म०

अलोठिष्टेत्यादि । स कपीन्द्रो मूर्च्छितः सन् भूपृष्ठे अलोठिष्ट लुठति स्म । लुठ लुठङ प्रतीघाते । अस्य शोणितमपि स्रवति स्म । जिश्रीत्यङ् अुध्वोरित्युव् । राक्षसः कुम्भकर्णः तं सुग्रीवम् आदाय गृहीत्वा पलायितः शुशुभे च हर्षात् ॥ ५६ ॥ भ०

अभैषुरित्यादि । तस्मिन् भीते कपयोऽभैषुः भीताः, मरुत्सुतः कुम्भकर्णम् अन्वारत् अनुगतः । अर्तेः शर्त्तिशास्त्यर्तिभ्यश्चेत्यङ्, ऋदृशोऽङि गुणः । सुग्रीवः शनैः मनाक् अबोधि लब्धसंज्ञो बभूव । दीपजनेत्यादिना बुधेः कर्त्तरि चिण् । स बुद्धः कर्णनासिकं प्राण्यङ्गत्वादेकवद्भावः । अस्य अलुञ्चीत् कृत्तवान्, राक्षसस्येति वक्ष्यमाणेन सम्बन्धः ॥ ५७ ॥ ज० म०

अभैषुरित्यादि । अस्मिन् गृहीते कपयो भीताः । ञिभी भये इति त्रिः । मरुत्सुतो हनूमान् कुम्भकर्णम् अनुजगाम । ऋ प्रापणे च, चकाराद्गत्यां; वक्ष्यस्येत्यादिना पञ्च ङः; इश्चोर्णुः । सुग्रीवः शनैः मनाक् प्रबुद्धः । बुध्यौङ् वेदने । पदस्तनीणित्यादिना प्राचिक इण् । स प्रबुद्धः सन् तस्य कर्णौ नासिकाञ्च चिच्छेद राक्षसस्येति वक्ष्यमाणेनान्वयः । लुञ्चापनयने ॥ ५७ ॥ भ०

राक्षसस्येत्यादि । राक्षसस्य कुम्भकर्णस्य सम्बन्धे स सुग्रीवो न चात्रासीत् न त्रस्तः ; राक्षसात् प्रनंष्टुं पलायितुं मस्जिनशोर्झलीति नुम् । अयतिष्ट च यतते स्म, कुम्भकर्णेन आत्मनोऽवस्थां दृष्ट्वा अक्रोधि क्रुद्धं, भावे लुङ् । क्षितौ च पेष्टुं चूर्णयितुं सुग्रीवं आरम्भि आरब्धम् । कर्मणि लुङ् । रभेरशब्लिटोरिति नुम् ॥ ५८ ॥ ज० म०

राक्षसस्येत्यादि । सुग्रीवो न च तस्मात् त्रस्तः, त्रस ग्री भये । हसादेः सेम् इति

सुग्रीवोऽस्याभ्रशद्धस्तात् समगाहिष्ट चाम्बरम्।
तूर्णमन्वसृपद्राममानन्दच्च वानरान्॥ ५८॥
अतत्वरच्च तान् योद्धुमचिचेष्टच्च राघवौ।
कुम्भकर्णो न्यवर्त्तिष्ट रणेऽयुत्सत वानराः॥ ६०॥

त्रिः। पलायितुं यतते स्म, यतीङ् यत्ने, नशिर्नुंण् रधीमुचामिति नुण्। अश्रान्तत्वान्न गः। आत्मावस्थां दृष्ट्वा कुम्भकर्णेन अक्रोधि। भावे इण्। चितौ पेष्टं, सुग्रीवं चूर्णयितुम् आरब्धं, रभौङ्राभस्ये पूर्ववन्नुण्॥ ५८॥ भ०

सुग्रीव इत्यादि। अस्य कुम्भकर्णस्य हस्तात् सुग्रीवः अभ्रशत् भ्रष्टः। भ्रन्शु अधः पतने पुषादिः। स चाम्बरम् आकाशम् अगाहिष्ट आक्रान्तवान्। गाहृ-विलोड़ने, अनुदात्तेत्। तूर्णञ्च रामम् अन्वसृपत् अनुगतः। लृदित्वादङ्। वानरांश्च कर्णनासिकाकर्त्तनेन आनन्दत् तोषितवान्। नन्दतेर्ण्यन्तस्य रूपम् ॥ ५९॥ ज० म०

सुग्रीव इत्यादि। अस्य कुम्भकर्णस्य हस्तात् सुग्रीवो भ्रष्टः। लृभ्रन्शुध्वंच चकारादधःपाते पुषादिः, इत्सङ्लोपोऽणौ। अम्बरम् आकाशम् आक्रान्तवान्। ङगाधृ-प्रतिष्ठायग्रन्थयोः। अगाहिष्टेति पाठे—ङगाहृ विलोडे, ऊदित्त्वादिम्। ततः शीघ्रं रामम् अनुजगाम। लृ सृपौ गत्यां; लृदित्त्वात् ङः। वानरांश्च नन्दयामास। टु नदि-संवृधि, आन्तादङ्॥ ५९॥ भ०

अतत्वरदित्यादि। तांश्च वानरान् योद्धुम् अतत्वरत् त्वरयति स्म, मा विलम्बध्वमिति.त्वरेर्ण्यन्ताच्चङ्। अत्स्मृदृत्वरेति अभ्यासस्य अत्वम्। राघवौ च योद्धुम् अचचेष्टत् व्यापारयति स्म। विभाषा चेष्टिवेष्ट्योरित्यभ्यासस्यात्त्वपक्षे रूपम्।.सः कुम्भ-कर्णो योद्धुं न्यवर्त्तिष्ट निवृत्तः। वृतिद्युतादिः युद्भ्य इत्यादिनात्मनेपदे नाङ्। वान-रांश्च अयुत्सत युध्यन्ते स्म॥ ६०॥ ज० म०

अतत्वरदित्यादि।. सुग्रीवः तान् वानरान् योद्धुं त्वरयति स्म। ञि त्वष मङ् स्वदे आन्तादङ्, स्मृदृत्वरप्रथेत्यादिना खेरङ्। स राघवौ च योद्धुं चेष्टयामास। चेष्ट-ङीहे, आन्तादङ्, पूर्ववत् पक्षे खेरङ्। कुम्भकर्णो युद्धे निवृत्तः। वृत ङवृतृ वर्त्तने, मे ङाभावात् सिः। वानरा युध्यन्ते स्म। युध्यौङ् युद्धे। इगुङ्कर्मढीति सेः किद्वान्न गुः॥ ६०॥ भ०

अविवेष्टन्नृपादेशादारुचंश्चाशु राक्षसम् ।
तानधावीत् समारूढ़ास्तेऽप्यस्रंसिषताकुलाः ॥ ६१ ॥
अग्रसिष्ट व्यधाविष्ट समाश्लिक्षच्च निर्दयम् ।
ते चाप्यघोरिषुर्घोरं रक्तञ्चावमिषुर्मुखैः ॥ ६२ ॥

अविवेष्टन्नित्यादि। वानरा राक्षसम् अविवेष्टन् वेष्टयन्ति स्म। अत्र राम इत्यर्थाद् द्रष्टव्यम्। यतस्तदादेशात् आशु ते राक्षसम् आरुक्षन् आरूढ़ाः। रुहः शलेत्यादिना क्सः। वानरा एव नृपादेशात् अविवेष्टन् इति व्याख्याने स्वातन्त्र्येण तेषां कर्तृत्वात् प्रयोजकत्वं न घटते। तांश्च वानरान् आरूढ़ान् कुम्भकर्णोऽधावीत् धूतवान्। स्वरती-त्यादिना इट्, हलहन्तेनेटीति प्रतिषेधः। ते व्याकुलाः सन्तोऽस्रंसिषत स्रस्ताः पतिता इत्यर्थः। स्रंसु भ्रंशु च स्रंसने द्युतादिः परस्मैपदाभावान्नाङ्॥ ६१ ॥ ज० म०

अविवेष्टन्नित्यादि। वानराः राक्षसं वेष्टयामासुः, राम इत्यध्याहृत्य वानरान् वेष्टयामास, इत्यर्थो वा चुर्थोऽञिर्वेत्यस्य योगविभागात् क्वचिच्चुरादेरन्यस्मादपि ञिरि-त्यन्ये, स्मृदृत्वर इत्यस्याप्रवृत्तिपक्षे रूपम्। अववेष्टन्निति पाठे—वेष्टङ् वट वेष्टे। राक्षस वेष्टितवन्तः। पूर्ववत् खिरङ् वा। नृपादेशात् रामाज्ञया वानराः शीघ्रं राक्षसम् आरूढ़ाः। ञि ज रुहौ जन्यां हशसोऽनिमिशुङ् इति सक्। कुम्भकर्णः समारूढ़ान् धूतवान्। धूञ ण कम्पे। सृ-स्तु-धोः सेरिम् पे इति इम्, अजन्ताद्द्वजवर्द्देति वृिः। ते कपयो व्याकुलाः स्रस्ताः। लृरुनसुङ् भ्रंश मे सिः॥ ६१ ॥ भ०

अग्रसिष्टेत्यादि। कुम्भकर्णः कांश्चिदग्रसिष्ट ग्रसते स्म। कांश्चित् निर्दयं समाश्लिक्षत्। श्लिष आलिङ्गने शल इति क्सः। ते चाश्लिष्टाः महाघोरं श्रुतिकटुकं अघोरिषुः शब्दम् उक्तवन्तः। घुर भीमार्थशब्दयोरिति तुदादिरनुदात्तेत्। रक्तं चाव-मिषुः उद्गीर्णवन्तः॥ ६२ ॥ ज० म०

अग्रसिष्टेत्यादि। कुम्भकर्णः कांश्चित् ग्रसते स्म। ग्रसु ङ भक्षे। कांश्चित् धावति स्म। धावु ञ् जवे स्मजि। व्यबाधिष्टेति पाठे—कांश्चित् प्रबाधते स्म। बाधृ ङ् विहती। कांश्चित् निर्दयं समाश्लिक्षत् आलिङ्ग्य हतवान् इत्यर्थः, श्लिषौ यलृ ञि श्लेषे। हशसा-ऽनिमि शुङ इति आलिङ्गने ङापवादः सक्। ते वानराः तेन हताः सन्तः घोरं शब्दं चक्रुः। घुर श ध्वनौ भीमार्थे। रक्तञ्च मुखैः अवमिषुः। टु वम उद्गिरि मान्त-त्वान्न वृिः॥ ६२ ॥ भ०

स चापि रुधिरैर्मत्तः स्वेषामप्यदयिष्ट न।
अग्रहीच्चायुरन्येषामरुद्ध च पराक्रमम् ॥ ६३ ॥
संत्रस्तानामपाहारि सत्वञ्च वनवासिनाम्।
अच्छेदि लक्ष्मणेनास्य किरीटं कवचं तथा ॥ ६४ ॥
अभेदि च शरैर्देहः प्राशंसीत्तं निशाचरः।
अस्पर्द्धिष्ट च रामेण तेनास्याच्छिप्सतेषवः ॥ ६५ ॥

स चेत्यादि। स चापि कुम्भकर्णः रुधिरैर्मत्तः स्वेषामपि नादयिष्ट न दयां कृतवान्। किम् अपरेषाम्? अधीगर्थेति षष्ठी। अन्येषां वानराणाम् आयुः जीवितम् अग्रहीत् गृहीतवान्। हान्तत्वान्न वृद्धिः, अदोहीवायुरिति पाठान्तरम्। तत्र तथाभूतं कुम्भकर्णं दृष्टवताम् अन्येषाम् आयुः अदोहीव स्वयङ्गतमिव। दुहश्चेति कर्मकर्त्तरि चिण्। पराक्रमञ्च अन्येषाम् अरुद्ध च आवृतवान्। रुधेः कर्माभिप्राये तङ्, झलो-झलीति सिचो लोपः। झषस्तथोर्धोधः, झलाञ्जश्झशि ॥ ६३ ॥ ज० म०

स चेत्यादि। सोऽपि कुम्भकर्णः शोणितैर्मत्तः सन् स्वेषां राक्षसानामपि न दयां चक्रे,। किं पुनः परेषां? कर्मणि सम्बन्धविवक्षया वा षष्ठी। ञि दय ङ् ग्रहणे गतौ वधे दानेऽवने। अन्येषां वानराणाम् आयुः गृहीतवान्। हान्तत्वान्न वृः। अदोहीवायु-रिति पाठे—तादृशं कुम्भकर्णं दृष्ट्वा अन्येषाम् आयुः स्वयमेव अदोहीव। दुह ल औ दहि, ढवत्ढधोऽढे इति ढवदित्युक्तेः ढभावे ममिति मं, वेणजदुह इति इण्। अन्येषां पराक्रमञ्च रुद्धवान्। रुधिरौ ञि ञ आवृतौ, झस्स्तात् झसीति सिचो-लोपः ॥ ६३ ॥ भ०

सन्त्रस्तानामित्यादि। तेन सत्वम् अपाहारि अपहृतं, सर्वेषां त्रस्तत्वात्। कर्मणि लुङ्। लक्ष्मणेन तस्य किरीटं मुकुटं तथा कवचम् अच्छेदि छिन्नं, कर्मणि लुङ्॥ ६४ ॥ ज० म०

सन्त्रस्तानामित्यादि। सन्त्रस्तानां वानराणां सत्वं बलं तेन अपहृतम्। ञ्णः कर्मणीण्। लक्ष्मणेन अस्य किरीटं मुकुटं कवचञ्च छिन्नम् ॥ ६४ ॥ भ०

अभेदीत्यादि। देहश्च अस्य शरैः करणभूतैः अभेदि छिन्नः, निशाचरश्च तं लक्ष्मणं प्राशंसीत् स्तुतवान्, साधु भवता युद्धमिति। रामेण सह अस्पर्द्धिष्ट योद्धुं

यैरघानि खरो बाली मारीचो दूषणस्तथा ।
अवामंस्त स तान् दर्पात् प्रोदयंसीच्च मुद्गरम् ॥ ६६ ॥
वायव्यास्त्रेण तं पाणिं रामोऽच्छैत्सीत् सहायुधम् ।
अदीपि गरुहस्तोऽसावधावीच्चारिसम्मुखम् ॥ ६७ ॥

स्पर्द्धते स्म । तेन रामेण अस्य इषवः अचिक्षत चिप्ताः । कर्म्मणि लुङ्, हलन्तादात्मनेपदे सिचः, कित्त्वाद् गुणाभावः ॥ ६५ ॥ ज० म०

अभेदीत्यादि । लक्ष्मणेन अस्य देहः शरैः भिन्नः । ततो निशाचरः कुम्भकर्णः तं लक्ष्मणं प्रशशंस । शनस हिंसास्तुत्योः । रामेण सह योद्धुं स्पर्द्धते स्म । स्पर्द्धङ् संहर्षे । तेन रामेण अस्य राक्षसस्य क्षते इषवः चिप्ताः । चिप्यौ नुदि, कर्म्मणि टी ॥ ६५ ॥ भ०

यैरित्यादि । यैः शरैश्च खरोऽघानि व्यापादितः, कर्म्मणि लुङ्, ते अचिक्षत इति योज्यम् । स कुम्भकर्णः तान् घ्नन् दर्पात् अवामंस्त अवमन्यते स्म । मुद्गरं प्रोदयंसीत् उद्गूर्णवान् । यम-रमेति सगिटौ ॥ ६६ ॥ ज० म०

यैरित्यादि । यैः शरैः खरादिः हतः सः कुम्भकर्णः तान् चिप्तान् अवमन्यत स्म । दर्पात् अहङ्कारात् । मन्यौङ च बोधे । मुद्गरम् उत्थापितवान् । यमौ उ विरतौ यम-रमेतीम्सनौ ॥ ६६ ॥ भ०

वायव्यास्त्रेणेत्यादि । येन पाणिना मुद्गरम् उदयंसीत् तं पाणिं सहायुधं रामो वायव्यास्त्रेण मरुद्दैवतास्त्रेण अच्छैत्सीत् । छिन्नपाणिश्च असौ तरुहस्तः तरुः हस्ते यस्य इति तरोः प्रहरणत्वात् सप्तम्यन्तस्य परनिपातः । अदीपि दीप्यते स्म । दीप-जनेत्यादिना कर्त्तरि चिण् । अरिसम्मुखञ्च रामाभिमुखम् अधावीत् वेगेन गतवान् ॥ ६७ ॥ ज० म०

वायव्यास्त्रेणेत्यादि । येन पाणिना मुद्गरम् उदयंसीत् तं पाणिम् आयुधेन मुद्गरेण सहितं वायव्यास्त्रेण रामः छिन्नवान् । छिदिर धौञ छेदे, अनिम्त्वाद्गिः । वायुः देवता यस्य इति विकारसङ्घेत्यादिना ष्णः, व्वोर्लोपो तौतेऽच्चे इति औकारः, औदौतोऽच्वदिति अच्वद्भावः, यलायवायाव इति अव् । असौ छिन्नहस्तो राक्षसः तरुहस्तः सन् दीप्यते स्म । पदसनीण् घे इत्यादिना कर्त्तरि इण् । तरुः हस्ते यस्य तरुयुक्तो हस्तो यस्य इति वा समासः । अरिसम्मुखं रामाभिमुखम् अधावीच्च वेगेन गतः । धाडु ञ् जवे सृजि ॥ ६७ ॥ भ०

सत्वचमच्छिदत्तस्य शक्रास्त्रेण करं नृपः।
जङ्घे चाशीशतद्वाणैरप्रासीदिषुभिर्मुखम्॥ ६८॥
ऐन्द्रेण हृदयेऽव्यात्सीत् सोऽध्यवात्सीच्च गां हतः।
अपिष्टातां सहस्रे द्वे तद्देहेन वनौकसाम्॥ ६९॥
अस्ताविषुः सुरा रामं दिशः प्रापन्निशाचराः।
भूरकम्पिष्ट साद्रीन्द्रा व्यचालीदम्भसां पतिः॥ ७०॥

सत्वचमित्यादि। तस्य सत्वचमपि करं नृपः शक्रास्त्रेण अच्छिदत्। इरितो वेत्यङ्। जङ्घे चान्यैः बाणैः अशीशतत् गमनासमर्थे कृतवान्। शदेर्णौ शदेरगताविति तत्वम्। मुखञ्च इषुभिः अप्रासीत् पूरितवान्। प्रा पूरणे॥ ६८॥ ज० म०

सत्वचमित्यादि। नृपो रामः तस्य कुम्भकर्णस्य त्वचसहितं हस्तान्तरं शक्रास्त्रेण छिन्नवान्। इरित्वात् पचे ङः। बाणैः प्रयोजककर्तृभिः तस्य जङ्घे च अलीलवत् छेदितवान्। लूञ गि च्छिदि, ञि: प्रेरणे, अङ्, द्वित्वं, त्रिः, अभ्युङः स्वः, खि: सन्वत्, जयत्योः स्व्योर्ये इति खेरुकारस्य इकारः, तस्य घोर्हसादीर्घश्चेति दीर्घत्वम्। अशीशतदिति पाठे—शदोऽगतौ तङ्। गत्यसमर्थे च जङ्घे कृतवान् इत्यर्थः। अस्य मुखं शरैः पूरितवान्। प्रा पूर्त्तौ। यम-रमेतीम् सनौ॥ ६८॥ भ०

ऐन्द्रेणेत्यादि। ऐन्द्रेण शरेण हृदयेऽव्यात्सीत् विद्धवान्। स तथा हतो गाम् अध्यवात्सीत् भूमिम् अध्युषितवान्। तस्य पततो देहेन वनौकसां वानराणां द्वे सहस्रे अपिष्टातां चूर्णिते। पिष् लृ संचूर्णने। कर्मणि लुङ्॥ ६९॥ ज० म०

ऐन्द्रेणेत्यादि। इन्द्रदैवतेन अस्त्रेण हृदये तं विद्धवान्। व्यधौ ताडे, अनिम्त्वात् त्रिः, अव्यासीदिति पाठे—व्येञ् हतौ। निरुद्धवान् इत्यर्थः। स कुम्भकर्णो हतः सन् गां भूमिम् अध्युषितवान्। वसै औ निवासे, अनिम्त्वात् त्रिः। स स्यरे इति सस्य तः। पततः तस्य देहेन वानराणां द्वे सहस्रे अपिष्टातां चूर्णिते। धौ पिष् लृ चूर्णने, कर्मणि द्विवचनं, हशसोऽनिमि जुङ इति सक्, षढोः कः सकोऽल्लोपः, तेन याथातोऽत इत्यस्याविषयः॥ ६९॥ भ०

अस्ताविषुरित्यादि। तस्मिन् हते सुरा देवा रामम् अस्ताविषुः स्तुवन्ति स्म। स्तुसुधुभ्यः परस्मैपदेष्विती‌ट्। निशाचराः तद्भयात् दिशः प्रापन् प्राप्तवन्तः। आप्लृ व्याप्तौ।

हतं रक्षांसि राजानं कुम्भकर्णमशिश्रवन्।
अरोदीद्रावणोऽशोचीन्मोहञ्चाशिश्रियत् परम्॥ ७१॥
अपप्रथद्गुणान् भ्रातुरचिकीर्त्तच्च विक्रमम्।
क्रुद्धेन कुम्भकर्णेन येऽदर्शिषत शत्रवः॥ ७२॥

साद्रीन्द्रा सकुलपर्वता भूमिः अकम्पिष्ट चलति स्म, अम्भसां पतिः समुद्रो व्यचालीत् प्रक्षुभितवान्॥ ७०॥ ज० म०

अस्ताविषुरित्यादि। तस्मिन् हते सुरा रामं स्तुवन्ति स्म। सु-स्तु-धी: सेरिम् पे अजन्तत्वात् त्रिः। राक्षसा भयात् दिशः प्रापुः। आप्लृणौकि व्यापने। लृदित्वात् ङः। अद्रीन्द्रैः कुलपर्वतैः सहिता भूमिः कम्पिता। कपि चाले। अम्भसां पतिः समुद्रो विचलति स्म, तद्देहपातात्। अलन्तात् व्रजवदेति त्रिः॥ ७०॥ भ०

हतमित्यादि। हतं व्यापादितं कुम्भकर्णं रक्षांसि राजानं रावणम् अशिश्रवन् श्रावितवन्तः। श्रृणोतेर्ण्यन्तात् सनीव कार्य्यमिति श्रवति-श्रृणोतीत्यादिना अभ्यासस्य विकल्पेनेट्, एवञ्च कृत्वा, अशुश्रुवन्निति पाठान्तरं, द्विकर्मकता तु शुद्धार्थत्वात्। श्रुत्वा च रावणोऽरोदीत् अश्रूणि मुमोच, अशोचीत् शोचति स्म। तेनापि त्यक्तोऽस्मीति परञ्च मोहं मूर्च्छाम् अशिश्रियत्। श्रिञ सेवायाम्। णिश्रीत्यादिना चङ्॥ ७१॥ ज० म०

हतमित्यादि। हतं कुम्भकर्णं राक्षसा राजानं श्रावितवन्तः। श्रु न गतौ श्रुतौ आन्तत्वादङ् द्वित्वं त्रिः श्रुग्रङ्ग्रङः ख, खे: सन्वत्, शुश्रुस्रुद्रु इति खेरुकारस्य पाक्षिक इकारः, घोऽश्चौञेरिति प्रयोज्यस्य राज्ञः कर्मत्वम्। श्रुत्वा च रावणोऽरोदीत्। रुधिर रुद रोदे। अशोचीत् शोचति स्म। शुच शोके। परम् उत्कृष्टञ्च मोहम् आश्रितः। श्रिञ सेवने। त्रिश्रीत्यङ्, श्रुध्वोरितीय॥ ७१॥ भ०

अपप्रथदित्यादि। भ्रातुर्गुणान् बुद्धिमत्त्वादीन् अपप्रथत् प्रख्यापितवान्। प्रथ-प्रख्याने घटादिः, तस्मात् ण्यन्ताच्चङि :अत्स्मृद्दत्वरेत्यादिनाऽत्वम्। विक्रमञ्च शौर्य्यम् अचिकीर्त्तत् उदीरितवान्। कृत संशब्दने इति चौरादिकः जिघ्रतर्वेत्यह्रत ईर्दिति इकाराभावपक्षे रूपम्, उपधायाश्चेतीत्वम्। विक्रमकीर्त्तनञ्चाह,—क्रोधकर्त्रा कुम्भकर्णेन ये शत्रवोऽदर्शिषत दृष्टाः। कर्म्मणि लुङ्। स्यसिदित्यादिना इणेश्चिन्वदिट्॥ ७२॥ ज० म०

अपप्रथदित्यादि। रावणो भ्रातुः कुम्भकर्णस्य गुणान् प्रथयति स्म। प्रथक-

कथं न्वजीविषुस्ते च स चामृत महाबलः।
अयुयुत्सिषताश्वास्य कुमारा रावणं ततः॥ ७३॥
देवान्तकोऽतिकायश्च त्रिशिरा: स नरान्तकः।
ते चांहिषत संग्रामं बलिनो रावणात्मजाः॥ ७४॥
युद्धोन्मत्तश्च मत्तश्च राजा रक्षार्थमाञ्जिहत्।
सुतानां निरगातां तौ राक्षसौ रणपण्डितौ॥ ७५॥

च ख्याने, आत्मादङ्, स्मृदृत्वरप्रथेति खेरङ् इद्वाधकः। तस्य विक्रमं कीर्त्तयति स्म। कृतक संशब्दे आत्मादङ्। विक्रमकीर्त्तनमेवाह,—कुम्भकर्णेन क्रुद्धेन सता ये शत्रवो हष्टाः ते च कथं अजीविषुः जीवन्ति स्म। इत्युत्तरश्लोकेनान्वयः, दृशः कर्म्मणि बहुवचनं, हनग्रहदृशश्च इति पक्षे मिण्॥ ७२॥ भ०

कथमित्यादि। तेऽत्याः कथं नाम अजीविषुः जीविताः? स च कुम्भकर्णो महाबलः अमृत मृतः। म्रियतेर्लुङ्लिङोश्चेति तङ्, ह्रस्वादङ्गादिति सिचो लोपः। अनन्तरं कुमाराः राजपुत्रा-देवान्तकादयो रावणं शोचन्तम् आश्वास्य अपनीतशोकं कृत्वा अयुयुत्सिषत योद्धुमिष्टवन्तः। हलन्ताच्चेति सनः कित्त्वं, पूर्ववत्सन इति तङ्॥ ७३॥ ज० म०

कथमित्यादि। नुशब्दः प्रश्ने। स च महाबलो मृतः। मृ श ङ् मृतौ। मृङ्ष्टौञ्चेम् इगङ्गुर्मङ्कीति सौ कित्ताद्गुणाभावः। ह्रस्वादिति सेर्लोपः। ततोऽनन्तरं कुमारा रावणपुत्रा देवान्तकादयो रावणम् आश्वास्य अपनीतशोकं कृत्वा योद्धुमिष्टवन्तः: युध्यौङ् युद्धे। सम्निच्छायां गुर्नोनिमि सनि॥ ७३॥ भ०

देवान्तक इत्यादि। ते च रावणात्मजाः सङ्ग्रामम् आंहिषत गतवन्तः। अहि गतौ। किं नामानः? देवान्तकः अतिकायः त्रिशिराः नरान्तकः इति॥७४॥ ज०म०

देवान्तक इत्यादि। के ते कुमाराः? इत्यत उक्तं देवान्तक इत्यादि। ते च बलिनो रावणपुत्राः सङ्ग्रामम् आंहिषत गताः। अहिङ् गतौ॥ ७४॥ भ०

युद्वत्यादि। सुतानां रक्षार्थं राजा युद्धोन्मत्तं मत्तश्च राक्षसम् आञ्जिहत् प्रस्थापितवान्। अंहतेर्णौ, चङ् परे द्वितीयाद्विर्वचनम्। तौ राक्षसौ रणपण्डितौ निरगातां निर्गतौ। इणोगा लुङि॥ ७५॥ ज० म०

तैरजेषत सैन्यानि द्विषोऽकारिषताकुलाः।
पर्वतानिव ते भूमावचैषुर्वानरोत्तमान्॥ ७६॥
अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः।
प्रैषिषद्राक्षसः प्रासं सोऽस्फोटीदङ्गदोरसि॥ ७७॥
अश्वान् बालिसुतोऽहिंसीदतताड़च्च मुष्टिना।
रावणिश्चाव्यथो योद्धुमारब्ध च महीं गतः॥७८॥

युद्धेत्यादि। राजा रावणः सुतानां तेषां रक्षार्थं युद्धोन्मत्तं मत्तञ्च राक्षसद्वयम् आज्ञिहत् प्रस्थापितवान्। अहिङ्गतौ, अस्यतेरङ्। तौ रणपण्डितौ राक्षसौ पुरात् निर्गतौ। इन गतौ। ण्यां भूस्थापिबद्धेणेति सेर्लुक्॥ ७५॥ भ०

तैरित्यादि। तैः राक्षसैः सैन्यानि अजेषत जितानि। कर्म्मणि लुङ्। अचिण्-भावपक्षे रूपम्। द्विष आकुला अकारिषत ते राक्षसा वानरोत्तमान् वानराणां प्रधानभूतान् पर्वतानिव भूमौ अचैषुः पुञ्जीकृतवन्तः। चिञ चयने॥ ७६॥ ज० म०

तैरित्यादि। तैः देवान्तकादिभिः सैन्यानि जितानि। जि जये च कर्म्मणि बहुवचनं, शत्रवश्चाकुलाः कृताः, कर्म्मणि हनग्रहदृश च इति मिण्। ते राक्षसा वानरोत्तमान् पर्वततुल्यान् भूमौ चितवन्तः पुञ्जीचक्रुः। चिञ चित्यां, व्रजवर्द्धेति त्रिः॥ ७६॥ भ०

अङ्गदेनेत्यादि। नरान्तकः कुमारः अङ्गदेन सह योद्धुम् अघटिष्ट घटते स्म। राक्षसः प्रासं कुन्तं प्रैषिषत् प्रेषितवान्। इषु गतावित्यस्य ण्यन्तस्य चङि रूपम्। स प्रासोऽङ्गदोरसि अस्फोटीत् विशीर्णः॥ ७७॥ ज० म०

अङ्गदेनेत्यादि। नरान्तकः कुमारः अङ्गदेन सह योद्धुं चेष्टितवान्। घटषङ्-म चेष्टे। स राक्षसः प्रासं कौन्तं प्रेषितवान्। इष सर्पणे। अस्यतेरङ्, ईष ङ दानेऽस-हिंसे चेत्यस्य रूपं वा। अयञ्च चकारात् सर्पणेऽपि, स प्रासः, अङ्गदस्य वक्षसि अस्फोटीत् विदीर्णः। स्फुटिर्विसरणे॥ ७७॥ भ०

अश्वानित्यादि। बालिसुतोऽश्वान् रथयुक्तान् अहिंसीत् व्यापादितवान्। हृह-हिसि हिंसायाम्। मुष्टिना पाणिना अतताड़त् आहतवान्। तड़ आघाते। ताड़नं ताड़ः भावे घञ्। ताड़ङ्करोतीति णिच णाविष्ठवदिति टिलोपः, णौ चङ्युपधाया नाग्लोपिशास्वृदितामिति ह्रस्वप्रतिषेधः। स च रावणिः अव्यथो व्यथारहितः हता-

तस्याहारिषत प्राणा मुष्टिना बालिसूनुना।
प्राद्रुद्रुवंस्ततः क्रुद्धाः सर्वे रावणयोऽङ्गदम्॥ ७९ ॥
ततो नीलहनूमन्तौ रावणीनववेष्टताम्।
अकारिष्टां गिरींस्तुङ्गानरौत्सीत्त्रिशिराः शरैः॥ ८० ॥
परिघेणावधिष्टाथ रणे देवान्तको बली।
मुष्टिनाददरत्तस्य मूर्द्धानं मारुतात्मजः॥ ८१ ॥

श्वात् रथात् अवतीर्य्य मह्यीं गतः सन् योद्धुम् आरब्ध आरभते स्म। झलोझलीति सिचोलोपः, धत्वञ्च ॥ ७८ ॥ ज० म०

अश्वानित्यादि। बालिसुतोऽङ्गदो नरान्तकस्य अश्वान् हिंसितवान्। हिंस धिंकि हिंसे। मुष्टिना राक्षसं ताड़ितवांश्च। तड़क् द्विधीत्यस्मात् भावे घञ्, तं करोतीति ञ्यन्तादङ्, अग्लोपित्वात् उङो ह्रस्वाभावः। स च रावणपुत्रो व्यथारहितः हताश्वत्वात् रथात् अवतीर्य्य मह्यींगतः सन् योद्धुम् आरब्धवान्। रभोङ स्यात्तु राभस्ये झसस्तात्झसीति सेर्लोपः। रावणस्यापत्यमिति बाह्वाद्यत इति णिः॥ ७८ ॥ भ०

तस्येत्यादि। तस्य प्राणाः बालिपुत्रेण अहारिषत हृताः। कर्म्मणि लुङ्। चिण्वद्भावः। ततोऽनन्तरं सर्वे रावणयः रावणस्य अपत्यानि देवान्तकादयः क्रुद्धाः सन्तोऽङ्गदं प्राद्रुद्रुवन् गतवन्तः। णिश्रीत्यादिना चङ्॥ ७९ ॥ ज० म०

तस्येत्यादि। बालिसूनुना अङ्गदेन तस्य प्राणा मुष्टिना करणेन हृताः। हृञः कर्म्मणि हनग्रहदृशश्च इति मिण्। ततोऽनन्तरं सर्वे रावणपुत्राः क्रुद्धाः सन्तः अङ्गदं प्रद्रुतवन्तः जग्मुः इत्यर्थः। ञिश्रीत्यङ्॥ ७९ ॥ भ०

तत इत्यादि। ततो रावणीन् अङ्गदाभिमुखम् आगच्छतो नीलो हनूमांश्च अववेष्टतां वेष्टितवन्तौ। विभाषा वेष्टिचेष्ट्योरित्यभ्यासस्यात्त्वं, गिरींश्च अकारिष्टां विक्षिप्तवन्तौ। कॄ विक्षेपे। सिचि वृद्धिः। तांश्च गिरीन् निक्षिप्तान् त्रिशिराः शरैः तुङ्गान् अरौत्सीत् आवृतवान्। रुधिरावरणे॥ ८० ॥ ज० म०

तत इत्यादि। अनन्तरम् अङ्गदं प्रति गच्छतो रावणपुत्राम् नीलहनूमन्तौ वेष्टितवन्तौ, गिरींश्च विक्षिप्तवन्तौ। कॄ श्र विक्षेपे। अजन्तत्वात् त्रिः। तान् क्षिप्तान् गिरीन् त्रिशिराः शरैः निरुद्धवान्। रुधिर्धौञि आवृतौ ङाभावपक्षे सिः॥ ८० ॥ भ०

परिघेणेत्यादि। अथ देवान्तको बली परिघेण अवधिष्ट हतवान्। आङो यम-

अदीदिपत्ततो वीर्य्यं नीलञ्चापीपिडच्छरैः ।
युद्धोन्मत्तस्तु नीलेन गिरिणानायि संक्षयम् ॥ ८२ ॥
अवभ्राजत्ततः शक्तिं त्रिशिराः पवनात्मजे ।
हनूमता क्षतास्तस्य रणेऽमृषत वाजिनः ॥ ८३ ॥

---

हन इति तङ् । अविवक्षितकर्मकत्वादात्मनेपदेष्वन्यतरस्यामिति हनो बधादेशः । तस्य घ्नतो मूर्द्धानं मारुतात्मजः मुष्टिना अददरत् दारितवान् । दृ विदारणे । ण्यन्तस्य चङ्, परे णौ अत् स्मृ-दृ-त्वरेत्यादिनाभ्यासस्यात्वम् ॥ ८१ ॥ ज० म०

परिघेणेत्यादि । अथ बली देवान्तको रणे परिघेण आहतवान् । आत्माङ्गढा-दढाद्येति मम्, अविवक्षितकर्म्मत्वादकर्म्मकत्वं, हनवधश्चेति पक्षे बधादेशः । तस्य मूर्द्धानं पवनात्मजो हनूमान् मुष्टिना दारयामास । दृयगिविदारे । स्मृ-दृ-त्वरप्रथेति खेरङ् ॥ ८१ ॥ भ०

अदीदिपदित्यादि । ततो देवान्तकविनाशादनन्तरं युद्धोन्मत्तः सुतानां रक्षार्थं यः प्रेषितः स वीर्य्यम् अदीदिपत् । भ्राजभासेत्यादिना ह्रस्वाभावपक्षे रूपं, नीलञ्च शरैः अपीपिडत् पीड़ितवान् । ह्रस्वाभावपक्षे रूपम् । अपीपरदिति पाठान्तरं, पूरित-वानित्यर्थः । पृ पूरणे इति चुरादिः । स तु नीलेन क्षयं गिरिणा अनायि नीतः । कर्म्मणि लुङ् ॥ ८२ ॥ ज० म०

अदीदिपदित्यादि । ततो देवान्तकबधानन्तरं युद्धोन्मत्तो नाम राक्षसः स्ववीर्य्यं दीपयामास । भ्राजभाशभासभासेत्यादिना पाक्षिक उङो ह्रस्वः, खेः सन्वल्लघाविति दीर्घः । शरैश्च नीलं पीड़यामास । पूर्ववदुङो ह्रस्वः । अपीपरदिति पाठे—पृक पूर्त्तौ । स तु नीलेन गिरिणा संक्षयं नीतः । कर्म्मणि रतनीरितीण् ॥ ८२ ॥ भ०

अवभ्राजदित्यादि । ततोऽनन्तरं त्रिशिराः कुमारः पवनात्मजविषये शक्तिं वीर्य्यम् अवभ्राजत् दीपयति स्म । भ्राजेत्यादिना ह्रस्वाभावपक्षे रूपम् । तस्य वाजिनो रथयुक्ता रणे हनूमता हताः सन्तः अमृषत मृताः । म्रियतेर्लुङ्ङीति तङ् ॥ ८३ ॥ ज० म०

अवभ्राजदित्यादि । तदनन्तरं त्रिशिराः कुमारो हनूमद्विषये शक्तिं दीप-यति स्म । भ्राजृङ्णटु च । चकाराद्भासि उङो ह्रस्वाभावपक्षे रूपमिदम् । तस्य वाजिनो रथाश्वाः हनूमता क्षताः ताड़िताः सन्तो मृताः । हङ्ष्टोव्येमम् इगुङ्र्मढीति कित्त्वात् गुणाभावः ॥ ८३ ॥ भ०

अस्रसच्चाहतो मूर्ध्नि खड्गं चाजीहरद् द्विषा।
प्राणानौज्झीच्च खड्गेन छिन्नैस्तेनैव मूर्द्धभिः॥ ८४॥
मत्तेनामारि सम्प्राप्य शरभास्तां महागदाम्।
सहस्रहरिणाक्रीड़ीदतिकायस्ततो रणे॥ ८५॥
रथेनाविव्यथच्चारीन् व्यचारीच्च निरङ्कुशः।
विभीषणेन सोऽख्यायि राघवस्य महारथः॥ ८६॥

---

अस्रेत्यादि। त्रिशिराश्च हनूमता मूर्ध्नि हतः सन् रथात् भूमौ अस्रसत् रथात् भूमौ स्रस्तः। द्युभ्यो लुङीति परस्मैपदं, द्युतादित्वादङ्, किङ्तीत्यनुनासिकलोपः। स्रस्तश्च स खड्गं हस्तस्थं द्विषा हनूमता आजीहरत् हारितवान्, तेनैव च खड्गेन छिन्नैः मूर्द्धभिः हेतुभूतैः प्राणान् औज्झीत् त्यक्तवान्। उज्झ उत्सर्गे॥ ८४॥ ज० म०

अस्रसदित्यादि। हनूमता मूर्ध्नि आहतश्च, त्रिशिरा रथात् भ्रष्टः। स्रंसन्-मुड्भ्रंशे, द्युतादित्वात् ङः, तेनैव पं, हस्तुङ्लोपः। स्रस्तः सन् स्वहस्तस्थितं खड्गं द्विषा हनूमता हारितवान्, तद्व्याकुलत्वेन हनूमता खड्गो हृत इत्यर्थः। हृञ् हृत्यां, आन्तादङ्, घोऽऔञेरित्यादिना प्रयोज्यस्य न कर्मत्वं, पाक्षिकत्वात्। तेनैव खड्गेन छिन्नैः मूर्द्धभिः हेतुभूतैः स त्रिशिराः प्राणान् त्यक्तवान्। उज्झश्च त्यागे॥ ८४॥ भ०

मत्तेनेत्यादि। शरभेण वानरेण अस्तां क्षिप्तां महागदां प्राप्य मत्तेन सुतानां रक्षार्थं प्रेषितेन राक्षसेन अमारि मृतं, भावे लुङ्। ततोऽनन्तरम् अतिकायो राजपुत्त्रो रणे अक्रीड़ीत् विहरति स्म। रथेनेति वक्ष्यति सहस्रं हरयोऽश्वा यस्य रथस्य॥ ८५॥ ज० म०

मत्तेनेत्यादि। शरभेण कपिना क्षिप्तां महागदां सम्प्राप्य मत्तेन रक्षसा मृतं, भावे टी। मत्तेन या गदा शरभाय क्षिप्ता तयैव शरभः तं मारयामास इत्यर्थः। तदनन्तरम् अतिकायः कुमारो रणे क्रीड़ति स्म, क्रीड़ खेले। केन सहस्रहरिणा सहस्राश्वयुक्तेन रथेन इत्यग्रिमश्लोकेन सम्बन्धः॥ ८५॥ भ०

रथेनेत्यादि। अरींश्च अविव्यथत् पीड़ितवान्। व्यथेर्ण्यन्तस्य चङि रूपम्। निरङ्कुशश्च अप्रतिहतशक्तिः व्यचारीत् भ्राम्यति स्म, रान्तत्वाद्वृद्धिः। स विचरन् महारथः विभीषणेन राघवस्य आख्यायि कथितः, कर्मणि लुङ्॥ ८६॥ ज० म०

अतस्तम्भदयं वज्रं स्वयम्भुवमतूतुषत्।
अशिक्षिष्ट महास्त्राणि रणेऽरक्षीच्च राक्षसान्॥ ८७॥
अध्यगीष्टार्थशास्त्राणि यमस्याक्रोष्ट विक्रमम्।
देवाहवेष्वदीपिष्ट नाजनिष्टास्य साध्वसम्॥ ८८॥
एष रावणिरापादि वानराणां भयङ्करः।

रथेनेत्यादि। चकारः समुच्चये। अरीन् शत्रून् अविव्यथत् पीड़यामास। व्यथेर्ण्यन्तस्य णिश्रिद्रु इत्यादिना चङ्। निरङ्कुशश्च अव्याहतगतिः सन् व्यचारीत् बभ्राम। राघवस्य रामस्य सम्बन्धे विभीषणेन महारथोऽख्यायि सोऽयमागत इति निर्दिष्ट इत्यर्थः॥ ८६॥ भ०

कीदृशः कथित इत्याह। अतस्तम्भदित्यादि। अयं स्वशक्त्या वज्रम् अतस्तम्भत् स्तम्भितवान्। ष्टभिस्तम्भिप्रतिस्तम्भे, ण्यन्तस्य णिश्रीत्यादिना चङ्। स्वयम्भुवम् अतूतुषत् उग्रेण तपसा आराधनात् तोषितवान्। तुष प्रीतौ ण्यन्तः। महास्त्राणि दिव्यानि च अशिक्षिष्ट शिक्षते स्म। शिक्ष विद्योपादाने। रणे च राक्षसानरक्षीत् रक्षति स्म॥ ८७॥ ज० म०

अतस्तम्भदित्यादि। अयं वज्रं स्तम्भयामास निवारितवान्। ष्टभिस्तभिङ् स्तम्भे अन्तादङ्। स्वयम्भुवं ब्रह्माणं तोषितवान् तपसेत्यर्थात्, स्वयम् आत्मना भुवं पालनेन तोषितवान् इत्यन्ये। तुष तुष्टौ। अन्तादङ्। उङो ह्रस्वत्वे खेः सन्वदिति दीर्घः। महास्त्राणि अशिक्षिष्ट शिक्षते स्म। शिक्ष ङ् शिक्षणे। राक्षसान् रक्षितवांश्च॥८७॥भ०

अध्यगीष्टेत्यादि। अर्थशास्त्राणि पराभिसन्धानार्थानि अध्यगीष्ट अधीतवान्। विभाषा लुङ् लृङोरिति इङोगाङादेशः। यमस्यापि अयं विक्रमम् अक्रोष्ट अपनीतवान्। क्रुङ् अपनयने। अहलन्तत्वात्सिचो न कित्त्वम्। देवाहवेषु अदीपिष्ट शोभितः, अस्य च साध्वसं भयं नाजनिष्ट न जातं, दीपजनेत्यादिना चिण्वद्भावपक्षे रूपम्॥ ८८॥ ज० म०

अध्यगीष्टेत्यादि। अर्थोपयुक्तानि शास्त्राणि असौ अधीतवान्। गीङ्ष्टौष्यौर्वा। यमस्य विक्रमम् अपकृतवान्। क्रुङ् चौर्य्ये। देवाहवेषु असौ दीप्यते स्म। अस्य साध्वसं भयं कुत्रापि न जातं, पदस्तनीण् ये इत्यादेरप्रवृत्तिपक्षे सिः॥ ८८॥ भ०

एष इत्यादि। य एवं स एष रावणिः आपादि अस्माकं समीपम् आगतः। पद

आह्वताथ स काकुत्स्थं धनुश्चापुस्फुरद्गुरु ॥ ८९ ॥
सौमित्रिः सर्पवत् सिंहमार्दिदत्तं महाहवे।
तौ प्रावीवृततां जेतुं शरजालान्यनेकशः ॥ ९० ॥
अच्छैत्ताञ्च महात्मानो चिरमश्रमतां न च।
तथा तावास्थतां बाणानतानिष्टां तमो यथा ॥ ९१ ॥

---

गतौ। चिण् ते पद इति चिण्। यतो रावणिः वानराणां भयङ्करः अथ सोऽतिकायः समीपम् आगतः काकुत्स्थम् आह्वत युद्धाय आह्वतवान्। आत्मनेपदेष्वन्यतरस्यामिल्यङ्। धनुश्च गुरु महदपि अपुस्फुरत् स्फारितवान्। चिस्फुरोर्णावित्यालम् ॥८९॥ ज०म०

एष इत्यादि। य एवम्भूत स एष रावणपुत्रोऽतिकाय आपादि आगतः। यौपदङ् गतौ पदस्तनोर्णुघे। यतो यस्मात् वानराणां भयम् उत्पन्नमिति विभीषणेनाख्यायीति सम्बन्धः। भयङ्कर इति क्वचित् पाठः। सोऽतिकायो रामम् आह्वत। स्पर्धायामाङ् इति मं, वक्तयस्येति ङः। गुरु महत् धनुः स्फारितवान्। स्फुरशि स्फूर्त्तौ। अन्नादङ्। क्रीजीङ इत्यादिना पाक्षिक उकारस्याकारः ॥ ८९ ॥ भ०

सौमित्रिरित्यादि। यथा सर्पः सिंहं गच्छति तद्वत् तम् अतिकायम् आर्दिदत् गतवान्। अर्द गतौ। अर्दनमर्दः तत्करोतीति णिच्, तदन्ताच्चङि रूपम्। अर्द हिंसायामिति चौरादिको वा। तौ सौमित्र्यतिकायौ जेतुं शरजालानि प्रावीवृततां बहूनि प्रवर्त्तितवन्तौ। उऋदिति णौ, चङ्युपधाया अपवादऋकारः ॥ ९० ॥ ज० म०

सौमित्रिरित्यादि। लक्ष्मणः तं महाहवे आर्दिदत् पीड़ितवान्, सिंहं सर्प इव एकगुहास्थतया तयोः विरोधात्। अर्दक् च चकारात् वधे। चुरादिअन्नादङ्। अर्द यातनागतियाचन इत्यस्मात् चुर्थोञिर्वेत्यस्य योगविभागात् वा ञिः। घञन्तात् ञिरिति केचित्। तौ लक्ष्मणातिकायौ जेतुम् अनेकशो बहूनि शरजालानि प्रवर्त्तितवन्तौ। वृत ङ्वृतु वर्त्तने। अन्नादङ्। वर्द्धुङोधुरिति पक्षे गुणाभावः ॥ ९० ॥ भ०

अच्छैत्तामित्यादि। तौ च महात्मानौ परस्परस्य शरजालानि अच्छैत्तां छिन्नवन्तौ। इरितो वेत्यङभावपक्षे रूपं, झलोझलीति सिचोलोपः। चिरं चिरेणापि नाश्रमतां न श्रान्तौ। श्रमिः पुषादिः। तौ तथा बाणान् आस्थतां क्षिप्तवन्तौ। अस्यति वक्तीत्यङ्, अस्यतेस्थुक्। यथा अन्धकारम् अतानिष्टां विस्तारितवन्तौ, अतो हलादेर्लघोरिति वृद्धिविकल्पः ॥ ९१ ॥ ज० म०

सौर्य्याग्नेये व्यकारिष्टामस्त्रे राक्षसलक्ष्मणौ ।
ते चोपागमतां नाशं समासाद्य परस्परम् ॥ ९२ ॥
अविभ्रजत्ततः शस्त्रमैषीकं राक्षसो रणे ।
तदप्यध्वसदासाद्य माहेन्द्रं लक्ष्मणेरितम् ॥ ९३ ॥
ततः सौमित्रिरस्राक्षीद्‌देविष्ट च दुर्जयम् ।

अच्छैत्तामित्यादि । तौ च महात्मानौ महायत्नौ परस्परं शरजालानि छिन्न-वन्तौ । छिदिर् धीञ् च्छेदे । ङाभावपक्षे सिः, अनिम्त्वाद्वृत्रिः, झसस्थाज्झसीति सिलोपः । "आत्मा यत्नो धृतिर्बुद्धिः" इत्यमरः । चिरं बहुनापि कालेन न श्रान्तौ, श्रमु तपः-खेदयोः । तथा तौ बाणान् चिप्तवन्तौ, यथा तमोऽन्धकारं विस्तारित-वन्तौ । अस्यु इर् चेपे । वक्त्यस्येति ङः, वच्यस्यश्विपतामित्यस्थादेशः, तन दुञ् विस्तृतौ, ह्यसादेः सेम इति पक्षे ञिः ॥ ९१ ॥ भ०

सौर्य्याग्नेये इत्यादि । राक्षसः सौर्य्यम् अस्त्रं व्यकारीत् विक्षिप्तवान् । कॄ विक्षेपे । लक्ष्मणोऽपि आग्नेयम् इत्येवं तौ व्यकारिष्टां, ते च अस्त्रे परस्परम् समासाद्य प्राप्य नाशम् उपागमताम् । लृदित्त्वादङ् ॥ ९२ ॥ ज० म०

सौर्य्येत्यादि । राक्षसलक्ष्मणौ सौर्य्याग्नेये अस्त्रे यथाक्रमं व्यकारिष्टाम् । कॄ श विक्षेपे । सूर्य्यो देवताऽस्येति विकारसङ्घेत्यादिना णः । सौम्येति क्वचित्पाठः । अग्निः देवताऽस्येति पूर्वेण णेयः । ते च अस्त्रे परस्परं समासाद्य प्राप्य नाशम् उपागमतां प्रापतुः । लृदित्त्वात् गमेर्ङः ॥ ९२ ॥ भ०

अविभ्रजदित्यादि । ततोऽनन्तरं रावणिः ऐषीकम् अस्त्रम् । इषीकाया इदं तत्सर्वस्रोतःसु प्रविशत् जीवितम् अपहरति, रणे अविभ्रजत् दीपितवान् । भ्राज-भाशेत्यादिना उपधाया ह्रस्वत्वम् । तदपि अध्वसत् ध्वस्तं ; ध्वसिर्द्युतादिः । लक्ष्मणे-रितं :लक्ष्मणप्रेरितं माहेन्द्रम् अस्त्रम् आसाद्य तद्गतिरोधं कृत्वा ध्वंसयति स्म ॥ ९३ ॥ ज० म०

अभिभ्रजदित्यादि । तदनन्तरं रावणपुत्र ऐषीकम् अस्त्रं रणे भ्राजयामास । भ्राजभासेति पाक्षिक उङ्गो ह्रस्वः । लक्ष्मणेरितं चिप्तं माहेन्द्रम् अस्त्रम् आसाद्य तदपि ऐषीकम् अस्त्रं ध्वस्तं ; महेन्द्रो देवताऽस्येति णः ॥ ९३ ॥ भ०

तत इत्यादि । अनन्तरं सौमित्रिः दुर्जयम् अनभिभवनीयं ब्रह्मास्त्रम् अस्राक्षीत्

ब्रह्मास्त्रं तेन मूर्द्धानमदध्वंसन्नरद्विषः ॥ ९४ ॥
ततोऽक्रन्दीद्दशग्रीवस्तमाशिश्वसदिन्द्रजित्।
निरयासीच्च संक्रुद्धः प्रार्चिचच्च स्वयम्भुवम् ॥ ९५ ॥
अह्वौषीत् कृष्णवर्त्मानं समयष्टास्त्रमण्डलम्।
सोऽलब्ध ब्रह्मणः शस्त्रं स्यन्दनञ्च जयावहम् ॥ ९६ ॥

स्मरति स्म। सिचि वृद्धिः। तच्च स्मरणात् उपस्थितम् अदेविष्ट द्योतते स्म। तेन देव-देवन इति अनुदात्तेत् द्योतने द्रष्टव्यः, देवनस्य अनेकार्थत्वात्। तेन च ब्रह्मास्त्रेण प्रयोज्यकर्त्रा नरद्विषो राक्षसस्य मूर्द्धानम् अदध्वंसत् पातितवान् सौमित्रिः हेतुमण्ण्यन्तात् चङि रूपम् ॥ ९४ ॥ ज० म०

तत इत्यादि। तदनन्तरं सौमित्रिः दुर्जयं ब्रह्मास्त्रं स्मृतवान्। स्मृ स्मृतौ। स्मरणात् उपस्थितं तत् अदेविष्ट शोभते स्म; किं वा स्मरणात् उपस्थिते ब्रह्मास्त्रे सौमित्रिः हर्षात् शोभते स्म, जेतुमिच्छति स्मेत्याद्यर्थो वा। देव ङ् देवने। देवनशब्देन दिवधातोरर्था जिगीषाद्या उच्यन्ते। तेन ब्रह्मास्त्रेण प्रयोज्यकर्त्रा नरद्विषो राक्षसस्य मूर्द्धानं लक्ष्मणो ध्वंसयामास। ध्वन्सु लृङ् गतौ भ्रंशे ञ्यन्तादङ् ॥ ९४ ॥ भ०

तत इत्यादि। ततः सुतमरणानन्तरं दशग्रीवः अक्रन्दीत् रोदिति स्म। तञ्च क्रन्दन्तम् इन्द्रजित् आशिश्वसत् आश्वासितवान्। मयि जीवति किं पृथग्जन-वत् रोदिषीति हेतुमण्ण्यन्तस्य चङि रूपम्। संक्रुद्धश्च निरयासीत् रावणगृहात् निर्गतः। या प्रापणे। निर्गत्य च स्वगृहे स्वयम्भुवं ब्रह्माणं प्रार्चिचत् पूजितवान्। अर्च पूजायामिति चुरादिः चङि अजादिद्विर्वचनम् ॥ ९५ ॥ ज० म०

तत इत्यादि। पुत्रवधानन्तरं दशग्रीवः क्रन्दति स्म। तं रुदन्तम् इन्द्रजित् आश्वासितवान्। मयि स्थिते का चिन्तेति। श्वस प्राणने ञ्यन्तादङ्। स च संक्रुद्धः सन् निर्गतः। यमरमनमात इति यातेरिम्सनौ। स्वगृहात् निर्यातः सन् स्वयम्भुवं ब्रह्माणम् अर्चितवान्। अर्चक् पूजे। चुरादिञ्यन्तादङ् ॥ ९५ ॥ भ०

अह्वौषीदित्यादि। कृष्णवर्त्मानम् अग्निम् अह्वौषीत् हव्येन प्रीणितवान् इत्यर्थः। अस्त्रमण्डलम् आयुधग्रामं समयष्ट पूजितवान्। स इन्द्रजित् ब्रह्मणः सकाशात् जयावहम् अस्त्रं स्यन्दनं चालब्ध लब्धवान्। झलो झलीति सिचो लोपः ॥ ९६ ॥ ज० म०

तमध्यासिष्ट दीप्राग्रममोदिष्ट च रावणिः।
छन्नरूपस्ततोऽकर्त्तीद्देहान्रावणविद्विषाम्॥ ९७॥
सप्तषष्टिं प्लवङ्गानां कोटीर्बाणैरसूषुपत्।
निशान्ते रावणिः क्रुद्धो राघवौ च व्यमूमुहत्॥ ९८॥
अपिस्फवत् स्वसामर्थ्यमगूहीच्छायकैर्दिशः।

अहौषीदित्यादि। इन्द्रजित् कृष्णवर्त्मानम् अग्निं हुतवान्। हु लि होमेऽदने। अस्त्रमण्डलं समयष्ट पूजितवान्। यजँञौ देवार्चादानसङ्गतिकृतौ। स ब्रह्मणः सकाशात् जयावहं जयजनकम् अस्त्रं रथञ्च लब्धवान्। लभ डुँ लृष प्राप्तौ। झलस्त्वादिति सिलोपः॥ ९६॥ भ०

तमित्यादि। तं स्यन्दनं दीप्राग्रम् उपरिभागस्य रत्नप्रत्युप्तत्वात्, अध्यासिष्ट अध्यासितवान्। अधिशीङिति कर्मसंज्ञा। तत्रस्थश्च रावणिः इन्द्रजित् अमोदिष्ट हृष्टवान्। ततोऽसौ छन्नरूपः अदृश्यः सन् रावणविद्विषां वानराणां देहान् अकर्त्तीत् छिन्नवान्। कृती छेदने। सेऽसिचीत्यादिना सिचोऽन्यत्वेड्विकल्पः। रावणिविद्विषामिति पाठान्तरम्। तत्र देवान्तकादिविद्विषामित्यर्थः॥ ९७॥ ज० म०

तमित्यादि। रावणपुत्र इन्द्रजित् तं स्यन्दनं दीप्राग्रम् उपरिभागस्य रत्नमयत्वात् अध्यासितवान्। ञि आस ङ् उपवेशे। कर्मक्रियेत्यादिना ङस्य ढत्वम्। अमोदिष्ट च हर्षं प्राप च। ञि मुद ङ हर्षे। असौ छन्नरूपोऽदृश्यः सन् रावणविद्विषां वानराणां देहान् कृन्तति स्म। कृती शप छिदि। रावणिविद्विषामिति पाठे—देवान्तकादिशत्रूणामित्यर्थः॥ ९७॥ भ०

सप्तषष्टिमित्यादि। वानराणां कोटीः सप्तषष्टिं बाणैः असूषुपत् स्वापितवान्, व्यापादितवान् इत्यर्थः। स्वपेश्चङीति सम्प्रसारणम्। निशान्ते च निशावसाने रावणिः क्रुद्धः सन् राघवौ व्यमूमुहत् मोहितवान्। मुह वैचित्त्ये णौ चङि रूपम्॥ ९८॥ ज० म०

सप्तषष्टिमित्यादि। प्लवङ्गानां सप्ताधिकषष्टिं कोटीः बाणैः इन्द्रजित् स्वापयामास। स्वपौ वलुञि शये। आन्तादङ्, स्वपो जिरिति जिः। निशाया अन्ते रावणपुत्रः क्रुद्धः सन् राघवौ अपि मोहयामास। मुह ञिल्ह वैचित्त्ये। आन्तादङ्॥ ९८॥ भ०

अपिस्फवदित्यादि। तौ मोहयित्वा आत्मीयं सामर्थ्यम् अपिस्फवत् वर्द्धयति

अघोरीच्च महाघोरं गत्वा प्रैषीच्च रावणम् ॥ ९९ ॥
विभीषणस्ततोऽबोधि सस्फुरौ रामलक्ष्मणौ।
अपारीत् स गृहीतोल्को हतशेषान् प्लवङ्गमान् ॥ १०० ॥
मा शोचिष्ट रघुव्याघ्रौ नाम्नपातामिति ब्रुवन्।
अवावृत्त स नीलादीन् निहतान् कपियूथपान् ॥ १०१ ॥

स्म, ईदृशसादृशोऽहमिति, स्फायी व इति णौ वत्वम्। दिशः शायकैः अगूहीत् छादितवान्। नेटीति हृद्धिप्रतिषेधः, हान्तत्वात्। महाघोरञ्च अतिरौद्रं शब्दम् अघोरीत् मुक्तवान्। गत्वा च लङ्कां रावणं प्रैषीत् प्रेषितवान्, गच्छ तात! मम अद्भुतपराक्रमं द्रष्टुमिति। इषु गतौ ॥ ९९ ॥ ज० म०

अपीत्यादि। इन्द्रजित् आत्मीयं सामर्थ्यं वर्द्धयामास। स्फायी ङ् संवृद्धौ। ञिःपातिस्फायोरिति वङ्। शायकैः बाणैः शत्रून् अगूहीत् आच्छादितवान्। गुह ञ संवृतौ। ऊदित्त्वादिम्। गुहीणोरू:। महारौद्रम् अघोरीत् शब्दं चक्रे। घुर श ध्वनौ भीमार्थे। लङ्कां गत्वा रावणं प्रीणाति स्म। प्री ञ तर्पणे। प्री ग ञ कान्तौ चेत्यस्य वा रूपम्; अयमपि चकारात् तर्पणे। किं वा रावणं प्रेरयामास जितशत्रून् द्रष्टुम् इत्यर्थात्। इष सर्पणे ॥ ९९ ॥ भ०

विभीषण इत्यादि। ततः तस्मिन् काले विभीषणः रामलक्ष्मणौ सस्फुरौ चलन्तौ अबोधि बुद्धवान्, जीवितावितिः। दीप जनेत्यादिना कर्त्तरि चिण्। स्फुरणं स्फुरः घञर्थे कविधानं, यदुक्तं स्थास्नागाव्यधिहनियुध्यर्थमिति तदुपलक्षणं न परिगणनम्। स विभीषणः अन्धकारात् गृहीतोल्कः सन् हतशेषान् प्लवङ्गमान् अपारीत् मा भैष्टेति प्रीणितवान् ॥ १०० ॥ ज० म०

विभीषण इत्यादि। तदनन्तरं स विभीषणो रामलक्ष्मणौ सस्फुरौ स्फुरन्तौ अबोधि ज्ञातवान्। पदरुजनीष् घे इत्यादिना इण्। स्फुर ञि स्फुर्त्तौ। पचादित्वादन्, कुटां शश्री ञितीति नियमात् गुणाभावः। इगुपधत्वात् कृगृज्ञाप्रीजुङ इति कप्रत्ययो वा। अन्ये तु भावेऽपि कः प्रत्ययः स्यादित्युक्त्वा सस्फुरावित्यत्र सहशब्देन समासं कुर्वन्ति। स विभीषणोऽन्धकारात् गृहीतोल्को हतशेषान् वानरान् अपारीत् अभयदानेन पालयामास। पृ लि पालने ॥ १०० ॥ भ०

मा शोचिष्टेत्यादि। यूयं मा शोचिष्ट शोकं मा कुरुत। माङि लुङ्। यस्मात्

तत्रैषज्जाम्बवान् प्राणीदुदमोलीच्च लोचने ।
पौलस्त्यश्चागदीत् कच्चिदजीवीन्मारुतात्मजः ॥ १०२ ॥
तस्य चेमे महाराज ! नाम्नषम्याखिला वयम् ।
पौलस्त्योऽशिश्रवत्तञ्च जीवन्तं पवनात्मजम् ॥ १०३ ॥

---

रघुव्याघ्रौ नाम्नषातां न मृतौ, इत्येवं ब्रुवन् अपारीदिति योज्यम् । ये च निहताः तान् नीलादीन् कपियूथपान् स विभीषणः परिभ्रमन् अवाबुद्ध अवबुद्धवान्, एते हताः इति । दीपेत्यादिना चिणो विकल्पितत्वात् अभावपक्षे रूपम् ॥ १०१ ॥ ज० म०

मा शोचिष्टेत्यादि । यूयं मा शोकं कुरुत । शुच शोके । रघुश्रेष्ठौ रामलक्ष्मणौ नाम्नषातां न मृतौ इति ब्रुवन् अपारीदिति पूर्वश्लोकेन सम्बन्धः । अथ नीलादीन् कपियूथपान् निहतान् बुद्धवान् । पदस्तनीण् घे इत्यस्याप्रवृत्तिपक्षे सिः, झसस्यादिति सिलोपः ॥ १०१ ॥ भ०

तत्रेत्यादि । तत्र तेषु :जाम्बवान् ईषत् मनाक् प्राणीत् उच्छ्वसिति स्म । अन प्राणने । अनितेरिति णत्वम् । लोचने च उदमीलीत् उन्मीलितवान् । मील च्मील निमेषणे । पौलस्त्यश्च विभीषणम् अगदीत् गदितवान् । अतो हलादेरलङ्घौ रूपम् । कच्चित् किं हनूमान् अजीवीत् जीवितवान् न मृत इति ॥ १०२ ॥ ज० म०

तत्रेत्यादि । तेषु मध्ये जाम्ववान् ईषत् प्राणीत् उच्छ्वसिति स्म । अन घ्लु प्राणने । प्राग्वन्नो ण इत्यादिना पाचिकं णत्वम् । लोचने अमीमिलत् मीलयामास । मी लृ निमेषे । ञन्तादङ्, भाजभासेति पाचिक उङो ह्रस्वः । उदमीलीच्चेति पाठे—सिः ईमिमौ । उदमीलच्चेति पाठोऽशुद्ध एव, ङविषयाभावात् न च शप् व्यधिकारात् न च पञ्च रः शिच्चेति व्या रत्वेऽपि क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति शप् बक्तुं शक्यः । कुत्रचित् केनचिदनुक्तत्वात् पुषादिपाठः स्वीकर्त्तव्य इत्यन्ये । पौलस्त्यं विभीषणञ्च गदितवान् । गद भाषे । हसादेः सेम इति पक्षे त्रिः । किम् अगदीदित्याह,—मारुतात्मजो हनूमान् जीवितवान् । कच्चित् कामप्रवेदने । जीव ऋ प्राणे । आशंसायां टी, अभिधानात् मा टीवेत्यत्र योगविभागात् वा ॥ १०२ ॥ भ०

तस्येत्यादि । तस्य हनूमतः चेमे जीवितत्वे *सति हे महाराज ! अखिलाः सर्व एव वयं नाम्नषाहि न मृताः, इति आशंसायां भूतवच्चेति लुङ् । एवमुक्तः पौलस्त्यो जीवन्तं पवनात्मजं तम् अशिश्रवत् श्रावितवान् । श्रुणोतेर्ण्यन्ताच्चङि सन्वद्भावे अभ्यासे वर्णस्य स्रवति शृणोतीत्यादिना इत्वपक्षे रूपम् ॥ १०३ ॥ ज० म०

आयिष्ट मारुतिस्तत्र तौ चाप्यहृषतां ततः।
प्राहैष्टां हिमवत्पृष्ठे सर्वौषधिगिरिं ततः॥ १०४॥
तौ हनूमन्तमानेतुमोषधीं मृतजीवनीम्।
सन्धानकरणीं चान्यां विशल्यकरणीं तथा॥ १०५॥
प्रोदपाति नभस्तेन स च प्रापि महागिरिः।

तस्येत्यादि। हे महाराज! विभीषण! हनूमतः क्षेमे कुशले सति सर्वं एव वयं न मृताः। मृङ्प्राणत्यागे मृङ्श्रीङ्वे मम् इगुङ्र्मढीति कित्त्वाद्गुणाभावः। अत्रापि आशंसायां टीत्यन्ये। एवमुक्तः पौलस्त्यो विभीषणो जीवन्तं पवनात्मजं तं जाम्बवन्तं श्रावयामास। श्रोर्ज्ञन्तादङ्। शुस्रुदु इत्यादिना खिङ्गतः पाचिकमित्त्वं, धीऽत्रौ ञेरिति प्रयोज्यस्य कर्मत्वम्॥ १०३॥ भ०

आयिष्टेत्यादि। तत्र पौलस्त्याहृतो मारुतिः आयिष्ट आगतवान्। अयः गतावाङ्पूर्वः। ततोऽनन्तरं तौ जाम्बवद्विभीषणौ अहृषतां हृष्टवन्तौ। हृष तुष्टौ पुषादिः। ततः तौ हृष्टौ हनूमन्तमिति वक्ष्यमाणेन सम्बन्धः। प्राहैष्टां प्रहितवन्तौ। सिचि हृद्धिः। हि गतौ। हिमवत्पृष्ठे हिमवतः पृष्ठे सर्वौषधिगिरिं सर्वा ओषधयो यस्मिन् इति॥ १०४॥ ज० म०

आयिष्टेत्यादि। तत्र देशे पौलस्त्येन आहूतो मारुतिः आहिष्ट आगतः। अहि ङ् गतौ। आयिष्टेति पाठे—अय ङ् गतौ। ततोऽनन्तरं तौ च जाम्बवद्विभीषणौ हर्षं प्रापतुः। हृष्य ञि तुष्टौ पुषादिः। ततः तौ हिमालयस्य पृष्ठभागे सर्वा ओषधयो यत्र तं गिरिं प्राहैष्टां प्रस्थापितवन्तौ। हनूमन्तमित्युत्तरश्लोकेनान्वयः। हि न वर्द्धने गतौ॥ १०४॥ भ०

ताविन्यादि। या मृतं जीवयति या च क्षतस्य सन्धानं करोति, तथा विशल्यञ्च या करोति; कृत्यल्युटौ बहुलं, ताम् ओषधीम् आनेतुं प्राहैष्टामिति योज्यम्। ओषधेश्च विभक्तावप्रथमायामिति दीर्घत्वम्॥ १०५॥ ज० म०

ताविन्यादि। या मृतं जीवयति, या च क्षतस्य सन्धानं करोति, या च विशल्यं करोति, ता ओषधीः आनेतुं हनूमन्तं तौ प्राहैष्टामिति पूर्वेणान्वयः। कभावेऽमी इति कर्त्तरि अनट्, नन्दादिर्वा॥ १०५॥ भ०

प्रोदपातीत्यादि। तेन हनूमता नभः प्रोदपाति उत्पतितं स च महागिरिः

यस्मिन्नज्वालिषू रात्रौ महौषध्यः सहस्रशः ॥ १०६ ॥
निरचायि यदा भेदो नौषधीनां हनूमता ।
सर्व एव समाहारि तदा शैलः सहौषधिः ॥ १०७ ॥
प्राणिषुर्निहता केचित् केचित्तु प्रोदमीलिषुः ।
तमोऽन्येऽहासिषुर्योधा व्यजृम्भिषत चापरे ॥ १०८ ॥

तेन प्रापि प्राप्तः कर्मणि लुङ् । यस्मिन् गिरौ महौषध्यः सहस्रशोऽनेकधा रात्रौ अज्वालिषुः दीप्यन्ते स्म, अतो ल्लान्तस्येति वृद्धिः ॥ १०६ ॥ ज० म०

प्रोदपातीत्यादि । तेन हनूमता नभ आकाशम् उत्पतितं, स च महागिरिः प्राप्तः, उभयत्र कर्मणि लुङ् । यस्मिन् महागिरौ सहस्रशो महौषधयो रात्रौ ज्वलन्ति स्म, व्रजवदेति व्रिः ॥ १०६ ॥ भ०

निरचायीत्यादि । यदा हनूमता ओषधीनां भेदो न निरचायि विशेषतो न निश्चितः, तदा कृत्स्न एव शैलः सहौषधिः ओषधिसहितः समाहारि समानीतः । ,०७ ॥ ज० म०

निरचायीत्यादि । यदा हनूमता ओषधीनां प्रागुक्तानां भेदो न निश्चितः तदा ओषधिसहितः समस्त एव शैलः समाहारि समानोतः, उभयत्र कर्मणीण् । सहः सो वेति पक्षे सादेशाभावः ॥ १०७ ॥ भ०

प्राणिषुरित्यादि । तदा ओषधिसन्निधानात् ते निहताः केचिद् योधाः प्राणिषुः उच्छ्वसितवन्तः ; केचित्तु प्रोदमीलिषुः उन्मीलितलोचना बभूवुः । अन्ये तमो मोहम् अहासिषुः त्यक्तवन्तः । यमरमेति सगिटौ । तथाऽन्येऽहसिषुरिति पाठान्तरम् ; तत्र तथाभूतम् आत्मानं दृष्ट्वा सविलासं हसितवन्तः । अपरे व्यजृम्भिषत जृम्भिकां कृतवन्तः । जृम्भ जृभि गात्रविनाम इत्यात्मनेपदी ॥ १०८ ॥ ज० म०

प्राणिषुरित्यादि । प्रभावान् निहताः केचिद् योधाः प्राणिषुः उच्छ्वसिताः, केचित् च उन्मीलितनेत्रा अभूवन्, अन्ये तमो मोहम् अहासिषुः त्यक्तवन्तः । ओ हा लि त्यागे, यमरमेति इमसनौ, ततोऽन्येऽहसिषुरिति पाठे—अनन्तरम् आत्मानं दृष्ट्वा हसितवन्त इत्यर्थः । हस हासे । अपरे जृम्भां कृतवन्तः । जृम्भिङ् च चकारात् जृम्भे ॥ १०८ ॥ भ०

अजिघ्रपंस्तथैवान्यानोषधीरालिपंस्तथा।
एवं तेऽचेतिषुः सर्वे वीर्य्यञ्चाधिषताधिकम्॥ १०९॥
अजिह्लदत् स काकुत्स्थौ शेषांश्चाजीजिवत् कपीन्।
हनूमानथ ते लङ्कामग्निनादीदिपन् द्रुतम्॥ ११०॥
समनात्सीत्ततः सैन्यममार्जीद्भल्लतोमरम्।
अमार्चीच्चासिपत्रादीनबभासत् परश्वधान्॥ १११॥

अजिघ्रपन्नित्यादि। तथा अन्यान् लब्धसंज्ञान् औषधीः अजिघ्रपन् घ्रापितवन्तः, नासिकयाभ्यवहृतवन्तः इत्यर्थः। गतिबुद्धीत्यादिना प्रत्यवसाने कर्मसंज्ञा, जिघ्रतेर्वेति णौ चङ्युपधाया इत्यकारः। तथालिपन् लिप्तवन्तः अन्यान् औषधीभिरिति अर्थात् लिपिसिचीत्यङ्। एवम् अनेन प्रकारेण सर्वेऽचेतिषुः संज्ञां लब्धवन्तः। चिती संज्ञाने। अधिकञ्च वीर्य्यम् औषधिबलात् अधिषत दधति स्म। स्थाध्वोरिच्च॥ १०९॥ ज० म०

अजिघ्रपन्नित्यादि। अन्ये लब्धसंज्ञाः सन्तः अन्यान् औषधीः घ्रापितवन्तः। घ्रा गन्धग्रहणे, तत्र नासिकया भोजनं ज्ञानविशेषो वेति घोऽञौ ञेरित्यादिना प्रयोज्यस्य कर्म्मत्वं, घोरिति पाचिकमुङ् ह्रस्वम्। अन्ये आलिपन् लिप्तवन्तः, शरीरम् औषधीभिरित्यर्थात्। वक्तव्यस्येति ङः। एवम् अनेन प्रकारेण ते सर्वेऽचेतिषुः संज्ञां प्रापुः। चिती संज्ञाने। अधिकञ्च वीर्य्यं शक्तिं दधति स्म। स्थादोर्ङिष्टीमे न णुः॥ १०९॥ भ०

अजिह्लददित्यादि। एवञ्च सति हनूमान् काकुत्स्थौ अजिह्लदत् ह्लादितवान्। ह्लादी सुखे ण्यन्तः। शेषांश्च कपीन् अजीजिवत् जीवयति स्म। अथ ते जीविताः सन्तः लङ्कां द्रुतम् अदीदिपन् दीपितवन्तः। भाजेत्यादिना ह्रस्वपक्षे रूपम्॥ ११०॥ ज० म०

अजिह्लददित्यादि। स हनूमान् रामलक्ष्मणौ ह्लादयामास। ह्लादी ङ् मोदने। ञ्यन्तादङ्। शेषांश्च कपीन् जीवयति स्म। भाजभाषेत्यादिना पक्षे उङो ह्रस्वः। अथ जीविताः सन्तः ते द्रुतं लङ्कां वह्निना दीपयन्ति स्म, पूर्ववदुङो ह्रस्वः॥ ११०॥ भ०

समनात्सीदित्यादि। ततः सैन्यं समनात्सीत् सन्नद्धं, नह्यो ध इति धत्वं, हलन्तलक्षणा वृद्धिः। भल्लतोमरम् अमार्जीत् शोधितवत्। मृजेरूदित्त्वात् पक्षे रूपम्। असिपत्रादीन् अमार्चीत् इड़भावे रूपम्। उभयत्रापि मृजेर्वृद्धिः। परश्वधान्

कुम्भकर्णसुतौ तत्र समनद्धां महाबलौ ।
निकुम्भश्चैव कुम्भश्च प्रापतां तौ प्लवङ्गमान् ॥ ११२ ॥
अगोपिष्टां पुरीं लङ्कामगोप्तां रक्षसां बलम् ।
अत्याक्तामायुधानीकमनैष्टाञ्च क्षयं द्विषः ॥ ११३ ॥
अकोकूयिष्ट तत् सैन्यं प्रपलायिष्ट चाकुलम् ।

अवभासत् दीपितवान् । भ्राजभासेति ङस्वपक्षे रूपम् । अभासीच्चेति पाठान्तरं, तत्र अन्तर्भावितो ण्यर्थः ॥ १११ ॥ ज० म०

समनात्सीदित्यादि । ततोऽनन्तरं रावणस्य सैन्यं समनात्सीत् सन्नद्धं, णह औ बन्धे, अनिमत्वात् वृद्धिः, नहो धङ् भौ । भल्लं तोमरञ्च अस्त्रम् अमार्जीत् शोधितवत् । मृज लूष शुद्धौ । ऊदित्त्वादिम्, मृजोऽकङितीति वृद्धिः । असिपत्रादीन् खड्गादींश्च अमार्चीत् । इमोऽभावपक्षे रूपं, श्चुत्वाजिति षङ्, षठोः कः । परश्वधान् अवभासत् । भास ङ् दीप्तौ । अ्रन्तादङ् । भ्राजभासेति ङस्वाभावपक्षे रूपम् । अभासीच्चेति पाठे—भातेरन्तर्भूतण्यर्थत्वम् ॥ १११ ॥ भ०

कुम्भकर्णेत्यादि । कुम्भश्चैव निकुम्भश्च कुम्भकर्णसुतौ महाबलौ तत्र सैन्ये समनद्धां सन्नद्धौ, तौ च प्लवङ्गमान् प्रापतां प्राप्तवन्तौ । लृदित्वादङ् ॥ ११२ ॥ ज० म०

कुम्भकर्णेत्यादि । निकुम्भकुम्भौ कुम्भकर्णसुतौ महाबलौ सन्नद्धौ । नहेः पूर्ववत् धङ् । तौ वानरान् प्राप्तौ । आप् लृ व्यौकि व्यापने । लृदित्त्वात् ङः ॥ ११२ ॥ भ०

अगोपिष्टामित्यादि । लङ्काञ्च पुरीम् अगोपिष्टां रक्षितवन्तौ । गुपेरूदित्त्वादिट् पक्षे रूपम् । अगोप्तामितीडभावपक्षे रूपम् । हलन्तलक्षणा वृद्धिः । भलो भलीति सिचो लोपः । आयुधानीकम् आयुधसमूहम् अत्याक्तां त्यक्तवन्तौ विसृष्टवन्तौ । त्यज हानौ । पूर्ववद् वृद्धिः, सिचो लोपः । द्विषः शत्रून् क्षयम् अनैष्टां नीतवन्तौ । सिचि वृद्धिः ॥ ११३ ॥ ज० म०

अगोपिष्टामित्यादि । तौ लङ्कां पुरीम् अगोपिष्टां रक्षितवन्तौ । रक्षसां सैन्यञ्च अगोप्तां, गुपू रक्षे । वाऽऽरे इति आयाभावपक्षे ऊदित्त्वादिम् । अनिम्पक्षे व्रजवदेति वृद्धिः । झलत्वादिति सेर्लोपः । आयुधानीकम् अस्त्रसमूहं त्यक्तवन्तौ, कपीनामुपरीत्यर्थात् । त्यजौ हानौ । द्विषः शत्रून् क्षयं नीतवन्तौ । नीञभ्यां सौ वृद्धिः ॥ ११३ ॥ भ०

अकोकूयिष्टेत्यादि । तत् सैन्यं प्लवङ्गमानां भयात् अकोकूयिष्ट भृशं शब्दं

अच्युतच्च चतं रक्तं हतश्चाध्यशयिष्ट गाम् ॥ ११४ ॥
अङ्गदेनाहसातां तौ युध्यकम्पनकम्पनौ।
अत्यार्द्दीद्वालिनः पुत्रं प्रजङ्घोऽपि समत्सरः ॥ ११५ ॥
तस्याप्यबेभिदिष्टासौ मूर्द्धानं मुष्टिनाङ्गदः।
अहार्षीच्च शिरः चिप्रं यूपाचस्य निराकुलः ॥ ११६ ॥

क्तवत्, कुङ् शब्द इत्यस्मात् यङ्ग्भ्यासस्य न कवतेर्य्यङीति कुङ्युत्वप्रतिषेधः, ततो यङन्तात् लुङ्। प्रपलायिष्ट पलायते स्म, अजादेरङ्गस्य आङजादीनां परयोः अनङ्गत्वात् उपसर्गस्यायताविति लत्वम्। चतश्च खण्डितश्च तत् रक्तम् अच्युतत् चरति स्म। इरितो वेत्यङ्। हतश्च निहतं सत् गाम् अध्यशयिष्ट भूमौ पतितम्। अधिशीङिति कर्मसंज्ञा ॥ ११४ ॥ ज० म०

अकोकूयिष्टेत्यादि। तत् सैन्यं भयात् अकोकूयिष्ट भृशं शब्दं चकार। कुङ् शब्दे। मूत्रसूत्रेत्यादिना यङ्, कोशुर्वेति खेः। पाक्षिकं चुत्वम्, अत्र तदभावः। खेर्गुः घोंऽज्यरे। आकुलं तत् सैन्यं प्रपलायितश्च, चतं खण्डितं तत् सैन्यं रक्तम् अच्युतत् चरति स्म, इरित्वात् ङः। हतं सत् गाम् अध्यशयिष्ट भूमौ पतितम्। कर्मक्रियेति अधिशीङ आधारस्य कर्मत्वम् ॥ ११४ ॥ भ०

अङ्गदेनेत्यादि। अकम्पनः कम्पनश्च तौ ज्येष्ठत्वात् पूर्वनिपातः। युधि संग्रामे। अङ्गदेन अहसतां, कर्मणि लुङ्। आत्मनेपदेष्वन्यतरस्यामिति बधादेशाभावपक्षे रूपम्। प्रजङ्घो नाम राक्षसः समत्सरः सक्रोधः बालिनः पुत्रम् अत्यार्द्दीत् प्रहृतवान्। अर्द हिंसायाम् ॥ ११५ ॥ ज० म०

अङ्गदेनेत्यादि। तौ अकम्पनकम्पनौ युधि संग्रामे अङ्गदेन हतौ, हन्तेः कर्मणि द्विवचनं, हनबधष्टीति मे पक्षे बधादेशाभावः, वनतनाद्यनिमामिति नस्य लोपः। अनन्तरं प्रजङ्घो राक्षसो मात्सर्य्यान्वितः सन् बालिनः पुत्रम् अत्यार्द्दीत् जघान। अर्द ञ बधे। आभिमुख्येन जगाम इति वा। अर्द यातनागतियाचने। "अथ मत्सरः, असह्यपरसम्पत्तौ मात्सर्य्ये क्रपणे क्रुधि" इति विश्वः ॥ ११५ ॥ भ०

तस्येत्यादि। प्रजङ्घस्यापि मूर्द्धानम् असौ अङ्गदो मुष्टिना अबेभिदिष्ट अत्यर्थं भिन्नवान्। भिदेर्यङन्तस्य अतो लोपः यस्य हल इति यलोपे रूपम्। निराकुलश्च नाम वानरः यूपाचस्य राक्षसस्य शिरः चिप्रम् अहार्षीत् छिन्नवान् ॥ ११६ ॥ ज० म०

शरीरं लोहिताक्षस्य न्यभाङ्क्षीद् द्विविदस्तदा।
क्रुद्धः कुम्भस्ततोऽभैत्सीत् मैन्दं सद्विविदं शरैः॥ ११७॥
आघूर्णिष्टां क्षतौ क्ष्मां च तावाशिश्रियतामुभौ।
मातुलौ विह्वलौ दृष्ट्वा कुम्भं बालिसुतो नगैः॥ ११८॥
प्रौर्णावीच्छरवर्षेण तानपौहीन्निशाचरः।
वानरानैजिहद्रामस्तूर्णं रक्षितुमङ्गदम्॥ ११९॥

तस्येत्यादि। असौ अङ्गदः तस्यापि प्रजङ्घस्यापि मूर्द्धानं मुष्टिना अत्यर्थं भिनत्ति स्म। भिदेर्यङ्लुकि सिः। निराकुलो नाम वानरो धूम्राक्षस्य शिरः क्षिप्रं शीघ्रं हृतवान्। निराकुल इति अङ्गदस्य विशेषणं केचित् आहुः॥ ११६॥ भ०

शरीरमित्यादि। द्विविदो नाम वानरो लोहिताक्षस्य शरीरं न्यभाङ्क्षीत् चूर्णितवान्। भञ्ज आमर्दने। ततोऽनन्तरं कुम्भकर्णसुतः मैन्दं वानरं सद्विविदं द्विविदेन सह शरैः अभैत्सीत् भिन्नवान्॥ ११७॥ ज० म०

शरीरमित्यादि। द्विविदो नाम वानरो लोहिताक्षस्य शरीरं अभाङ्क्षीत्। भञ्जो धौ मोटने। ततोऽनन्तरं कुम्भो राक्षसः कुपितः सन् द्विविदेन सह मैन्दं कपिं शरैर्बिभेद। धौ भिदिर्भिदि॥ ११७॥ भ०

आघूर्णिष्टामित्यादि। तौ उभौ क्षतौ आघूर्णिष्टां चक्रवद् भ्रान्तौ, क्ष्मां च भूतलम् आशिश्रियतां श्रितवन्तौ, भूमौ पतितौ इत्यर्थः। णिश्रीत्यादिना चङ्, तौ च ताराभ्रातृत्वात् मातुलौ विह्वलौ दृष्ट्वा बालिसुतो नगैः वृक्षैः कुम्भं प्रौर्णावीदिति वक्ष्यमाणेन सम्बन्धः॥ ११८॥ ज० म०

आघूर्णिष्टामित्यादि। तौ उभौ वानरौ क्षतौ खण्डितौ सन्तौ घूर्णितौ। घूर्ण ञ श भ्रमणे। क्ष्मां भूमिम् आश्रितवन्तौ च। श्रिञ सेवने। ञिश्रीत्यङ्। तौ आत्ममातुलौ व्याकुलौ दृष्ट्वा बालिसुतोऽङ्गदः नगैः कुम्भं, प्रौर्णावीदित्यग्रिमश्लोकेनान्वयः। ऊर्ण ल ङ् आच्छादने। णुवन्निध्यामिति त्रिः। न गच्छतीति नगः, हनजनादिति डः, नञोऽनौ वाऽज्झसीरिति पक्षे आदेशाभावः। "शैलवृक्षौ नगावगौ" इत्यमरः। मातुर्भ्राता मातुलो निपातनात्॥ ११८॥ भ०

प्रौर्णावीदित्यादि। प्रौर्णावीत् छादितवात् इत्यर्थः। विभाषोर्णोरित्यविकल्पपक्षे रूपम्। स च निशाचरः तान् नगान् शरवर्षेण अपौहीत् निरस्तवान्। उपसर्गा-

द्रुतमत्रास्त सुग्रीवो भ्रातृव्यं शत्रुसङ्कटात्।
मुष्टिना कौम्भकर्णिञ्च क्रुद्धः प्राणैरतित्यजत्॥ १२०॥
निकुम्भो वानरेन्द्रस्य प्राहैषीत् परिघं ततः।
हनूमांश्चापतन्तं तमभाङ्क्षीद्भोगिभीषणम्॥ १२१॥
प्रौर्णुवीत्तेजसारातिमरासीच्च भयङ्करम्।
ग्रीवाञ्चास्य तथाक्राक्षीदजिजीवद्यथा न तम्॥ १२२॥

ह्रस्वत्वं, स्तोर्वा वाच्यमित्यात्मनेपदविकल्पः। रामश्च तत् धनुष्कौशलं दृष्ट्वा अङ्गदं रक्षितुं तूर्णं वानरान् ऐजिहत् व्यापादितवान्। ईहतिर्ण्यन्तः॥ ११९॥ ज० म०

प्रौर्णावीदित्यादि। निशाचरः कुम्भः तान् बाणवृष्ट्या अपोहीत् निरस्तवान्। ऊह ङ् तर्के। अपपूर्व्वः निवारणेऽपि, गेर्वास्तोर्होदे चेति मस्य पाक्षिकत्वात् पम्। रामश्च अङ्गदं रक्षितुं तूर्णं वानरान् प्रेरयामास। ईह ङ चेष्टे। अग्लादङ्॥ ११९॥ भ०

द्रुतमित्यादि। सुग्रीवः तस्मात् शत्रुसङ्कटात् भ्रातृव्यं भ्रातुरपत्यं भ्रातुर्व्यश्च द्रुतम् अत्रास्त रक्षितवान्, अग्रतो भूत्वा, त्रै ङ् पालने। कौम्भकर्णिं कुम्भं क्रुद्धः सन् मुष्टिना प्राणैः अतित्यजत् त्याजितवान्। त्यजिर्ण्यन्तः॥ १२०॥ ज० म०

द्रुतमित्यादि। सुग्रीवः तस्मात् शत्रुसङ्कटात् भ्रातृव्यम् अङ्गदं द्रुतमत्रास्त रक्षितवान्। त्रै ङ् पालने। भ्रातुरपत्यं भ्रातृव्यो निपातनात्। क्रुद्धः सन् कुम्भकर्णापत्यं कुम्भं मुष्टिना प्राणान् त्याजयामास। त्यजो हानौ, अग्लादङ्। अत्र त्यजिस्त्याग-पूर्व्विकायां गतौ वर्त्तते, तेन घोऽणौ जेरित्यादिना प्रयोज्यानां प्राणानां कर्मत्वम्। आपिशलीयमते शब्दार्थादिभ्योऽन्यस्य योगे प्रयोज्यस्य पक्षे कर्म्मत्वमिष्यते। प्राणैरिति क्वचित्पाठः॥ १२०॥ भ०

निकुम्भ इत्यादि। ततो भ्रातृवधात् निकुम्भो वानरेन्द्रस्य सुग्रीवस्य परिघं प्राहैषीत् प्रहितवान्। हि गतौ। परिघम् आपतन्तं निकुम्भात् भोगिभीषणम् अहितवत् भीषणं हनूमान् अभाङ्क्षीत् भग्नवान्॥ १२१॥ ज० म०

निकुम्भ इत्यादि। ततो भ्रातृवधात् निकुम्भः सुग्रीवस्य कृते परिघं प्रहितवान्। हि वर्द्धने गतौ, तम् आपतन्तं भोगिभीषणं सर्पवद्भयङ्करं परिघं हनूमान् बभञ्ज। भञ्जेरनिमत्वात् स्त्रिः॥ १२१॥ भ०

प्रौर्णुवीदित्यादि। परिघञ्च हनूमान् तेजसा प्रौर्णुवीत् अभिभूतवान्, किन्त्वा-

समगत कपिसैन्यं सम्मदेनातिमात्रम्
विटपहरिणनाथः सिद्धिमौहिष्ट नित्याम् ।
नृपतिमतिररंस्त प्राप्तकामेव हर्षात्
रजनिचरपतीनां सन्ततोऽतायि शोकः ॥ १२३ ॥

इति भट्टिकाव्ये तिङ्काण्डे लुङ्विलसितो नाम
पञ्चदशः सर्गः ।

---

दृङ्पिपक्षे रूपम् । भयङ्करं चारासीत् शब्दितवान् । अस्य च निकुम्भस्य ग्रीवां तथाक्राक्षीत् आकृष्टवान् । अमागमपक्षे रूपम् । यथा तं नाजिजीवत् न जीवयति स्म, ग्रीवाम् आकृष्यैव व्यापादितवान् इत्यर्थः । भाजभाषेत्यङ्क्स्वपक्षः ॥१२२॥ ज० म०

प्रौर्णुवीदित्यादि । हनूमान् तेजसा अरिं निकुम्भं प्रौर्णुवीत् अभिभूतवान् । णूर्विष्ट्यामिति चव् । क्वचिद् गुणवान् पाठः । भयङ्करं यथा स्यात् तथा शब्दं कृतवान् । रस शब्दे । अस्य निकुम्भस्य ग्रीवां तथा आकृष्टवान्, यथा तं न जीवयामास, ग्रीवाम् आकृष्य जघान इत्यर्थः । कृषौ आकृषि, कृषमृशस्पृशेति पाक्षिकः सिः, वद्रो-ऽकिदिति वृद्धः, अनिमित्वादत्रिः, जीव ऋ प्राणे, अन्तादङ्, भाजभासभासेति पक्षे ह्रस्वः ॥ १२२ ॥ भ०

समगतेत्यादि । प्रधानयोधा निहता इति सम्मर्देन हर्षेण अतिमात्रम् अत्यर्थं समगत सङ्गतं कपिसैन्यं, समो गम्यृच्छीति तङ् । वा गम इति सिचः किच्चेऽनुनासिकलोपः, ह्रस्वादङ्गादिति सिचो लोपः । विटपहरिणनाथः शाखामृगाणां नाथः नित्यां सिद्धिम् अवश्यंभाविनीम् औहिष्ट तर्कितवान् । नृपतिमतिः रामस्य बुद्धिः प्राप्तकामेव सम्पन्नेच्छेव रावणवध-सीतालाभयोः सिद्धरूपत्वात् । हर्षात् अरंस्त रमते स्म । रजनिचरपतीनां मेघनादादीनां शोकः सन्ततोऽविच्छिन्नः अतायि वर्द्धते स्म । दीपजनेत्यादिना कर्त्तरि चिण् ॥ १२३ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङ्काण्डे लुङ्विलसितो
द्वितीयः परिच्छेदः ।

काव्यस्य कुम्भकर्णवधो नाम पञ्चदशः सर्गः ।

समगतेत्यादि । कपिसैन्यं सम्मर्देन हर्षेण अतिमात्रम् अत्यर्थं सङ्गतं वैरिनाशात् । समो गम्यृच्छेति मम्, इगुङ्गुमठीति पक्षे सेः किच्चे, वनतनाद्यनिमामिति मलोपे

भस्मादिति :सिलोप:। विटपहरिणानां वानराणां नाथ: सुग्रीव: नित्याम् अवश्य-म्भाविनीं कार्य्यसिद्धिं ज्ञातवान्। ऊह ङ् तर्के। नृपते: रामस्य मति: प्राप्तकामेव शत्रु-वधं सीताञ्च प्राप्तवतीति हर्षात् रमते स्म। रमु ङ् जौ क्रीड़े। रजनिचरपतीनां रावणेन्द्र-जिदादीनां सन्ततोऽविच्छिन्न: शोको वर्द्धते स्म। तायृ ङ् पालनसन्तत्यो:, पदस्तनीण् घे इत्यादिना पाक्षिक इण्। अप्यायीति पाठे तु—ओ प्यायी ङ् वृद्धौ ॥ १२३ ॥ भ०

इति हरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां

मुग्धबोधिन्यां भट्टिटीकायां कुम्भकर्णादिवधो नाम

पञ्चदश: सर्ग: ।

# षोड़श: सर्ग: ।

तत: प्ररुदितो राजा रक्षसां हतबान्धव: ।
किं करिष्यामि राज्येन सीतया किं करिष्यते ॥ १ ॥
अतिकाये हते वीरे प्रोत्सहिष्ये न जीवितुम् ।
क्षेपयिष्यति क: शत्रून् केन जायिष्यते यम: ॥ २ ॥

---

इत: प्रभृति लृटमधिकृत्य विलसितमाह। तत्र लृट् शेषे चेति लृट्, ततो ऽन्यत्रापि दर्शयिष्यति।

तत इत्यादि। ततोऽनन्तरं रक्षसां राजा रावण: हतबान्धव: व्यापादित-भ्रातृत्वात् शोकाभिभूत: सन् प्ररुदित: क्रन्दितुमारब्ध:, किं करिष्यामीत्यादिना, आदिकर्मणि क्त:। राज्येन किञ्चित्। ऋद्धनो: स्ये इतीट्। सीतया च किं करिष्यते ॥ १ ॥ ज० म०

अथ तौ प्रदर्श्यते, तस्या: पाणिनिमते लृट्संज्ञा ।

तत इत्यादि। तदनन्तरं हतबान्धवो रक्षसां राजा रावण: प्ररुदित: क्रन्दितु-मारब्धवान्। आदिट्टे क्त:। रोदनमेवाह,—अहं राज्येन किं करिष्यामि ? अहं सीतया च किं करिष्ये ? बान्धवनाशात् सर्वं निष्फलमेव। कृञ उभयपदित्वं ञित्त्वात्। स्यसर्द्धेन इति इम्। सीतायां किं करिष्यते इति पाठे—मयेति शेष:, सीतया कर्त्र्या वा ॥१॥भ०

अतीत्यादि। पुगन्तगुण: केन यम: जायिष्यते। जि जये, कर्मणि लृट्। स्यसिच् इत्यादिना चिण्वदिट् च ॥ २ ॥ ज० म०

अतिकायादृिना पाशं को वा छेत्स्यति वारुणम्।
रावणं मंस्यते को वा स्वयम्भूः कस्य तोक्ष्यति॥ ३॥
श्लाघिषेय केन को बन्धून् नेष्यत्युन्नतिमुन्नतः।
कः प्रेष्यति पितॄन् काले कृत्वा कत्थिष्यते न कः॥ ४॥
उद्यंस्यति हरिर्वज्रं विचरिष्यति निर्भयः।
भोक्ष्यते यज्ञभागांश्च शूरमानञ्च वक्ष्यति॥ ५॥

अतिकाय इत्यादि। अतिकाये हते सति जीवितुम् अहम् उत्साहं न करिष्यामि। तेन विना कः शत्रून् लज्जयिष्यति? त्री लि लज्जे। त्रीव्लीति पण्। केन यमो जेतव्यः? जि जये च, हनग्रहदृशश्चः इति पाचिकी मिण्॥ २॥ भ०

अतीत्यादि। पृथक् विनेति पञ्चमी, अतिकायात् विना वारुणं पाशं को वा छेत्स्यति? द्विधा करिष्यति? को वा रावणं मंस्यते पूजयिष्यति? स्वयम्भूः ब्रह्मा कस्य तोक्ष्यति प्रीतिं जनयिष्यति? तुष प्रीतौ। षढोः कः सि॥ ३॥ ज० म०

अतिकायादित्यादि। अतिकायेन विना को वा वरुणपाशं छेत्स्यति? छिदिर् धौ ञ छेदे। अन्यारथ्यार्थेत्यादिना विनायोगे पञ्चमी। को वा रावणं पूजयिष्यति? मन्यौ ङ् च, चकाराद् बधे, अनेकार्थत्वात् पूजायामपि। स्वयम्भूः कस्य प्रीतिं तोक्ष्यति? जनयिष्यति? तुष यौ ञि च, चकारात् तुष्टौ, षढोः कः॥ ३॥ भ०

श्लाघिष्ये इत्यादि। केन सह श्लाघिष्ये श्लाघां करिष्यामि? मम ईदृशः पुत्र इति। कः स्वगुणैः उन्नतः सन् बन्धून् उन्नतिं परां कोटिं नेष्यति? काले पितृक्रियोचिते कः पितॄन् प्रेष्यति तर्पयिष्यति? प्री ञ् तर्पणे। कृत्वा किञ्चित् कार्य्यं को न कत्थिष्यते कत्थनां न करिष्यति? अहमेवंविध इति। अतिकायादृिनेति सर्वत्र योज्यम्॥ ४॥ ज० म०

श्लाघिष्य इत्यादि। केन पुत्रेण अहं श्लाघ्यो भविष्यामि? कर्म्मणि रूपम्। केन आत्मानं श्लाघ्यं कथयिष्यामि? इत्यर्थे कर्त्तरि रूपम् इत्यन्ये। क उन्नतः सन् बन्धून् उन्नतिं प्रापयिष्यति? कः काले पितॄन् तर्पयिष्यति? प्री ञ तर्पणे। महदपि कार्य्यं कृत्वा आत्मनः श्लाघां न करिष्यति? अतिकायादृिनेति सर्वत्र योज्यम्। कत्थ ङ श्लाघे॥ ४॥ भ०

उद्यंस्यतीत्यादि। तथा हरिः इन्द्रः हन्तुं वज्रम् उद्यंस्यति उद्धारयिष्यति। उत्पूर्वाद्यमो रूपम्। निर्भयश्च इतस्ततो विचरिष्यति, यज्ञभागांश्च आत्मीयान् भोक्ष्यते

रविस्तप्स्यति निःशङ्कं वास्यत्यनियतं मरुत् ।
निर्वर्त्स्यत्यृतुसङ्घातः स्वेच्छयेन्दुरुदेष्यति ॥ ६ ॥
तीव्रं स्यन्दिष्यते मेघैरुग्रं वर्त्तिष्यते यमः ।
अतिकायस्य मरणे किं भविष्यति नान्यथा ॥ ७ ॥

भक्षयिष्यति । भुजोऽनवन इति तङ् । शूरमानञ्च शूरोऽस्मीति वक्ष्यति धारयिष्यति । वहेर्ह्रो ढः । षढोः कः सि ॥ ५ ॥ ज० म०

उद्यस्यतीत्यादि । हरिः इन्द्रो मां प्रति वज्रम् उत्थापयिष्यति । अतिकायस्य मरणे किं भविष्यति नान्यथेति वक्ष्यमाणेनान्वयः । यमौ उपरतौ । निर्भयं विचरिष्यति इतस्ततो गमिष्यति, आत्मीयान् यज्ञभागांश्च भक्षयिष्यति । भुजोऽशने इति मम् । शूरमानं शूरोऽहमिति अहङ्कारं धारयिष्यति । वहे ञौ प्रापणे । हो ढः, षढोः कः । पूर्वं सर्वमिदम् अतिकायेन निराकृतमिति भावः ॥ ५ ॥ भ०

रविरित्यादि । रविः निःशङ्कं शङ्कां विना तप्स्यति द्योतिष्यते, मरुच्च अनियतं स्वच्छन्दं वास्यति । वा गतिगन्धनयोः । ऋतुसङ्घातः षड्तवः निर्वर्त्स्यति सर्वदा न भविष्यति, वृद्भ्यः स्यसनोरिति परस्मैपदविकल्पः, न वृद्भ्यश्चतुर्भ्यः इतीट्प्रतिषेधः । स्वेच्छया इन्दुः उदेस्यति सदा पूर्णमण्डलो.नोद्गमिष्यति । इण् गतौ ॥ ६ ॥ ज० म०

रविरित्यादि । रविः सूर्यो निःशङ्कं यथा स्यात् तथा तप्स्यति द्योतिष्यते । वायुः सततं गमनं करिष्यति । वा ल गमनहिंसयोः । ऋतुसङ्घातः षण्णाम् ऋतूनां मेलनं ममोद्याने निवृत्तो भविष्यति । वृत ङ्वौ वर्त्तने । वृद्भ्यो नेम्पे इति इम्निषेधः, अत एव पम् । चन्द्र उदयं करिष्यति स्वेच्छया, न तु मम इच्छया । इण् गतौ ॥ ६ ॥ भ०

तीव्रमित्यादि । मेघैः तीव्रम् अतिशयेन स्यन्दिष्यते ; पूर्वं रजःप्रशमनमात्रं दृष्टम्, भावे लृट् न वृद्भ्य इतीट्प्रतिषेधो न भवति, तत्र परस्मैपदग्रहणमनुवर्त्तते । यमः उग्रं वर्त्तिष्यते, रौद्रं चरिष्यति आत्मनेपदे नेट् प्रतिषेधः । अतिकायस्य मरणे सति इन्द्रादयः किम् अन्यथा विपर्य्ययं न करिष्यन्ति ? किन्तु करिष्यन्तीति । किं भविष्यति नान्यथेति पाठान्तरं, तच्च सर्वमेतत् भविष्यतीत्यर्थः ॥ ७ ॥ ज० म०

तीव्रमित्यादि । मेघैः तीव्रम् अतिशयं स्यन्दिष्यते वर्षिष्यते, पूर्वं हि धूलिप्रशमनं यावदेव मत्पुरे:दृष्टिरासीदिति भावः । स्यन्दू ङ् स्रुतौ । भावे रूपम् । यम उग्रं वर्त्तिष्यते । अतिकायस्य मरणे सर्वमिदं विपरीतं किं न भविष्यति ? किं करिष्यन्तीति पाठे—इन्द्रादय इति शेषः ॥ ७ ॥ भ०

उन्मीलिष्यति चक्षुर्मे वृथा यद्विनयागतम्।
आम्रालाभोन्मुखं नम्रं न द्रक्ष्यति नरान्तकम्॥ ८॥
धिङ्मां त्रिशिरसा नाहं सन्दर्शिषेऽद्य यत् पुनः।
घानिष्यन्ते द्विषः केन तस्मिन् पञ्चत्वमागते॥ ९॥
शत्रुभिर्निहते मत्ते द्रक्ष्येऽहं संयुगे सुखम्।
युद्धोन्मत्ताद्विना शत्रून् समास्कंत्स्यति को रणे॥ १०॥

उन्मीलिष्यतीत्यादि। मे मम चक्षुः वृथा निष्फलम् उन्मीलिष्यति। यत् यस्मात् विनयागतं विनीतम् आम्रालाभोन्मुखं नम्रं नमनशीलं नरान्तकं पुत्रं न द्रक्ष्यति॥ ८॥ ज० म०

उन्मीलिष्यतीत्यादि। मम नेत्रं वृथा उन्मीलिष्यति। मील निमिषे। यत् यस्मात् विनयेन आगतम् आम्रालाभाय उन्मुखं नम्रं नरान्तकं न द्रक्ष्यति। दृशिरो प्रेक्षे। वर्द्धोऽकिदिति रुद्रः, शक्ष्याजिति षङ्। षढोः कः॥ ८॥ भ०

धिङ्मामित्यादि। यत् त्रिशिरसा अद्य पुनरपि नाहं सन्दर्शिषे न दृष्टो भविष्यामि। कर्म्मणि लुट्, चिख्वदिट् च। तस्मिन् त्रिशिरसि पञ्चत्वमागते मृते द्विषः शत्रवः केन घानिष्यन्ते? अत्रापि चिख्वदिट् च॥ ९॥ ज० म०

धिङ्मामित्यादि। मां धिक्, यस्मात् अद्य पुनः अहं त्रिशिरसा दृष्टो न भविष्यामि। हनग्रहदृशश्च इति कर्म्मणि मिण्। तस्मिन् त्रिशिरसि पञ्चत्वमागते मृते सति द्विषः केन हन्तव्याः? पूर्ववत् मिण्। पञ्चानां पृथक्त्वं पञ्चत्वम्॥ ९॥ भ०

शत्रुभिरित्यादि। मत्ते मत्तनाम्नि शत्रुभिर्निहते तैरेव शत्रुभिः संयुगे सुखम् अहं द्रक्ष्ये द्रष्टव्योऽस्मि, पूर्वं भयाद्द दृष्टः। अचिख्वङ्गावपक्षे रूपम्। तस्य च भ्रातुः युद्धोन्मत्तात् विना रणे शत्रून् कः समास्कंत्स्यति अभियास्यति? स्कन्दिर् गतिशोषणयोः। खरि चेति चर्त्तम्॥ १०॥ ज० म०

शत्रुभिरित्यादि। मत्तनाम्नि राक्षसे शत्रुभिर्निहते सति तैरेव शत्रुभिः संग्रामे सुखं यथा स्यात् तथा अहं द्रष्टव्यः। पूर्वं तत्सान्निध्यात् अहं दुर्दर्श इति भावः। युद्धोन्मत्तं राक्षसञ्च विना रणे कः शत्रून् समास्कंत्स्यति शोषयिष्यति? अभिभविष्यति इत्यर्थः। स्कन्दिरो शोषणगत्योः॥ १०॥ भ०

आह्वास्यते विशङ्को मां योत्स्यमानः शतक्रतुः।
प्रकल्प्स्यति च तस्यार्थो निकुम्भे दुर्हने हते॥ ११ ॥
कल्पिष्यते हरेः प्रीतिर्लङ्का चोपहनिष्यते।
आगंस्यते सुरैश्चेह रिपोर्यास्यामि वश्यताम्॥ १२ ॥
मरिष्यामि विजेष्ये वा हताश्चेत् तनया मम।
हनिष्यामि रिपून् तूर्णं न जीविष्यामि दुःखितः॥ १३ ॥

आह्वास्यत इत्यादि। शतक्रतुः इन्द्रः योत्स्यमानः युद्धं करिष्यन् विशङ्की निर्भयः मां युद्धाय आह्वास्यते। स्पर्द्धायामाङ इत्यात्मनेपदम्। निकुम्भे दुर्हने दुःखेन हन्यत इति ईषदित्यादिना खल्। तस्मिन् हते तस्य शतक्रतोरर्थः निष्कण्टकराज्यलक्षणः प्रकल्प्स्यति सम्पत्स्यते॥ ११ ॥ ज० म०

आह्वास्यत इत्यादि। शतक्रतुः इन्द्रो युद्धं करिष्यन् निःशङ्कं यथा स्यात् तथा मां युद्धार्थम् आह्वास्यते। स्पर्द्धायामाङ इति मं, युधिस्तौपमवत् स्यतस्यमानाविति स्यमानः। दुर्हने निकुम्भे हते सति तस्य शतक्रतोरर्थो निष्कण्टकराज्यलाभः प्रकल्प्स्यति सम्पत्स्यते। क्रपू ङ् वृत्तु च कल्पने। वृतादित्वात् पे, इमोऽभावः। क्रपः कृपोऽक्रपादौ। दुःखेन हन्यते इति ईषद्दुःसोरिति खल्। प्राग्वन्तो ण इत्यादौ दुर्वर्जनान्न णत्वम्। केचित्तु णत्वमाहुस्तन्न साधु, परेषामपि दुर इति णत्वप्रतिषेधकसूत्रदर्शनात्॥ ११ ॥ भ०

कल्पिष्यत इत्यादि। शत्रुभिः कुम्भश्च निपातितं श्रुत्वा हरेः इन्द्रस्य प्रीतिः कल्पिष्यते भविष्यते। लुटि च क्लृप इति चकारात् स्यसनोरपि परस्मैपदविकल्पः, आत्मनेपदे च नेट्प्रतिषेधः। लङ्का च शत्रुभिः उपहनिष्यते विलोप्स्यते। कर्म्मणि लृट्। अचिण्वद्भावपक्षः। ऋद्धनोः स्य इतीट्। इह सुरैरागंस्यते भावे लृट्॥१२॥ज०म०

कल्पिष्यते इत्यादि। शत्रुभिः निपातितं कुम्भं श्रुत्वा हरेः इन्द्रस्य प्रीतिः कल्पिष्यते भविष्यति। वृतादित्वात् मे नेम्निषेधः। शत्रुभिः लङ्का च उपहनिष्यते। मिणोऽभावपक्षे स्यस्यर्द्धन इति इम्। कर्म्मणि रूपम्। इह लङ्कायां देवैरपि आगन्तव्यम्। भावे रूपम्॥ १२ ॥ भ०

मरिष्यामीत्यादि। यदि मम तनयाः हताः तदा मरिष्यामि शत्रून् वा विजेष्ये। म्रियतेर्लुङ्लिङोरिति नियमात्तङ् न भवति, उत्तरत्र विपराभ्याञ्जेरिति

स्मेष्यन्ते मुनयो देवाः कथयिष्यन्ति चानिशम्।
दशग्रीवस्य दुर्नीतैर्विनष्टं रक्षसां कुलम्॥१४॥
केन सम्भावितं तात! कुम्भकर्णस्य राघवः।
रणे कर्त्स्यति गात्राणि मर्माणि च वितर्त्स्यति॥१५॥
पतिष्यति क्षितौ भानुः पृथिवी तोलयिष्यते।
नभस्वान् भङ्क्ष्यते व्योम मुष्टिभिस्ताड़यिष्यते॥१६॥

तङ्। ततो रिपून् तूर्णं हनिष्यामि, पुनः बन्धुविनाकृतत्वात् दुःखितः सन् जीविष्यामि॥१३॥ ज० म०

मरिष्यामीत्यादि। यदि तनयाः हताः ततः अहं मरिष्यामि। मृङ्ष्टीर्ल्लेममिति नियमात् अन्यत्र परस्मैपदं, स्यस्यर्द्धन इति इम्। शत्रून् वा जेष्यामि। विपराजीति मम्। तूर्णं रिपुं हनिष्यामि, अथवा बन्धुनाशात् दुःखितोऽहं न जीविष्यामि॥१३॥भ०

स्मेष्यन्त इत्यादि। मुनयो हर्षात् स्मेष्यन्ते हसिष्यन्ति। ङित्त्वात्तङ्। देवा अनिशं पुनः पुनः कथयिष्यन्ति, यथा—दशग्रीवस्य दुर्नीतिः दुर्नयस्य रक्षसां कुलं विनष्टम्॥१४॥ ज० म०

स्मेष्यन्त इत्यादि। मुनयो हर्षात् स्मेष्यन्ते। स्मि ङ् हसने। देवाः सततं कथयिष्यन्ति। किमित्याह—दशग्रीवस्य दुर्नयैः रक्षसां कुलं नष्टमिति। प्राग्वन्तो ण इत्यादौ दुर्वर्जनान्न णत्वम्॥१४॥ भ०

केनेत्यादि। हे तात! इति शोकात् बुद्धिस्थं पितरम् अभिमुखीकरोति, केन एतत् सम्भावितं निश्चितं यत् कुम्भकर्णस्य गात्राणि रणे राघवः कर्त्स्यति छेत्स्यति। कृती छेदने। मर्म्माणि वितर्त्स्यति अपनेष्यति। तृ तृह हिंसानादरयोः। सिजित्यादिना इड्विकल्पः॥१५॥ ज० म०

केनेत्यादि। तात! इति बुद्धिस्थं पितरं शोकात् सम्मुखीकरोति, लोकोक्तिरियं, केनैवं सम्भावितं—यत् कुम्भकर्णस्य गात्राणि रणे राघवः कर्त्स्यति। कृती श प छिदि, वृतकृदिति पचेऽनिम्। मर्माणि च तर्त्स्यति। तृदञ् धिर्नादरे च। चकारात् हिंसे। पूर्ववत् पचे अनिम्॥१५॥ भ०

पतिष्यतीत्यादि। क्षितौ भूमौ भानुः आदित्यः पतिष्यति अधो गमिष्यति,

इन्दोः स्यन्दिष्यते वह्निः समुच्छोष्यति सागरः।
जलं धक्ष्यति तिग्मांशोः स्रंस्यन्ति तमसाञ्चयाः ॥ १७ ॥
कुम्भकर्णो रणे पुंसा क्रुद्धः परिभविष्यते।
सम्भावितानि नैतानि कदाचित् केनचिज्जने ॥ १८ ॥
कुम्भकर्णे हते लङ्कामारोक्ष्यन्ति प्लवङ्गमाः।

---

पृथ्वी तोलयिष्यति ऊर्द्ध्वं चिप्यते। तुल उन्माने, चुरादावदन्तेषु च पठ्यते। कर्म्मणि लृट्। नभस्वान् वायुः काष्ठवत् भङ्क्ष्यते। कर्म्मणि लृट्। मुष्टिभिः व्योम ताड़यिष्यते हनिष्यते ॥ १६ ॥ ज० म०

पतिष्यतीत्यादि। भानुः सूर्य्यः चितौ पतिष्यति। पृथिवी तोलयिष्यते। तुल उन्मितौ कर्मणि रूपम्। नभस्वान् वायुः काष्ठवत् भङ्क्ष्यते। भन्जो धौ मोटने, कर्म्मणि रूपम्। मुष्टिभिः व्योम आकाशं ताड़यिष्यतेऽन्येन। तड कि लिषि सम्भावितानि नैतानि इत्यग्रिमवाक्येण सम्बन्धः। यथैतत् असम्भाव्यं तथा कुम्भकर्णस्य रामेण हननमिति भावः ॥ १६ ॥ भ०

इन्दोरित्यादि। इन्दोः वह्निः स्यन्दिष्यते प्रस्रविष्यति। वृद्भ्यः स्यसनोरिति परस्मैपदविकल्पः। सागरः समुच्छोक्ष्यति शोषं यास्यति, जलं धक्ष्यति भस्मसात् करिष्यति। दह भस्मीकरणे। हो ढः एकाचो बशो भषिति। तिग्मांशोः आदित्यात् तमसाञ्चयाः तमःसङ्घाः स्रंस्यन्ति। स्रन्देः पूर्ववत् परस्मैपदविकल्पः, न वृद्भ्य इतीट-प्रतिषेधः ॥ १७ ॥ ज० म०

इन्दोरित्यादि। चन्द्रात् अग्निः स्यन्दिष्यते। स्यन्दू ङ्‌वलृ स्रुतौ। विस्वादवृतादिः। शोषं गमिष्यति। शुष्यौ लृ शोषे समुत्पूर्वः। जलं कर्त्तृ धक्ष्यति दाहं करिष्यति। दहौ दाहे। दादेर्घः झभान्तस्येति धः। तिग्मांशोः सूर्य्यात् अन्धकारचयाः संस्रंस्यन्ति चरिष्यन्ति। वृतादित्वात् पे नेम्। सम्भावितानि नैतानि इत्यन्वयः ॥ १७ ॥ भ०

कुम्भकर्ण इत्यादि। कुम्भकर्णो रणे क्रुद्धः सन् पुंसा परिभविष्यते। कर्म्मणि लृट्। एतानि भानुपतनादीनि कुम्भकर्णपरिभवान्तानि जने लोके केनचित् न सम्भावितानि न चिन्तितानि ॥ १८ ॥ ज० म०

कुम्भकर्ण इत्यादि। रणे क्रुद्धः कुम्भकर्णः अन्येन पुंसा परिभविष्यते जेतव्यः। एतानि भानुपतनादीनि लोके कदाचिदपि केनचित् न सम्भावितानि ॥ १८ ॥ भ०

कुम्भकर्ण इत्यादि। कुम्भकर्णे इत्थं हते सति प्लवङ्गमाः लङ्काम् आरोक्ष्यन्ति

दङ्क्ष्यन्ति राक्षसान् दृप्ता भङ्क्ष्यन्ति च ममाश्रमान् ॥१९॥
चर्त्स्यन्ति बालवृद्धांश्च नर्त्स्यन्ति च मुदा युताः ।
तेन राक्षसमुख्येन विना तान् को निरोत्स्यति ॥ २० ॥
अमर्षो मे परः सीतां राघवः कामयिष्यते ।
च्युतराज्यात् सुखं तस्मात् किङ्किलासाववाप्स्यति ॥२१॥

---

आक्रमिष्यन्ति । रुह बीजजन्मनि । राक्षसान् दङ्क्ष्यन्ति दशनैः छेत्स्यन्ति, दृप्ताश्च ममाश्रमान् गृहान् भङ्क्ष्यन्ति चूर्णयिष्यन्ति ॥ १९ ॥ ज० म०

कुम्भकर्ण इत्यादि । कुम्भकर्णे हते नष्टे सति प्लवङ्गमाः कपयो लङ्काम् आरोक्ष्यन्ति लङ्कारूढ़ा भविष्यन्ति। आङ्पूर्वस्य रुह् जन्मनि प्रादुर्भावे इत्यस्य रूपम्। हो ढः, झषस्तथोरित्यादिना षस्य कः। ते दृप्ताः सन्तो राक्षसान् दङ्क्ष्यन्ति। दन्श दंशने। ममाश्रमांश्च भङ्क्ष्यन्ति । भन्ज भङ्गे ॥ १९ ॥ भ०

चर्त्स्यन्तीत्यादि । बालान् वृद्धांश्च चर्त्स्यन्ति व्यापादयिष्यन्ति । चृती हिंसाग्रन्थयोरिति तौदादिकः । मुदा हर्षेण युताः सन्तः नर्त्स्यन्ति । नृती गात्रविक्षेपे । से सिचीत्यादिना विकल्पेनेट् । तेन च राक्षसमुख्येन विना तान् को निरोत्स्यते निवारयिष्यति ॥ २० ॥ ज० म०

चर्त्स्यन्तीत्यादि। प्लवङ्गमा बालान् वृद्धांश्च चर्त्स्यन्ति । चृत श हिंसे । कृत्चृदिति पक्षे नेम् । तर्त्स्यन्तीति पाठे—तृद धातो रूपम् । मुदा हर्षेण युताः सन्तो नृत्यं करिष्यन्ति । नृत्य नर्त्तने । पूर्ववत् नेम् । तेन राक्षसश्रेष्ठेन कुम्भकर्णेन विना कः तान् वानरान् निवारयिष्यति ? रुधिर्धौ ञ भि आवृतौ ॥ २० ॥ भ०

अमर्ष इत्यादि । अमर्षः क्रोधः परः उत्कृष्टः मम, यत् राघवः सीतां कामयिष्यते । कर्त्तरि लृट् । तदन्तादनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीति अमर्षे क्रोधे लृट् । अन्यच्च च्युतराज्यात् तस्मात् रामात् असौ सीता किङ्किला नाम सुखम् अवाप्स्यति तेन सम्भावयामि । किङ्किलास्त्यर्थेषु लृड़िति अनवक्लृप्त्यावसम्भावनायां लृट् ॥ २१ ॥ ज० म०

अमर्ष इत्यादि । मम अयम् अपरोऽमर्षः कोपः राघवोऽपि सीतां कामयिष्यते । कमु ङ् स्पृहि । कम ऋत इति णिङ् । अन्येश्वाश्रद्धामर्षे इति तो । च्युतराज्यात् तस्मात् रामात् असौ सीता किं सुखम् अवाप्स्यति न सम्भावयामि । किङ्किलास्त्यर्थाभ्यां तो ॥ २१ ॥ भ०

मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसैः।
भूमौ वा निखनिष्यामि विध्वंसस्यास्य कारणम् ॥२२॥
नानुरोत्स्ये जगल्लक्ष्मीं घटिषिये जीवितुं न वा।
न रंस्ये विषयैः शून्ये भवने बान्धवैरहम् ॥ २३ ॥
मोदिषिये कस्य सौख्येऽहं को मे मोदिष्यते सुखे।
आदेयाः किं कृते भोगाः कुम्भकर्ण ! त्वया विना ॥२४॥
याः सुहृत्सु विपन्नेषु मामुपैष्यन्ति सम्पदः।

मारयिष्यामीत्यादि। अथवा अस्य सर्वस्य विध्वंसस्य विनाशस्य कारणं वैदेहीं मारयिष्यामि व्यापादयिष्यामि, एतैः वा राक्षसैः खादयिष्यामि भोजयिष्यामि। गतिबुद्धीत्यादिना प्रत्यवसानार्थे कर्मसंज्ञायां प्राप्तायामदिखाद्योः प्रतिषेध इति कर्तृसंज्ञैव भवति। भूमौ वा निखनिष्यामि ॥ २२ ॥ ज० म०

मारयिष्यामीत्यादि। अथवा अस्य विध्वंसस्य बन्धुनाशस्य कारणं सीतामेव मारयिष्यामि राक्षसैः वा तां खादयिष्यामि। घोऽञो ञेरित्यादौ अखादनीत्युक्तेर्न प्रयोज्यस्य कर्मत्वम्। भूमौ वा निखनिष्यामि गर्त्ते वा स्थापयिष्यामि ॥ २२ ॥ भ०

नानुरोत्स्य इत्यादि। जगल्लक्ष्मीं नानुरोत्स्ये न कामयिष्ये। अनौ रुधिः कामे। जीवितुं न वा घटिष्ये प्रयत्नं न करिष्यामि। तस्मात् भवने बान्धवैः शून्ये विषयैः शब्दादिभिः न रंस्ये न क्रीड़ां करिष्ये ॥ २३ ॥ ज० म०

नानुरोत्स्य इत्यादि। जगल्लक्ष्मीं न अहम् अनुरोत्स्ये न वाञ्छिष्यामि। अनौ रुध ङ् यौ कामे। न वा जीवितुं घटिष्ये, बान्धवैः शून्ये रहिते भवने गृहे विषयैः रूपरसादिभिः अहं न रंस्ये न क्रीड़िष्यामि। रमु ङ जौ क्रीड़े ॥ २३ ॥ भ०

मोदिष्य इत्यादि। हे कुम्भकर्ण ! त्वया विना कस्य सौख्ये अहं मोदिष्ये हर्षिष्ये ? न कस्यचित्, मम वा सुखे सति को मोदिष्यते हृष्टो भविष्यति ? न कश्चिदपि। किं कृते किं निमित्तं परभोगा आदेयाः आदातव्याः ? ॥ २४ ॥ ज० म०

मोदिष्य इत्यादि। हे कुम्भकर्ण ! त्वया विना कस्य सौख्ये अहं हर्षं करिष्यामि ? मे मम वा सुखे को हृष्टो भविष्यति ? किं कृते कस्य निमित्तं परसम्बन्धिनो भोगा मया आदेया ग्राह्याः ? ॥ २४ ॥ भ०

ताः किं मन्युक्षता भोगा न विपत्सु विपत्तयः ॥ २५ ॥
विनङ्क्ष्यति पुरी क्षिप्रं तूर्णमेष्यन्ति वानराः।
असन्धित्सोस्तवेत्येतद्विभीषणसुभाषितम् ॥ २६ ॥
अर्थेन संभृता राज्ञा न भाविष्यामहे वयम्।
संयोत्स्यामह इत्येतत्प्रहस्तेन स्म भाषितम् ॥ २७ ॥

तदेव दर्शयन्नाह

या इत्यादि। सुहृत्सु स्निग्धेषु विपन्नेषु याः सम्पदो विभूतयः समुदेष्यन्ति निष्पत्स्यन्ते, ताः मन्युक्षता भोगाः शोकैः खण्डिता भोगाः किं विपत्सु न विपत्तयः क्षतक्षारसंस्थानीया भवन्तीति ? ॥ २५ ॥ ज० म०

या इत्यादि। सुहृत्सु विपन्नेषु मृतेषु याः सम्पदो माम् उपैष्यन्ति उपागमिष्यन्ति, ताः सम्पदः किं विपत्सु मध्ये विपत्तितुल्या न भवन्ति ? अपि तु भवन्त्येव। मन्युना शोकेन क्षताः खण्डिता आभोगा विस्तारा यासाम् ॥ २५ ॥ भ०

विनङ्क्ष्यतीत्यादि। असन्धित्सोः रामेण सन्धानमनिच्छोः क्षिप्रमेषा पुरी लङ्का विनङ्क्ष्यति। मस्जिनशोरिति नुम्। ततः तूर्णं वानरास्तां समेष्यन्ति। उभयत्रापि क्षिप्रवचने लृट्। तदेतद्विभीषणसुभाषितं सर्वमुपपन्नं मन्त्रं निर्णीयते नोक्तम् सन्धानमेवास्तु परैरित्यादिना ॥ २६ ॥ ज० म०

विनङ्क्ष्यतीत्यादि। असन्धित्सो रामेण सह सन्धिं कर्तुमनिच्छोः तव पुरी लङ्का क्षिप्रं विनङ्क्ष्यति। नुम्। रधीमुषां नशेति नुम्। विनङ्क्ष्यन्ति पुरीमिति पाठे—अन्तर्भूतण्यर्थात् वानरा विनाशयिष्यन्तीत्यर्थः। वानरास्तां तूर्णं गमिष्यन्ति इत्येतत् विभीषणस्य वचनं शोभनमेव, मन्त्रनिर्णये तेन उक्तं—सन्धानमेवास्तु परैरित्यादि ॥ २६ ॥ भ०

अर्थेनेत्यादि। राज्ञा वयम् अर्थेन भृताः ततो न भाविष्यामहे। किमत्र युक्तमिति एतत् प्रहस्तेन भाषितं, तच्च तथैव सम्पादितम्। स्म शब्दोऽत्र निपातः। यद्यपि ईदृशं मन्त्रनिर्णये प्रहस्तेन नोक्तं सन्धानमेवास्तु परैरित्यादिना तथापि विभीषणवचनात् अनुमीयते तेनाप्ययमर्थोऽभ्युपगत इति रावण एवमाह, तथा च विभीषणवचनं—युद्धाय राज्ञा सुभृतैरित्यादि ॥ २७ ॥ ज० म०

अर्थेनेत्यादि। अर्थेन धनेन संभृताः पोषिताः अतो न वक्ष्यामः सन्धिमित्य-

मानुषो नाम पत्काषी राजानं पुरुषाशिनाम्।
योधयिष्यति संग्रामे दिव्यास्त्ररथदुर्जयम्॥ २८॥
संनत्स्याम्यथवा योद्धुं न कोष्ये हीनसत्त्ववत्।
अद्य तर्प्स्यन्ति मांसादा भूः पास्यत्यरिशोणितम्॥२९॥
आकर्क्ष्यामि यशः शत्रूनपनेष्यामि कर्मणा।

---

र्थात्, परं किन्तु युद्धं करिष्याम इत्येतत् प्रहस्तेनापि उक्तं युद्धाय राज्ञा सुमतिर्भव हिरिति विभीषणवचनस्य प्रागुपदर्शितत्वात्। प्रहस्तेनापि विभीषणवचनमङ्गीकृतमिति भावः, परमिति किन्त्वर्थेऽव्ययम्॥ २७॥ भ०

मानुष इत्यादि। मामेवं दुर्ज्जयं मानुषो नाम पत्काषी पादाभ्यां गमनशीलः पदातिः सन्। हिमकाषिहतिषु चेति पादस्य पदादेशः। पुरुषाशिनां रक्षसां राजानं दिव्यास्त्ररथतया दुर्ज्जयं दुरभिभवनीयं योधयिष्यति॥ २८॥ ज० म०

मानुष इत्यादि। पत्काषी पदातिः सन् मानुषो रामः संग्रामे दिव्यास्त्रेण रथेन च दुर्ज्जयं दुर्गमं राक्षसानां राजानं योधयिष्यतीति नाम कुत्सितमित्यर्थः। नामेति प्रकाश्यसम्भावनाक्रोधाभ्युपगमकुत्सनेष्वव्ययम्। पादाभ्यां कषितुं गन्तुं शीलमस्येति णिन्, पादस्य पदादेश इति परः, स्वमते पच्छब्दात् कषेर्ग्रहादित्वाण्णिन्। युधेर्ण्यन्तात् कम्पान्नार्थेङित्यादिना रूपम्॥ २८॥ भ०

एवं बहुधा विलप्य जातामर्षः पुनराह

संनत्स्यामीत्यादि। सत्त्वहीनवत् सत्त्वेन हीन इव योद्धुं संनत्स्यामि सन्नाहं करिष्येऽहमिति, वाशब्दोऽत्र किंवृत्तेऽप्यमर्षे, लिङपवादो लृट्, नहो धः, खरि चर्त्वम्। ततश्च अद्य अस्मिन् अहनि मांसादाः क्रव्यादाः तर्प्स्यन्ति तृप्ता भविष्यन्ति। अदोऽनन्न इति विटि प्राप्ते वासरूपविधिना उणपि भवति। भूश्च आहतानाम् अरीणां शोणितं पास्यति। शेषे लृट्॥ २९॥ ज० म०

संनत्स्यामीत्यादि। अथवा योद्धुम् अहं सन्नाहं करिष्यामि। नहो धङ्। हीनसत्त्ववत् न कोष्ये। कु ङ् शब्दे। नेमिकाजिति नेम्। अद्य मांसादा गृध्रादयः तृप्ता भविष्यन्ति। त्रि तृ तृप्य च। चकारात् प्रीणने। रधादित्वात् वेम्। भूश्च अरीणां रक्तं पास्यति॥ २९॥ भ०

आकर्क्ष्यामीत्यादि। सर्वयोद्धृणां आकर्क्ष्यामि आहरिष्यामि यशश्च

अनुभाविष्यते शोको मैथिल्याद्य पतिक्षयात् ॥ ३० ॥
मन्तूयिष्यति यक्षेन्द्रो वल्गूयिष्यति नो यमः ।
ग्लास्यन्त्यपतिपुत्राश्च वने वानरयोषितः ॥ ३१ ॥
सुखं स्वप्स्यन्ति रक्षांसि भ्रमिष्यन्ति च निर्भयम् ।
न विक्रोक्ष्यन्ति राक्षस्यो नरांश्चात्स्यन्ति हर्षिताः ॥ ३२ ॥

कर्मणा युद्धाख्येन अपचेष्यामि न्यूनयिष्यामि । अद्य पतिक्षयात् पतिविनाशात् शोको मैथिल्या सीतया अनुभाविष्यते संवेदयिष्यते । कर्मणि लृट् चिण्वदिट् ॥ ३० ॥ ज० म०

आकर्क्ष्यामीत्यादि । शत्रूणां यश आकर्क्ष्यामि हरिष्यामि । क्रुषौ त्वाकृषि, वद्रोऽकिदिति रस्य पाक्षिकत्वम् । कर्मणा युद्धेन शत्रून् अपनेष्यामि दूरीकरिष्यामि । अपचेष्यामीति पाठे—न्यूनीकरिष्यामीत्यर्थः । अद्य पतिनाशात् सीतया शोकोऽनुभवितव्यः । हनग्रहदृशश्च इति मिण् ॥ ३० ॥ भ०

मन्तूयिष्यतीत्यादि । यक्षेन्द्रो धनदः दाशरथिम् आपन्नं श्रुत्वा मन्तूयिष्यति दुर्मना भविष्यति । यमश्च न वल्गूयिष्यति हृष्टमना न भविष्यति । मन्तु-वल्गुशब्दाभ्यां कण्ड्वादिभ्यो यक्, तदन्तात् लृट् । वने वानरयोषितः अपतिपुत्राः सत्यः ग्लास्यन्ति ग्लानिं यास्यन्ति ॥ ३१ ॥ ज० म०

मन्तूयिष्यतीत्यादि । यक्षेन्द्रः कुवेरो मन्तूयिष्यति । मन्तु अ रोषणवैमनस्ययोः अपराधे चेति चन्द्रादयः, तं करोतीति कण्ड्वादित्वात् यः, कण्ड्वादीनां लिङ्गत्वं धातुत्वञ्चेति टीकाकाराः उक्तं, धातुपक्षे स्वार्थे य इति च । यमो वल्गूयिष्यति शोभनो न भविष्यति दौर्मनस्यात् । वल्गु पूजामाधुर्य्ययोः कण्ड्वादिः । वानराणां योषितश्च पतिपुत्ररहिताः सत्यो वने ग्लास्यन्ति । ग्लै क्षमे ॥ ३१ ॥ भ०

सुखमित्यादि । रक्षांसि चैतानि सुखं स्वप्स्यन्ति निर्भयञ्च भ्रमिष्यन्ति । राक्षस्यश्च न विक्रोक्ष्यन्ति न क्रन्दिष्यन्ति । क्रुश आह्वाने रोदने च । हर्षिताश्च सत्यो नरान् अत्स्यन्ति भक्षयिष्यन्ति ॥ ३२ ॥ ज० म०

सुखमित्यादि । ततो रक्षांसि सुखं शयिष्यन्ते । ष्वपौ घ् लु ञि शये । निर्भयञ्च भ्रमिष्यन्ति । भ्रम्यु ज ण चाले । क्रमिष्यन्तीति क्वचित्पाठः । राक्षस्यो न क्रन्दिष्यन्ति । क्रुश औ रोदने ह्वतौ । हृष्टाः सत्यो नरांश्च भक्षयिष्यन्ति । अद लौ भक्षे । हृषु हृष ञि

प्राग्मुहूर्त्तात् प्रभातेऽहं भविष्यामि ध्रुवं सुखी।
आगामिनि ततः काले यो द्वितीयः क्षणोऽपरः॥ ३३॥
तत्र जेतुं गमिष्यामि त्रिदशेन्द्रं सहामरम्।
ततः परेण भूयोऽपि लङ्कामेष्याम्यमत्सरः॥ ३४॥
॥ युग्मकम्॥।

---

इर हृष्टौ। क्तः, वा रुषामत्वरेति पाक्षिक इम् पूश्चीङ्घ्षेत्यादौ, सेमोऽर्युरित्यस्य योग-विभागात् हर्षार्थे गुणः; किंवा हर्षो जात आसामिति इतीऽस्य जाते इति इतः। अन्ये तु कान्तावल्लीहृंषधीर्नोम्नि विस्मये प्रतिघाते च रोमहर्षार्थे गुणश्चेत्याहुः। हर्षिता मत्परा-क्रमेण विस्मिता इत्यर्थः इति विद्यासागरस्तन्न साधु, तत्र गुणाभावात्॥ ३२॥ भ०

प्रागित्यादि। योऽयम् आगामी प्रभातकालः मुहूर्त्तद्वयसम्मितः तस्मिंस्तस्येति षष्ठीसप्तम्योरभेदात्। यो द्वितीयो मुहूर्त्तः तस्मात् प्राक् प्रथमे मुहूर्त्ते अहम् अवश्यं सुखी भविष्यामि तदानीं हतशत्रुत्वात्। ततः प्रभातात् आगामी यः कालः क्षण-द्वयसम्मितः तस्मिन् आगामिनि काले यो द्वितीयः तस्मात् यत् अपरक्षणः पूर्वः तत्रेति वक्ष्यमाणेन सम्बन्धः॥ ३३॥ ज० म०

प्राङ्मुहूर्त्तादित्यादि। प्रभाते प्रातःकाले मुहूर्त्तत्रयात्मके तृतीयमुहूर्त्तात् प्राक् प्रथममुहूर्त्तद्वये अहम् अवश्यं सुखी भविष्यामि, तदानीमेव शत्रुहननात्। ततः प्रभा-तात् आगामिनि काले क्षणद्वयात्मकद्वितीयक्षणात् परः पूर्वक्षणः तत्र जेतुं गमिष्या-मीति वक्ष्यमाणेन सम्बन्धः॥ ३३॥ भ०

तत्रेत्यादि। तत्र क्षणे त्रिदशेन्द्रं सहामरं देवैः सहितं जेतुं द्रुतं गमिष्यामि। प्राक् मुहूर्त्तात् सुखी भविष्यामि, क्षणात् यत् अपरं तत्र जेतुं गमिष्यामीति काल-विभागे वा अहोरात्राणामिति अनद्यतनवत् प्रत्ययप्रतिषेधे लृट्। तत्र हि नान-द्यतनवदिति मर्य्यादावचने परस्मिन्निति चानुवर्त्तते। तत्र जेतुं कालमर्य्यादाविभागे सति योऽपर आद्यप्रविभागः तत्र भविष्यति काले अनद्यतनवत्प्रत्ययविधिर्न भवति, ततो लट्प्रतिषेधाल्लृडेव भवति। ततः परेणेति—यस्मिन् आगामिनि काले शक्रं जेतुं गमिष्यामि, तत्र द्वितीयो यः क्षणः तस्मात् परेण उपरिष्टात् तं शक्रं जित्वा भूयोऽपि लङ्कामेष्यामि। आङ्पूर्वस्येणो रूपम्। अमत्सरो विगतक्रोधः सन् अपर-स्मिन् विभाषेत्यनेन विभाषालुट्प्रतिषेधाल्लृट्। तत्र हि कालविभागे सति भवि-ष्यति काले परस्मिन् विभाषा अनद्यतनवत्प्रत्ययविधिर्न भवतीत्युक्तम्॥ ३४॥ ज० म०

तमेवंवादिनं मूढमिन्द्रजित् समुपागतः ।
युयुत्सिष्येऽहमित्येवं वदन् रिपुभयङ्करः ॥ ३५ ॥
नाभिज्ञा ते महाराज ! जेष्यावः शक्रपालितम् ।
दृप्तदेवगणाकीर्णमावां सह सुरालयम् ॥ ३६ ॥
नाभिज्ञा ते सयचेन्द्रं भङ्ग्यावो यद्यमं बलात् ।
रत्नानि चाहरिष्यावः प्राप्स्यावश्च पुरीमिमाम् ॥ ३७ ॥

तवेत्यादि । तस्मिन् चणे सहामरं देवैः सहितं त्रिदशेन्द्रं शक्रं जेतुं गमिष्यामि । गेर्धोरणेधिन इति इण्वर्जनात् आदिगेचोरिति त्रिः ॥ ३४ ॥ भ०

तमित्यादि । तं रावणं मूढत्वात् एवंवादिनम् एवम्भाषणशीलम् इन्द्रजित् रिपोः भयङ्करः समुपागतः युयुत्सिष्येऽहं योद्धुमिच्छां करिष्यामि इति ब्रुवन् ॥ ३५ ॥ ज० म०

तमित्यादि । एवंवादिनम् शोकात् मूढं रावणं रिपूणां भयङ्कर इन्द्रजित् समुपागतः । किं कुर्वन् ?—इत्येवं वदन् । किं वदन्नित्याह—अहं योद्धुमिच्छां करिष्यामि । युद्धधीः सन् ॥ ३५ ॥ भ०

केन सह योद्धुमिच्छामीति चेदाह

नाभिज्ञेत्यादि । हे महाराज ! ते तव नाभिज्ञा स्मृतिः, सुरालयं शक्रेण पालितं दृप्तैश्च देवगणैः आकीर्णं व्याप्तम् आवां द्वावपि सह सम्भूय जेष्यावः जितवन्तौ । अभिज्ञावचने लृट्, तत्र भूतानद्यतन इति वर्त्तते ॥ ३६ ॥ ज० म०

नाभिज्ञा त इत्यादि । हे महाराज ! तव अभिज्ञा स्मृतिः नास्ति, आवां त्वञ्च अहञ्च सम्भूय इन्द्रेण पालितं दृप्तेन देवगणेन व्याप्तं सुरालयं स्वर्गं जितवन्तौ । स्मृर्थेत्ययदि त्वतीत इति तौ ॥ ३६ ॥ भ०

नाभिज्ञेत्यादि । न त इत्यभिज्ञास्ति, सयचेन्द्रं धनदसहितं यमं बलात् सामर्थ्येन आवां भङ्ग्यावः भग्नवन्तौ, रत्नानि च ताभ्यां बलात् आहरिष्यावः । इमाञ्च पुरीं लङ्कां प्राप्स्यावः । विभाषासाकाङ्क्ष इति लृट् । लचणयोः सम्बन्धे प्रयोक्तुराकाङ्क्षा । तत्र भञ्जनं लचणं रत्नाद्याहरणञ्च लक्ष्यम् ॥ ३७ ॥ ज० म०

नाभिज्ञा त इत्यादि । तव नाभिज्ञा स्मृतिः नास्ति । यत् सयचेन्द्रं कुबेर-

एष पेच्याम्यरीन् भूयो न शोचिष्यसि रावण!।
जगद्द्रक्ष्यसि नीराममवगाहिष्यसे दिशः॥ ३८॥
सहभृत्यः सुरावासे भयं भूयो विधास्यसि।
प्रणंस्यत्यद्य देवेन्द्रस्त्वां वक्ष्यति स सन्नतिम्॥ ३९॥
भेष्यते मुनिभिस्त्वत्तस्त्वमधिष्ठास्यसि द्विषः।
ग्लास्येऽहमद्य संग्रामे समस्तैः शूरमानिभिः॥ ४०॥

सहितं यमं बलात् आवां भग्नवन्तौ। भन्जो धौ मोटने। तत्सम्बन्धीनि रत्नानि च हृतवन्तौ। इमां लङ्कापुरीं प्राप्तवन्तौ च। वानेकस्मार्य्ये इति भूते तौ॥ ३७॥ भ०

एष इत्यादि। एषोऽहं भूयः पुनः अरीन् पेच्यामि चूर्णयिष्यामि। वर्त्तमान-सामीप्ये वार्त्तमानिकप्रत्ययस्य विकल्पेन विधानात् लृडेव भवति। येन हे रावण! न शोचिष्यसि शोकं न करिष्यसि। भविष्यति लृट्। जगत् नीरामं रामरहितं द्रक्ष्यसि, दिशश्च सर्वा अवगाहिष्यसे व्याप्स्यसि॥ ३८॥ ज० म०

एष इत्यादि। एषोऽहं तव अरीन् चूर्णयिष्यामि। धौ पिष् लृ चूर्णने, वर्त्तमान-सामीप्यविवक्षयाव तौ। हे रावण! भूयः त्वं न शोकं करिष्यसि। शुच शोके। जगत् रामशून्यं द्रक्ष्यसि। निर्भयः सन् दिशोऽवगाहिष्यसे॥ ३८॥ भ०

सहेत्यादि। भृत्यैः सह सुरावासे स्वर्गे भूयो भयं विधास्यसि करिष्यसि। देवेन्द्रश्च त्वां प्रणंस्यति त्वदीयोऽहमिति निवेदयिष्यति वक्ष्यति च सन्नतिं भणिष्यति च नमस्कारम्॥ ३९॥ ज० म०

सहभृत्य इत्यादि। भृत्यैः सहितः त्वं सुराणाम् आवासे स्वर्गे भूयः पुनरपि भयं जनयिष्यसि। शक्रोऽपि त्वां भूयो नमस्करिष्यति भवद्भयात् सन्नतिं निरहङ्कारतां वक्ष्यति। वहे औ प्रापणे धारणेऽपि दृश्यत इति श्रीपतिः। नतिं नमस्कारं वक्ष्यति वदिष्यति। वचो रूपमिति केचित्॥ ३९॥ भ०

भेष्यत इत्यादि। मुनिभिस्त्वत्तो भेष्यते भीतैः भवितव्यम्। भावे लृट्। त्वम् अधि-ष्ठास्यसि द्विषः शत्रून् परिभविष्यसि। अधिशीङिति कर्म्मसंज्ञा। यादृशश्च अहं तादृशः संग्रामे ग्लास्ये ग्लानो भविष्यामि। कर्म्मणि लृट्। कैः?—समस्तैः शूरमानिभिः, वयं शूर इत्यात्मानं मन्यमानैः। आत्ममाने खश्च॥ ४०॥ ज० म०

भेष्यत इत्यादि। त्वत्तो मुनिभिः भयं प्राप्स्यते। ञि भी लि भीत्याम्। भावे

ज्ञायिष्यन्ते मया चाद्य वीरम्मन्या द्विषद्गणाः।
गूहिष्यामि क्षितिं कृत्तैरद्य गात्रैर्वनौकसाम्॥ ४१॥
आरोक्ष्यामि युगान्तवारिदघटासङ्घट्टघोरध्वनिम्
निर्यास्यन् रथमुच्छ्रितध्वजधनुःखड्गप्रभाभासुरम्।
श्रोष्यस्यद्य विकीर्णवृक्णविमुखव्यापन्नशत्रौ रणे
तृप्ताच्छोणितशोणभीषणमुखान् क्रव्याशिनः क्रोशतः॥४२॥

इति भट्टिकाव्ये तिङन्तकाण्डे लृड्विलसितो
नाम षोड़शः सर्गः॥

रूपम्। त्वं द्विषः शत्रून् अधिष्ठास्यसि तेषु प्रभुः भविष्यसि इत्यर्थः। कर्म्मक्रियेत्यादिना डस्य ढत्वं, गीक इति षत्वम्। अद्य संग्रामे समस्तैः शूरम्मन्यैः अहं ज्ञातो भविष्यामि। कर्म्मणि तौ। आत्मानं शूरं मन्यत इति णिन्निति परमते, स्वमते तु—ग्रहादित्वात् णिन् अयं मननार्थोऽभिधानात्, किं वा शूरसम्बन्धी मानी विद्यते येषामिति नैकाजादितीन्॥ ४०॥ भ०

ज्ञायिष्यन्त इत्यादि। एते च द्विषां गणाः शत्रुसङ्घाः वीरम्मन्याः अद्य मया ज्ञायिष्यन्ते परिच्छेत्स्यन्ते यादृशा इति। कर्मणि लृट्, चिण्वदिट्। वनौकसां कपीनां गात्रैः छिन्नैः अद्य क्षितिं गूहिष्यामि संवरिष्यामि॥ ४१॥ ज० म०

ज्ञायिष्यन्त इत्यादि। मयापि वीरम् आत्मानं मन्यमाना द्विषद्वर्गा ज्ञातव्याः, हनग्रहदृश इति मिण्, यन् ञ्णिदिति यन्। मन्यात् स्वार्थे इति खश्। कृत्तैः छिन्नैः कपीनां गात्रैः अद्य भूमिञ्च आच्छादयिष्यामि। गुह ञ संवृतौ। गुहो णोरुः॥४१॥भ०

आरोक्ष्यामीत्यादि। अतोऽहं रथम् आरोक्ष्यामि, निर्यास्यन् इतो निर्गच्छन्। आरोक्ष्यामीति क्रियायां क्रियार्थायामुपपदे निर्यास्यन्निति लृट्, शेषे चेति चकाराल्लृट्। कीदृशं रथं? युगान्ते प्रलयकाले या वारिदघटाः तासां यः सङ्घट्टः परस्परसम्मर्दः तस्येव घोरो गम्भीरो ध्वनिः यस्य रथस्य। उच्छ्रिता ध्वजाः धनूंषि च यत्र। खड्गप्रभाभिश्च भासनशीलो यः। पश्चात् विशेषणसमासः, उच्छ्रितानां वा ध्वजादीनां प्रभाभिर्भासुर इति योज्यम्। विकीर्णा इतस्ततो विक्षिप्ताः, वृक्णाः छिन्नाः विमुखाः छिन्नमस्तकाः, पराङ्मुखा व्यापन्नाः, मृताः शत्रवो यस्मिन् रणे तस्मिन्,

# सप्तदशः सर्गः ।

—०*०—

आशासत ततः शान्तिमस्नुरग्नीनहावयन् ।
विप्रानवाचयन् योधाः प्राकुर्वन् मङ्गलानि च ॥ १ ॥

क्रव्याशिनः शृगालादीन् क्रोशतः फूत्कुर्वतः अद्य श्रोष्यसि । कीदृशान् ?—दृप्तान् शोणितमांसोपयोगात्; शोणितेन शोणानि लोहितानि अत एव भीषणानि भयङ्कराणि मुखानि येषामिति । ह्रस्वोरोदिती निष्ठानत्वस्यासिद्धत्वात् चोः कुत्वे दृक्ण इति ॥ ४२ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लृङ्विलसित-

स्तृतीयः परिच्छेदः ।

काव्यस्य रावणविलापो नाम षोड़शः सर्गः ।

आरोक्ष्यामीत्यादि । इतो निर्यास्यन् निर्गमिष्यन् अहं रथम् आरोक्ष्यामि । कल्यौ जन्याम् । कीदृशं रथं ?—युगान्ते प्रलये या वारिदघटा मेघपङ्क्तयः तासां सङ्घट्टः परस्परसम्बन्धः तस्येव घोरो गम्भीरो ध्वनिः यस्य । उच्छ्रितानां ध्वजादीनां प्रभाभिर्भासनशीलम् । त्वमपि अद्य क्रोशतः शब्दं कुर्वाणान् क्रव्याशिनः शृगालादीन् श्रोष्यसि । कीदृशान् ?—रणे दृप्तान्, शोणितेन शोणानि रक्तानि अत एव भीषणानि भयङ्कराणि मुखानि येषाम् । रणे कीदृशे ?—विकीर्णा विक्षिप्ताः, वृक्णाः छिन्नाः विमुखाः पराङ्मुखाः, व्यापन्ना मृताश्च शत्रवो यत्र । इत्येवं वदन्निति सम्बन्धः ॥४२॥भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां

मुग्धबोधिन्यां भट्टिटीकायां रावणविलापो नाम षोड़शः सर्गः ।

---

इतः प्रभृति लङमधिकृत्य विलसितमाह । तत्र भूतानद्यतने लङ् ततोऽन्यत्र दर्शयिष्यति ।

आशासतेत्यादि । ततः प्रतिज्ञानन्तरं योधाः इन्द्रजित्सम्बन्धिन इत्यर्थात् उपद्रवपरिहारार्थं शान्तिम् आशासत अभीष्टवन्तः । आङः शासु इच्छायामित्यनुदात्तेत्, आत्मनेपदेष्वन्यतरस्यामित्यदादेशः । शान्तिञ्च दर्शयन्नाह—अस्नुः स्नाताः । स्ना शौचे, आत इत्यधिकृत्य लङः शाकटायनस्यैवेति झेर्जुस् अस्य पदान्तादिति पररूपम् । अग्नीन् अहावयन् अग्निकर्म कारितवन्तः । विप्रान् अवाचयन्

अपूजयन् कुलश्रेष्ठानुपागूहन्त बालकान् ।
स्त्रीः समावर्द्धयन् सास्राः कार्य्याणि प्रादिशंस्तथा ॥ २ ॥
आच्छादयन् व्यलिम्पंश्च प्राश्नन्नथ सुरामिषम् ।
प्रापिबन्मधुमाध्वीकं भक्ष्यांश्चादन् यथेप्सितान् ॥ ३ ॥

स्वस्तिवाचनं कारितवन्तः । मङ्गलानि मङ्गलयुक्तानि कर्म्माणि कृतवन्तः ॥ १ ॥ ज० म०

अथ घीमधिकृत्योच्यते । पाणिनिना अस्य लङिति संसिक्ती लङ् भूतानद्यतन इत्युक्का अन्यत्रापि प्रयोगत इति तद्व्यभिचारमाहुः अन्ये । स्वमते भवद्भूतभव्ये विश्व इति भूतसामान्ये ण्यादय उक्ताः, किञ्च स्मृर्यत्यद्दि लतीते इत्यत्र व्यपवादोऽय-मित्युक्तवता परेषां भूतानद्यतनपरोक्षत्वादौ लङादिविधानमप्युद्दङ्कितम् ।

आशासतेत्यादि । तत इन्द्रजित्प्रतिज्ञानन्तरं योधाः कुशलार्थं शान्तिम् अभीष्ट-वन्तः । "आङ्पूर्वास्तु शसिङ् शासुङ् शासुलङ्काशिषि स्मृताः" शासु ल ङ् अनेकार्थत्वात् इच्छायामपि । लुगद्योऽपः, मान्तोऽदनतः । शान्तिं दर्शयति—अस्नुः स्नानं चक्रुः । ष्णा ल शोधने, द्विषविदातोऽनुस् वा, उस्येचीत्यालोपः । अग्नीन् अह्वावयन् होमं कारितवन्तः । हु लि होमेऽदने ञिः । विप्रान् अवाचयन् स्वस्तिवाचनं कारितवन्तः । मङ्गलानि दध्यक्षतानि प्राकुर्वन् प्रस्तुतानि चक्रुः । तन्भ्यः शप् गुणः क्नओोऽइणौरे ॥ १ ॥ भ०

अपूजयन्नित्यादि । कुलज्येष्ठान् वृद्धान् अपूजयन् पूजितवन्तः पाद-पतनादिना । बालकान् उपागूहन्त आश्लिष्टवन्तः । गतानां किं भविष्यतीति सास्राः स्त्रीः योषितः । वाम्शसोरितीयङ्भावपक्षे रूपम् । समावर्द्धयन् ताम्बूलादिना संवर्द्धितवन्तः । प्रातिपदिकाद्धात्वर्थे इति णिच् । तथा कार्य्याणि गृहकार्य्याणि प्रादिशन् निर्दिष्टवन्तः इदमिदं कार्य्यमिति ॥ २ ॥ ज० म०

अपूजयन्नित्यादि । योधाः कुलश्रेष्ठान् वृद्धान् पूजितवन्तः । पूज क पूजे । बालकान् आश्लिष्टवन्तः । पतिनाशशङ्कया सास्राः रोदनान्विताः स्त्रियः समवर्द्धयन् आश्वासितवन्तः । इदं कर्त्तव्यमिति कार्य्याणि उपदिष्टवन्तः । दिशिस्तुदादित्वात् दिवस्तुदेति शः, अपिद्रस्य ङित्त्वाद्गुणाभावः ॥ २ ॥ भ०

आच्छादयन्नित्यादि । आच्छादयन् वस्त्राणि पिनद्धवन्तः । छद संवरणे चुरादिः । व्यलिम्पंश्च समालिप्तवन्तः । लिप उपदेहे, शे मुचादीनामिति नुम्,

न्यश्यन् शस्त्राण्यभीष्टानि समनह्यंश्च वर्म्मभिः ।
अध्यासत सुयानानि द्विषद्भ्यश्चाशपंस्तथा ॥ ४ ॥
अपूजयंश्चतुर्वक्त्रं विप्रानार्च्चंस्तथास्तुवन् ।
समालिपत शक्रारिर्यानञ्चाभ्यलषद्वरम् ॥ ५ ॥

न म्छव्यप्रशानिति रुत्वं, पूर्वस्यानुनासिकः । अथ अनन्तरं सुरामिषं प्राश्नन् अभ्यवहृतवन्तः । मधुना माध्वीकं मध्वासवं प्रापिबन् सुष्ठु पीतवन्तः भक्ष्यांश्च खण्डपायसादीन् यथेप्सितम् अदन् भक्षितवन्तः । अदित्यनुवृत्तौ अदः सर्वेषामित्यप्रत्ययः ॥ ३ ॥ ज० म०

आच्छादयन्नित्यादि । योधा आच्छादयन् वस्त्राणि परिहितवन्तः । छद कि ञ् संवृतौ । व्यलिम्पन् अङ्गरागं चक्रुः । ञि लिपौ श प ञ् लेपे । मुचादित्वान्नुम् । अनन्तं सुराणाम् आमिषञ्च भक्षितवन्तः । अश ग् भोजने, क्र्यादित्वात् श्नाद्योरालोप्योऽणौ । मधु माध्वीकं मद्यविशेषं पीतवन्तः । पा पाने । घे शप्रे, स्थादानेति पिब, लोपोऽतोऽदेचोः । यथेप्सितान् भक्ष्यान् खण्डादीन् भक्षितवन्तः । अद लौ भक्षे ॥ ३ ॥ भ०

न्यश्यन्नित्यादि । अभीष्टानि यथानुभावितानि शस्त्राणि न्यश्यन् तेजितवन्तः । शो तनूकरणे, श्रोतः श्यनीत्योकारलोपः । वर्म्मभिश्च कवचैः समनह्यन् सन्नद्धाः शरीराणि आवृतवन्त इत्यर्थः । सुयानानि शोभनयानानि अध्यासत आरूढाः । अधिशीङिति कर्म्मसंज्ञा । तथा द्विषद्भ्योऽशपन् आक्रुष्टवन्तः । पापाः ! क्व यास्यथ इति । श्लाघह्नुङित्यादिना सम्प्रदानसंज्ञा ॥ ४ ॥ ज० म०

न्यश्यन्नित्यादि । योधा अभीष्टानि शस्त्राणि न्यश्यन् शितानि चक्रुः । शो य निशाने । दिवादित्वात् श्यन्, यन्योशमादौति ओकारलोपः । वर्म्मभिः कवचैः सन्नहनं शरीराच्छादनं चक्रुः । नह्य औ बन्धे दिवादिः । शोभनानि यानानि अध्यासत । कर्म्मक्रियेत्यादिना डस्य ढत्वम् । द्विषद्भ्योऽशपन् । शप ञ् क्रोशे । यस्मै दित्सेति सम्प्रदानत्वम् ॥ ४ ॥ भ०

अपूजयन्नित्यादि । चतुर्वक्त्रं ब्रह्माणम् अपूजयन् अर्चितवन्तः । विप्रान् आर्चन् दाननमस्कारादिना पूजितवन्तः, तथा अस्तुवन् परस्परं स्तुतवन्तः, शक्रारिश्च इन्द्रजित् समालिपत समालिप्तवान् । यानं वरम् उत्कृष्टम् अभ्यलषत् अभीष्टवान् । वा भाशेत्यादिना श्यनो विकल्पितत्वात् पक्षे शप् ॥ ५ ॥ ज० म०

आमुञ्चद्वर्म्मरत्नाढ्यमबध्नात् खड्गमुज्ज्वलम् ।
अध्यास्त स्यन्दनं घोरं प्रावर्त्तत ततः पुरः ॥ ६ ॥
आघ्नन् भेरीर्महास्वानाः कम्बूंश्चाप्यधमन् शुभान् ।
अताड़यन् मृदङ्गांश्च पेराश्चापूरयन् कलाः ॥ ७ ॥

अपूजयन्नित्यादि । योधाः चतुर्वक्त्रं ब्रह्माणं पूजितवन्तः, विप्रान् अर्च्चितवन्तः । अर्च्च च चकारात् पूजे । तथा स्तुतवन्तः । ष्टु ञ ल स्तुतौ । शुभ्योरित्युव् । शक्रारिः इन्द्रजित् अङ्गानि लिप्तवान्, वरम् उत्कृष्टं यानम् इच्छति स्म । लस ञ लस ज स्पृहि । कमेःक्रमीत्यादिना श्यनौ विभाषितत्वात् पक्षे शप् ॥ ५ ॥ भ०

आमुञ्चदित्यादि । रत्नाढ्यं रत्नप्रत्युप्तं वर्म्म कवचम् आमुञ्चत् शरीरे आमुक्तवान्, पिनद्धवान् इत्यर्थः । खड्गञ्च उज्ज्वलम् अबध्नात् कच्चपार्श्वाश्रितं कृतवान् । घोरं भीषणं स्यन्दनम् अध्यास्त आरूढ़ः । ततोऽनन्तरं पुरः पुरतः प्रावर्त्तत प्रवृत्तः ॥ ६ ॥ ज० म०

आमुञ्चदित्यादि । इन्द्रजित् रत्नव्याप्तं वर्म्म कवचम् आमुञ्चत् पिहितवान् । मुच् लृ श प औ मोचे, आङ्पूर्वः परिधाने वर्त्तते । नुण् रधी मुचामिति नुण् । उत्तमं खड्गं पार्श्वे बद्धवान् । बन्धौ ग बन्धक् बन्धे । क्राादित्वात् श्ना, अपिद्रस्य ङित्त्वात् इस्तुङ्लोपः । घोरं भीषणं रथम् अध्यास्त आरूढ़ः । इतोऽनन्तरं शत्रूणां पुरतः प्रवृत्तः ॥ ६ ॥ भ०

आघ्नन्नित्यादि । तस्मात् प्रवृत्ताः महास्वानाः महानादाः । स्वनहसोर्वेति घञ् । भेरीः आघ्नन् ताड़ितवन्तः, वादका इत्यर्थात् । शुभान् सुस्वरान् कम्बून् शङ्खान् अधमन् शब्दितवन्तः । पाघ्रेत्यादिना धमादेशः । मृदङ्गांश्च अताड़यन् आहतवन्तः । ताड़ आघात इति चुरादिः ॥ ७ ॥ ज० म०

आघ्नन्नित्यादि । तस्मिन् प्रवृत्ते वाद्यकारा महानादा भेरीः आहतवन्तः । हन् लौ बधे गतौ, आङ्पूर्वत्वात् आघाते । शोभनान् शङ्खान् अधमन् वादितवन्तः । ध्मा अपियुतौ ध्वनौ । स्थादानपेति धमादेशः । मृदङ्गांस्ताड़ितवन्तः । तड़ क ढिषि । आहताः कला अव्यक्तमधुरस्वराः पेरा वाद्यविशेषा पूरितवन्तः । पूर क च, चकारात् पूर्त्तौ ॥ ७ ॥ भ०

अस्तुवन् वन्दिनः शब्दानन्योऽन्यश्चोदभावयन्।
अनदन् सिंहनादांश्च प्राद्रेकत हयद्विपम्॥ ८॥
अनिमित्तान्यथापश्यन्नस्फुटद्रविमण्डलम्।
औक्षन् शोणितमम्भोदा वायवोऽवान् सुदुःसहाः॥ ९॥
आर्च्छन् वामं मृगाः कृष्णाः शस्त्राणां व्यस्मरन् भटाः।

अस्तुवन्नित्यादि। वन्दिनः स्तुतिपाठका अस्तुवन् जय जीव इत्यादिना स्तुतिं कृतवन्तः। अन्योऽन्यम् अन्यस्य अन्यस्य च शब्दात् संग्रामे नामानि उदभावयन् उद्घाटितवन्तः, सैनिका इत्यर्थात्। सिंहनादांश्च अनदन् शब्दितवन्तः। हयद्विपं पशुद्वन्द्वस्य विभाषैकवत्, प्राद्रेकत शब्दितवत्। द्रेकृ शब्दोत्साह इत्यनुदात्तेत्॥ ८॥ ज० म०

अस्तुवन्नित्यादि। वन्दिनः स्तुतिपाठका इन्द्रजितम् अस्तुवन् जयशब्दं चक्रुः। अन्योऽन्यं नामानि उद्भाषितवन्तः अमुकस्त्वमीदृगित्युक्तवन्तः इत्यर्थः। सिंहनादं चक्रुः, सैनिका इत्यर्थात्। हयद्विपं गतिं चक्रे। हयाश्च द्विपाश्च इति समाहारः। क्रेष ङ् सर्पणे पाणिनीयात्, क्रेषधातुरनेकार्थत्वात् अव्यक्तशब्देऽपि, तेन प्राक्रेषत अव्यक्तं शब्दं चकार इत्याह; प्राद्रेकतेति पाठे—द्रेकृ-ध्रेकृ ङ स्वनोत्साहे औज्ज्वल्यमिति क्षीरस्वामी। उत्साहो वृद्धिरिति चन्द्रः॥ ८॥ भ०

अनिमित्तानीत्यादि। अनिमित्तानि कुत्सितनिमित्तानि। नञत्र कुत्सायाम्। गच्छन्तोऽपश्यन् दृष्टवन्तः। तानि दर्शयति—रविमण्डलम् अस्फुटत् स्फुटितम्, अम्भोदाः शोणितम् औक्षन् वृष्टाः। उक्ष सेचने। वायवः सुदुःसहाः प्रचण्डा अवान् वान्ति स्म, शाकटायनमतादन्यत्र उसादेशः॥ ९॥ ज० म०

अनिमित्तानीत्यादि। अथ अनन्तरम् इन्द्रजित्प्रभृतयो निन्दितानि निमित्तानि अपश्यन्। स्यादानपेति दृशेः पश्यः। कुत्सायामत्र नञ्। यदुक्तं—"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥" इति। अनिमित्तानि दर्शयति—रविमण्डलं स्फुटितं विदीर्णम्। स्फुटश्च विकाशे। मेघा रक्तं वर्षन्ति स्म। उक्ष वृषि। दुःसहा वायवो वान्ति स्म, वा ल गमनहिंसयोः, द्विषविदातोऽनुस् वेत्यस्याप्रवृत्तिपक्षे रूपम्॥ ९॥ भ०

आर्च्छन्नित्यादि। निर्गच्छतां वामपार्श्वं कृष्णमृगा आर्च्छन् गताः। अर्त्तेः पाघ्रेति

रक्तं न्यष्ठीवदक्लाम्यदखिद्यद्वाजिकुञ्जरम् ॥ १० ॥
न तानगणयन् सर्वानास्कन्दंश्च रिपून् द्विषः।
अच्छिन्दन्नसिभिस्तीक्ष्णैरभिन्दंस्तोमरैस्तथा ॥ ११ ॥
न्यकृन्तंश्चक्रधाराभिरतुदन् शक्तिभिर्दृढम्।
भल्लैरविध्यन्नुग्राग्रैरर्द्धहंस्तोमरैरलम् ॥ १२ ॥

ऋच्छादेशः, ऋच्छ गतावित्यस्य वा रूपम्। भटाश्च शस्त्राणां व्यस्मरन् विस्मृतवन्तः, अधीगर्थेति कर्मणि षष्ठी। वाजिकुञ्जरम् अखिद्यत् अश्रान्तमपि रक्तं न्यष्ठीवत्। ष्ठिवु निरसन इति भौवादिकस्य ग्रहणं, ष्ठिवुक्लम्वाचमां शितीति दीर्घः। अक्लाम्यत् क्लान्तश्च ॥ १० ॥ ज० म०

आर्च्छन्नित्यादि। कृष्णा मृगा वामं पार्श्वं गताः। ऋ प्रापणे च, चकारात् गत्यां, स्थादानपाघ्रेति ऋच्छादेशः, ऋच्छ मूर्च्छा गमनमोहयोरित्यस्य वा रूपम्। भटा योधाः शस्त्राणां विस्मृतवन्तः। कर्मणि षष्ठी। वाजिनश्च कुञ्जराश्च वाजिकुञ्जरं रक्तं न्यष्ठीवत् प्रच्छादितवत्। ष्ठिवु-ष्ठिव्य-ष्ठीव निरासे। भ्वाद्यादिषु इत्यादौ ष्ठिववर्जनाच्च षत्वं, ष्ठिवुक्लमाचम इति दीर्घः। अक्लाम्यत् क्लान्तश्च अभवत्। ञि क्लिश्य क्लमु भिर्ल्लानौ, शमादित्वात् दीर्घः। अखिद्यत् खिन्नश्च अभवत्। खिद ञ ष्यौ दैन्यके। अखिद्य-दपि अश्रान्तमपि रक्तं न्यष्ठीवदक्लाम्यच्चेति वा योज्यम् ॥ १० ॥ भ०

न तानित्यादि। तान् सर्वान् अग्रुभान् न अगणयन् नादृतवन्तः किमेतैरिति। अपि तु रिपून् आस्कन्दन् अभिगतवन्तः। द्विषो राक्षसाः तीक्ष्णैः असिभिः अरीन् अच्छिन्दन् छिन्नवन्तः, तथा तोमरैः तीक्ष्णैः अभिन्दन् विदारितवन्तः ॥ ११ ॥ ज०म०

न तानित्यादि। द्विषो राक्षसाः तान् सर्वान् पूर्वोक्तान् रविमण्डलविदारणा-दीन् अग्रुभान् नागणयन् अवज्ञातवन्तः। किमेभिः कार्य्यमिति भावः। शत्रून् अभिगतवन्तश्च। पुनः असिभिः छिन्नवन्तः रिपून् इत्यर्थात्। छिदे रुधादित्वात् श्नन्। मणी मीऽग्याविति आकाररहितत्वम्। तथा तोमरैः विदारितवन्तः, भिदेः पूर्ववत् श्नन् ॥ ११ ॥ भ०

न्यकृन्तन्नित्यादि। चक्रधाराभिः न्यकृन्तन् छिन्नवन्तः। मुचादित्वान्नुम्। शक्ति-भिश्च दृढम् अत्यर्थम् अतुदन् व्यथितवन्तः। भल्लैः अविध्यन् ताड़ितवन्तः। ग्रहि-ज्येति सम्प्रसारणम्। उग्राग्रैः तीक्ष्णाग्रैः तोमरैः अलं पर्य्याप्तम् अर्द्धहन् हत-वन्तः। दृह हिंसायां, रुधादित्वात् श्नन्, अलोपानुस्वारौ ॥ १२ ॥ ज० म०

आस्यन् प्लवङ्गमा वृक्षानधूर्वन् भूधरैर्भृशम्।
अहिंसन् मुष्टिभिः क्रोधाददशन् दशनैरपि॥ १३॥
प्राटुन्वन् जानुभिस्तूर्णमतुदंस्तलकूर्परैः।
प्राहिण्वन्नरिमुक्तानि शस्त्राणि विविधानि च॥ १४॥

न्यक्रन्तन्नित्यादि। राक्षसाः चक्रधाराभिः न्यकृन्तन्। कृती श प च्छिदि, मुचादित्वात् नुम्। शक्तिभिः दृढं व्यथयामासुः। तुद श औ व्यथे। उग्राग्रैः निशिताग्रैः भल्लैः अविध्यन्। व्यध्यौ ताड़ने, दिवादित्वात् श्यन्, अपिद्रस्य ङित्त्वात् ग्रहस्वपाद्योरिति जिः। अलम् अत्यर्थं तोमरैः हिंसितवन्तः। वृह ध इनभू श हिंसे, रुधादित्वात् नण् नणोर्न्नुणौ। अटंहन् स्थूलपट्टिशैरिति क्वचित् पाठः। "पट्टिशो लौहदण्डो यस्तीक्ष्णधारः क्षुरोपमः" इति वैजयन्ती॥ १२॥ भ०

आस्यन्नित्यादि। प्लवङ्गमा अपि वृक्षान् आस्यन् क्षिप्तवन्तः। असु क्षेपणे। तथा भूधरैः पर्वतैः अधूर्वन् हतवन्तः। उपधायाश्चेति दीर्घः। क्रोधात् मुष्टिभिः अहिंसन् ताड़ितवन्तः। दशनैः दन्तैः अदशन् खादितवन्तः। दन्शसनजसन्जां शपीत्यनुनासिकलोपः॥ १३॥ ज० म०

आस्यन्नित्यादि। वानरा वृक्षान् आस्यन् क्षिप्तवन्तः। असु क्षेपे। पर्वतैः हिंसितवन्तः। धुर्वि हिंसे। र्वोरुपधाया दीर्घ इति दीर्घः। क्रोधात् मुष्टिभिः अहिंसन्। हिस धि कि हिंसे, रुधादित्वात् श्नन्। नशो नलोप्य इति इदनुबन्धजातनकारस्य लोपः, ततो नर्णोर्न्नुणौ। दन्तैः खादितवन्तः। दन्शौ दंशने। सनुजदन्शस्वन्जोऽपि न लोपः॥ १३॥ भ०

प्राटुन्वन्नित्यादि। जानुभिः तूर्णं प्राटुन्वन् पीड़ितवन्तः। टु, दु उपतापे स्वादिः। तलकूर्परैः हस्ततलैः प्रकोष्ठैश्च अतुदन् व्यथितवन्तः। अरिभिः मुक्तानि विविधानि यानि शस्त्राणि तानि प्राहिण्वन् प्रहितवन्तः॥ १४॥ ज० म०

प्राटुन्वन्नित्यादि। जानुभिः प्राटुन्वन् पीड़ितवन्तः। टुँ दु न दु नोपतापे, स्वादित्वात् श्नुर्ध्वोरिति वलम्। तलैः चपेटैः कूर्परैः कफोणिभिश्च अतुदन्। तुद श औ व्यथे। अनुदन्निति पाठे—नुद श औ प्रेरणे। "तलस्त्वाधः स्वरूपे च खड्गमुष्टिचपेटयोः" इति विश्वः। "स्यात् कफोणिस्तु कूर्परः" इत्यमरः। अरिभिः निशाचरैः यानि शस्त्राणि मुक्तानि, तानि पुनस्तेभ्य एव प्रहितवन्तः। हि न वर्द्धने गतौ। प्राग्वन्नो ण इति णत्वम्॥ १४॥ भ०

अतृणेट् शक्रजिच्छत्रूनभ्राम्यञ्च समन्ततः ।
अध्वनञ्च महाघोरं न च कांश्चन नादुनोत् ॥ १५ ॥
नाजानन् सन्दधानन्तं धनुर्नैक्षन्त बिभ्रतम् ।
नेषूनचेतन्नस्यन्तं हतास्तेनाविदुर्द्विषः ॥ १६ ॥
अमृष्णन्नन्यतः शब्दं प्रपलायन्त चान्यतः ।
आक्रन्दमन्यतोऽकुर्वंस्तेनाहन्यन्त चान्यतः ॥ १७ ॥

अतृणेडित्यादि । ततः शक्रजित् इन्द्रजित् शत्रून् अतृणेट् हिंसितवान् । तृहः श्नम्, तस्य तनह इम् हलङ्यादिलोपः, हकारस्य ढत्वजश्त्वचर्त्वानि । समन्ततश्च अभ्राम्यत् भ्रान्तवान् । महाघोरञ्च भीषणं स्वनम् अध्वनत् नादितवान् । न च कांश्चन नादुनोत् कांश्चिदपि न नोपतापितवान्; अपि तु सर्वानपि पीड़ितवान् इत्यर्थः ॥ १५ ॥ ज० म०

अतृणेडित्यादि । इन्द्रजित् अरीन् हिंसितवान् । तृह धृ तनहू श हिंसे, रुधादित्वाश्नम्, तृह इम् पिडवे इति इम्, हलश्चां दिसेरिति दिलोपः, हो ढः । समन्तात् सर्वतो भ्राम्यति स्म, भ्रमः शमादित्वात् दीर्घः । महाघोरं ध्वनिञ्च । नादुनोत् इति न, किन्तु पीड़ितवान् ॥ १५ ॥ भ०

नाजानन्नित्यादि । धनुषि शरं सन्दधानम् आरोपयन्तम् तम् इन्द्रजितं नाजानन् न ज्ञातवन्तः । धनुर्बिभ्रतं नैक्षन्त धनुः धारयन्तं न दृष्टवन्तः । इषून् शरान् अस्यन्तं क्षिपन्तं नाचेतन् हस्तलाघवात् न ज्ञातवन्तः । चिती संज्ञाने । ङमो ह्रस्वादिति ङमुट् । तेन हताः सन्तो द्विषः अविदुः ज्ञातवन्तः पूर्वोक्तं सिजभ्यस्तविदिभ्यश्चेति भेर्जुस् ॥ १६ ॥ ज० म०

नाजानन्नित्यादि । धनुषि शरं सन्दधानम् आरोपयन्तं तम् इन्द्रजितं योधा न ज्ञातवन्तः । ज्ञा ग बोधने । ज्ञादानपाश्चेति जादेशः । धनुर्बिभ्रतं धारयन्तं तं न दृष्टाः । इषून् बाणान् अस्यन्तं क्षिपन्तम् अज्ञातवन्तः । चिती ज्ञाने । सर्वत्र हस्तलाघवं हेतुः, केवलं तेन हताः सन्तो द्विषः कपयः पूर्वोक्तं ज्ञातवन्तः । विद ल मतौ, द्विषविदात इति अनः उस् ॥ १६ ॥ भ०

अमृष्णन्नित्यादि । अन्यतः अन्यस्मिन् प्रदेशे केचिद् द्विषः शब्दम् अमृष्णन् । शुवः श्र चेति श्रभावः, श्नुप्रत्ययश्च । अन्यतः अन्यत्र स्थिताः प्रपलायन्त पलायिताः ।

प्रालुठ्यन्त व्यभिद्यन्त परितो रक्तमस्रवन्।
पर्य्यश्राम्यन्नतृष्यंश्च चतास्तेनाम्रियन्त च ॥ १८ ॥
सौमित्रिराकुलस्तस्मिन् ब्रह्मास्त्रं सर्वरक्षसाम्।
निधनायाजुहूषन्तं व्यष्टभ्नाद्रघुनन्दनः ॥ १९ ॥

---

अन्यतोऽन्यत्र प्रदेशे स्थिताः आक्रन्दम् अकुर्वन् रोदनं कृतवन्तः। अन्यतोऽन्यत्र तेन इन्द्रजिता अहन्यन्त व्यापादिताः। कर्म्मणि लङ्। सर्वत्राद्यादित्वात् सिः ॥ १७ ॥ ज० म०

अशृण्वन्नित्यादि। केचित् विषोऽन्यतोऽन्यस्मिन् देशे तस्य शब्दं श्रुतवन्तः। श्रोः श्रुर्वे र इति श्रुर्श्च श्रौरिति सामान्योक्तत्वात् श्रु गताविति भौवादिकस्य श्रु। न गतौ श्रुताविति स्वादिपठितस्य च ग्रहणं, श्रवणार्थकोऽपि पाणिनिप्रभृतिभिर्भ्वादौ पठ्यते, भ्वादिपाठवचनात् भवतीत्यपि स्यादिति टीकाकृतः। अन्यत्र च पलायिताः। अन्यत्र स्थिता रोदनञ्चक्रुः। तेन इन्द्रजिता चान्यत्र हताः। तस् क्तेरिति सप्तम्याः तस् ॥ १७ ॥ भ०

प्रालोठन्नित्यादि। तेन चताः सन्तः केचिद् भूमौ प्रालुठ्यन्त। लुठ लोठने। भुवि इतस्ततो व्यभिद्यन्त व्यनीयन्त, हताः सन्त इतस्ततो नीताः। कर्मणि लङ्। परितः समन्तात् रक्तम् अस्रवन् मुक्तवन्तः। पर्य्यश्राम्यन् खिन्नाः, अतृष्यन् पिपासिताः। दिवादित्वात् श्यन्। केचित् अम्रियन्त म्रियतेर्लुङ्श्चेति तङ् ॥ १८ ॥ ज० म०

प्रालोठन्नित्यादि। तेन इन्द्रजिता चताः केचित् भूमौ प्रालुठ्यन्त। लृ लुठ ङ् प्रतिघाते। व्यभिद्यन्त भिदेः कर्मणि रूपम्। परितः समन्तात् रक्तञ्च मुक्तवन्तः। पर्य्यश्राम्यन् परिश्रान्ताः। श्रमु भ्य जि इर् तपःखेदयोः। श्रमादित्वात् दीर्घः। अतृष्यन् पिपासिताः, अम्रियन्त मृताः। मृङ्प्राणत्यागे मम् ॥ १८ ॥ भ०

सौमित्रिरित्यादि। तस्मिन् इन्द्रजिति तथाभूते सति सौमित्रिः आकुलो व्यस्तचित्तः सर्वरक्षसां निधनाय ब्रह्मास्त्रम् आजुहूषत् आह्वातुमैच्छत्। अभ्यस्तस्य चेति अभ्यस्ताकारस्य ह्वयतेः प्रागेव द्विर्वचनात् सम्प्रसारणम्। तञ्च सौमित्रिं रघुनन्दनो रामः व्यष्टभ्नात् निवारितवान्, मा भूत् विभीषणस्यापि नाश इति। स्तम्भु स्तुम्भ्वित्यादिना श्नाप्रत्ययः, स्तम्भेरिति मूर्द्धन्यः ॥ १९ ॥ ज० म०

सौमित्रिरित्यादि। तस्मिन् इन्द्रजिति अर्थात् तथाभूते सति, सौमित्रिः

ततो मायामयीं सीतां घ्नन् खड्गेन वियद्गतः ।
अदृश्यतेन्द्रजिद्वाक्यमवदत्तं मरुत्सुतः ॥ २० ॥
मापराध्नोदियं किञ्चिदभ्रश्यत् पत्युरन्तिकात् ।
सीतां राक्षस ! मा-स्मैनां निग्रहीः पाप ! दुःखिताम् ॥ २१ ॥
पीड़ाकरममित्राणां कर्त्तव्यमिति शक्रजित् ।
अब्रवीत् खड्गकृष्टश्च तस्या मूर्द्धानमच्छिनत् ॥ २२ ॥

लक्ष्मणः आकुलः सन् सर्वेषां रक्षसां निधनाय ब्रह्मास्त्रम् आह्वातुम् ऐच्छत् । ह्वोर्दृर्जिः, घोऽज्भनिङ्गमाम् । तं सौमित्रिं रामो निवारितवान्, विभीषणनाशभयात् । स्तन्भुः सौत्रः स्वादिः, गीक इत्यादिना षत्वम् ॥ १९ ॥ भ०

तत इत्यादि । ततोऽनन्तरम् इन्द्रजित् वियद्गतः आकाशगतः सीतां मायामयीं मायानिर्मितां खड्गेन घ्नन् व्यापादयन् अदृश्यत दृष्टः । कर्म्मणि लङ् । तथाभूतं राक्षसं मरुत्सुतो हनूमान् वाक्यम् अवदत् भाषितवान् ॥ २० ॥ ज० म०

तत इत्यादि । तदनन्तरम् आकाशगतो मायानिर्मितां सीतां खड्गेन मारयन् इन्द्रजिद्दृष्टो हनूमता इत्यर्थात् । कर्मणि रूपम् । तं तथाभूतं मरुत्सुतो हनूमान् वाक्यम् अवदत् ॥ २० ॥ भ०

मापराध्नोदित्यादि । हे पाप ! राक्षस ! सीता पत्युरन्तिकात् अभ्रश्यत् अपगता, इयं भवती नापराध्नोत् नापराद्धा । राध साध संसिद्धाविति स्वादौ । तस्मात् एनां दुःखितां मास्म निग्रहीः मा वधीः । स्मोत्तरे लङ् चेति वर्त्तमाने लङ् ॥ २१ ॥ ज० म०

मापराध्नोदित्यादि । हे पाप ! राक्षस ! इयं सीता पत्युरन्तिकात् अभ्रश्यत् अपगता, न किञ्चित् अपराधं चकार । राध्नो य सिद्धौ । भ्रन्शिर्व्यु अधःपाते । तस्मात् एनां दुःखितां मास्म निग्रहीः मा वधीः । माङोन घोच्यौ ॥ २१ ॥ भ०

पीड़ाकरमित्यादि । इयम् अपराद्धा भवतु न वा सर्वथा यत् अमित्राणां पीड़ाकरं तत् अवश्यं कर्त्तव्यमिति शक्रजित् अब्रवीत् उक्तवान् । खड्गकृष्टश्च कृष्टः खड्गो येन । प्रहरणार्थेभ्यः निष्ठासप्तम्यौ परे भवतः । तस्या मूर्द्धानम् अच्छिनत् छिन्नवान् । तिर्योह्लङ्यादिलोपः । दकारस्य चर्त्वम् ॥ २२ ॥ ज० म०

पीड़ाकरमित्यादि । अमित्राणां पीड़ाकरं कर्म्म अवश्यं कर्त्तव्यमिति अनप-

यत्कृतेऽरीन् व्यग्रहीम समुद्रमतराम च।
सा हृतेति वदन् राममुपातिष्ठन्मरुत्सुतः॥ २३॥
ततः प्रामुह्यतां वीरौ राघवावरुतां तथा।
उष्णञ्च प्राणितां दीर्घमुच्चैर्व्याक्रोशतां तथा॥ २४॥
तावभाषत पौलस्त्यो मास्म प्ररुदितं युवाम्।
ध्रुवं स मोहयित्वास्मान् पापोऽगच्छन्निकुम्भिलाम्॥२५॥

राधाया अप्यस्या वधो युक्त इत्यर्थः। इति इन्द्रजित् अब्रवीत्। ब्रू ञ उक्तौ। पिद्वस्थेम् ब्रुव इतीम्। सुकृष्टः खड्गो येन तादृशः सन् तस्या मूर्द्धानं छिन्नवान्। प्रहरणस्योभयथेति परनिपातः, स्वमतेऽभिधानं नियामकम्॥ २२॥ भ०

यत्कृत इत्यादि। यस्याः कृते यन्निमित्तं परान् अशोकवनिकास्थितान् व्यग्रहीम विगृहीतवन्तः, नित्यं ङित इति लङि उत्तमस्य लोपः। समुद्रं चातराम तीर्णवन्तः। अतो दीर्घो यञीति दीर्घः। सा सीता हृतेति वदन् मरुत्सुतः रामम् उपातिष्ठत् ढौकितवान्। अत यमुना गङ्गाम् उपतिष्ठत इत्येवं सङ्गतिकरणम् उपश्लेषो नास्तीति उपाद्देवपूजेत्यादिना तङ् न भवति॥ २३॥ ज० म०

यत्कृत इत्यादि। यस्याः सीतायाः कृते निमित्ते वयं शत्रून् निगृहीतवन्तः समुद्रम् उत्तीर्णवन्तश्च, सा सीता हृता इति वदन् मरुत्सुतो रामम् उपस्थितवान्। मैवाध्वसङ्गाराधे इत्यत सङ्गम उपश्लेषः स नास्तीति न मम्॥ २३॥ भ०

तत इत्यादि। ततो हनूमद्वचनानन्तरं राघवौ वीरौ प्रामुह्यतां मोहं गतौ। अथ अरुतां क्रन्दितवन्तौ। रु शब्दे। ततो वृद्धिर्न भवति, तत्रापि सार्वधातुक इत्यनुवर्त्तते। तथा दीर्घम् उष्णञ्च प्राणितां निश्वसितवन्तौ। अन प्राणने। रुदादिभ्यः सार्वधातुक इतीट्। तथा उच्चैः व्याक्रोशतां हा सीता इति आहूतवन्तौ॥ २४॥ ज० म०

तत इत्यादि। हनूमतो वचनानन्तरं वीरौ रामलक्ष्मणौ मोहं जग्मतुः। मुह्य ल् ञि वैचित्त्ये। तथा अरुतां क्रन्दितवन्तौ। रु ल ध्वनौ। दीर्घम् उष्णञ्च प्राणितां निश्वसितवन्तौ। अन घ् लु प्राणने। रुद्भ्यो योऽहलस्येम्, प्राग्वन्तो णः। उच्चैर्व्याक्रोशतां हा सीता इत्याहूतवन्तौ। क्रुश ञो वादे हूतौ॥ २४॥ भ०

तावित्यादि। पौलस्त्यो विभीषण आगत्य तौ तथाभूतौ अभाषत उक्तवान्।

माऽस्म तिष्ठत तत्रस्थो बध्योऽसावहुतानलः ।
अस्त्रे ब्रह्मशिरस्युग्रे स्यन्दने चानुपार्ज्जिते ॥ २६ ॥
ब्रह्मादधाद्वधं तस्य तस्मिन् कर्म्मण्यसंस्थिते ।
प्रायच्छदाज्ञां सौमित्रेर्यूथपानाञ्च राघवः ॥ २७ ॥

युवां माऽस्म प्ररुदितं मा रोदिष्टम् । स्मोत्तरे लङ् चेति लङ् । यतो ध्रुवम् अवश्यं स इन्द्रजित् पापः अस्मान् मोहयित्वा मायया विमोह्य । मुहेरकर्म्मकत्वाद्गतिबुद्धीत्यादिना कर्म्मसंज्ञा । निकुम्भिलाम् अग्निगृहम् अगच्छत् गतवान् । अत्र भूतानद्यतन एव लङ् ॥ २५ ॥ ज० म०

तावित्यादि । पौलस्त्यो विभीषणः तौ राघवौ उक्तवान् । युवां रोदनं न कुरुतम् । स पाप इन्द्रजित् निश्चितम् अस्मान् मोहयित्वा निकुम्भिलां यज्ञस्थानविशेषं गतवान् । मुहेरकर्म्मकत्वात् प्रयोज्यस्य कर्म्मत्वम् ॥ २५ ॥ भ०

माऽस्मेत्यादि । माऽस्म तिष्ठत मा विलम्बध्वं, गच्छत । स्मोत्तरे लङ् । यतः तत्रस्थो निकुम्भिलास्थोऽसौ अहुतानलः अकृताग्निकार्य्यो बध्यः शक्यो हन्तुम् । शकि लिङ् चेति चकारात् यत् । कृताश्चेति वचनात् हनो बधश्चेति उपसंख्यानात् । यत् कथम् अहुतानलो बध्य इति चेत् ?—अस्त्रे ब्रह्मशिरसि ब्रह्मशिरोनाम्नि उग्रे दुष्प्रयोगे स्यन्दने च अनुपार्जितेऽप्राप्ते सति ॥ २६ ॥ ज० म०

माऽस्मेत्यादि । यूयं माऽस्म तिष्ठत न विलम्बध्वं, यतः तत्रस्थोऽसौ इन्द्रजित् अहुतानलोऽकृतयज्ञ एव बध्यः । कथमित्याह—ब्रह्मशिरोनाम्नि उग्रे दुःसहे अस्त्रे स्यन्दने रथे च अनुपार्जिते अप्राप्ते सति । तदुभयप्राप्तेरबध्यः स्यादिति भावः ॥ २६ ॥ भ०

कथमुभयं तेनोपार्ज्यत इत्याह—

ब्रह्मेत्यादि । यतः तस्यां निकुम्भिलायां कर्म्मणि असंस्थिते असमाप्ते ब्रह्मा बधं तस्य अदधात् धारितवान्, उक्तवान् इत्यर्थः । श्लौ द्विर्वचनम् । एवं विभीषणवचः श्रुत्वा राघवः सौमित्रेः यूथपानाञ्च गन्तुम् आज्ञां प्रायच्छत् दत्तवान् । दाण दाने । पाघ्रादिना यच्छादेशः ॥ २७ ॥ ज० म०

ब्रह्मेत्यादि । तस्मात् निकुम्भिलायां तस्मिन् होमकर्म्मणि असंस्थिते अप्राप्ते सति तस्य मेघनादस्य बधं ब्रह्मा आहितवान् उक्तवान् इत्यर्थः । डु धाञ् धारणे पुष्टौ । ह्वादी रे द्विः । इति विभीषणवचः श्रुत्वा इन्द्रजिद्बधार्थं रामो लक्ष्मणस्य कपि-

तां प्रत्यैच्छन् सुसंप्रीतास्ततस्ते सविभीषणाः।
निकुम्भिलां समभ्यायान् न्यरुध्यन्त च राक्षसैः॥ २८॥
दिक्पालैः कदनं तत्र सेने प्राकुरुतां महत्।
ऐतां रक्षांसि निर्जित्य द्रुतं पौलस्त्यलक्ष्मणौ॥ २९॥
तत्रेन्द्रजितमैक्षेतां कृतधिष्ण्यं समाहितम्।
सोऽजुहोत् कृष्णवर्त्मानमामनन्मन्त्रमुत्तमम्॥ ३०॥

यूथपानाञ्च सुग्रीवादीनाञ्च आज्ञां दत्तवान्। सम्बन्धे षष्ठी। दान दाने। स्थादानपेति यच्छादेशः। दाणो जुहोत्यादिनिरासार्थं नानुबन्धस्य पूर्वाचार्य्यकृतत्वात् सूत्रे तथा गृहीतम्॥ २७॥ भ०

तामित्यादि। ततस्ते सविभीषणाः सुसंप्रीताः ताम् आज्ञां प्रत्यैच्छन् प्रतीष्टवन्तः प्रतिगृहीतवन्तः। इषु इच्छायाम्। इषुगमियमां छः। ते च निकुम्भिलां समभ्यायान् समभिगताः। या प्रापणे। तत्र च ये दिक्पालाः राक्षसाः तैः अरुध्यन्त रुद्धाः प्रवेष्टुं पन्थानं न लब्धवन्तः। कर्म्मणि लङ्॥ २८॥ ज० म०

तामित्यादि। ततोऽनन्तरं विभीषणसहिताः ते लक्ष्मणादयः सुसम्प्रीताः सन्तः ताम् आज्ञां प्रत्यैच्छन् जगृहुः। ईषु श वाञ्छे। स्थादानपेति इच्छादेशः। ततस्ते निकुम्भिलां समाजग्मुः। ते च राक्षसैः दिक्पालैश्च निरुद्धाः निकुम्भिलाप्रवेशे निवारिताः। कर्म्मणि रूपम्॥ २८॥ भ०

दिक्पालैरित्यादि। तत्र निकुम्भिलोद्देशे उभे अपि सेने महत् कदनं विनाशनं युद्धं वा प्राकुरुतां कृतवन्त्यौ। तानि रक्षांसि निर्जित्य पौलस्त्यलक्ष्मणौ द्रुतम् ऐतां गतवन्तौ। इण गतौ। लङि वृद्धिः॥ २९॥ ज०म०

दिक्पालैरित्यादि। दिक्पालैरिति पूर्वश्लोकेनान्वयः। ततः निकुम्भिलायां द्वे सैन्ये महत् कदनं चक्रतुः। "कदनं युद्धमाहवे:" इति कोषः। तानि रक्षांसि निर्जित्य विभीषणलक्ष्मणौ द्रुतम् ऐतां जग्मतुः। इणो रूपम्॥ २९॥ भ०

तत्रेत्यादि। निकुम्भिलायां तौ ऐक्षेतां दृष्टवन्तौ, इन्द्रजितं कृतधिष्ण्यं कृताग्न्यागारं समाहितम् एकाग्रमानसम्। स इन्द्रजित् कृष्णवर्त्मानम् अजुहोत् हुतवान्। मन्त्रम् उत्तमम् आमनन् आवर्त्तयन्। म्ना आवर्त्तने। शतरि पाघ्रादिना मनादेशः॥ ३०॥ ज० म०

अध्यायच्छक्रजिद् ब्रह्म समाधेरचलन्न च ।
तमाह्वयत सौमित्रिरगर्ज्जच्च भयङ्करम् ॥ ३१ ॥
अकुप्यदिन्द्रजित्तत्र पितृव्यश्चागदद्वचः ।
त्वमत्राजायथा देहमिहापुष्यः सुरामिषैः ॥ ३२ ॥

तत्रेत्यादि । निकुम्भिलायां कृतधिष्ण्यं कृताग्निगृहं कृतासनं वा समाहितम् एकाग्रचित्तम् इन्द्रजितं तौ ऐचेतां दृष्टवन्तौ । ईच ङ् दर्शने । स इन्द्रजित् कृष्णवर्त्मानम् अग्निं हुतवान् । उत्तमं मन्त्रं जपन् । स्मा अभ्यासे । स्यादानेति मनादेशः । "धिष्ण्यं स्थाने गृहे भेऽग्नौ" इत्यमरः ॥ ३० ॥ भ०

अध्यायदित्यादि । शक्रजित् इन्द्रजित् परं ब्रह्म अध्यायत् चिन्तितवान् । ध्यै चिन्तायाम् । आत्वं शिति न भवति । न च समाधेः चित्तवृत्तिनिरोधात् अचलत् चलितवान् । तं तथाभूतम् इन्द्रजितं सौमित्रिः युद्धाय आह्वयत आहूतवान् । भयङ्करं च अगर्जत् शब्दितवान् ॥ ३१ ॥ ज० म०

अध्यायदित्यादि । इन्द्रजित् ब्रह्म वेदमात्मानं वा अध्यायत् । ध्यै ङ चिन्तने । समाधेः चित्तनिरोधान्न चलितः । तं तथाभूतम् इन्द्रजितं लक्ष्मणो युद्धाय आहूतवान् । भयङ्करं गर्जनं कृतवांश्च ॥ ३१ ॥ भ०

अकुप्यदित्यादि । तत्र तस्मिन् आह्वाने कृतवति गर्जिते च सति अकुप्यत् क्रुद्धः । कुप क्रोधे दैवादिकः । पितृव्यश्च पितृभ्रातरं विभीषणं, पितृशब्दाद् भ्रातरि व्यन्निपातितम् । वचो वक्ष्यमाणम् अगदत् उक्तवान् । अत्र अस्मिन् राक्षसकुले त्वम् अजायथाः जातोऽसि । जनी प्रादुर्भावे, दैवादिकोऽनुदात्तेत् । इह च देहं सुरामिषैः पोषितवानसि । पुषिर्दैवादिकः । देहः अपुष्यत् इति पाठान्तरम् । तत्र देहः वृद्धिं गतः । अन्तर्भावितण्यर्थो द्रष्टव्यः ॥ ३२ ॥ ज० म०

अकुप्यदित्यादि । तत्र निकुम्भिलायां लक्ष्मणे गर्जिते सति इन्द्रजित् अकुप्यत् । कुप्य इ कोपे । पितुर्भ्रातरं विभीषणं वाचं जगाद च । पितुर्भ्राता पितृव्यो निपातनात् । अत्र राक्षसकुले त्वं जातः । जनी य्यङ् जनने । स्यादानपेति जादेशः । इह त्वं सुराभिरामिषैश्च सुराणाम् आमिषैर्वा देहं वर्द्धितवानसि । लृ पुष्यौ वृद्धौ, चकारात् पुष्टौ, सकर्म्मकोऽयं पुष्यति स्म भिक्षामित्यादि प्रयोगात् ; जयमङ्गलायामकर्म्मकत्वं भ्रान्त्योक्तम् ॥ ३२ ॥ भ०

इहाजीव इहैव त्वं क्रूरमारभथाः कथम्।
नापश्यः पाणिमार्द्रं त्वं बन्धुत्वं नाप्यपेक्षथाः॥ ३३॥
अधर्म्मान्नात्रसः पाप! लोकवादान्न चाबिभेः।
धर्म्मदूषण! नूनं त्वं नाजाना नाशृणोरिदम्॥ ३४॥

इहेत्यादि। इह अजीवः जीवितोऽसि। कथम्? इहैव त्वं क्रूरं कर्म्म आरभथाः? आरब्धवानसि? आर्द्रं पाणिञ्च नापश्यः त्वं न दृष्टवानसि? यावता कालेन भुक्त्वा पाणिः शुष्यति तावन्तमपि कालं नापेक्षितवानसि इत्यर्थः। आस्तां तावत् एतत्, बन्धुत्वमपि एकगोत्रत्वमपि नापेक्षथाः? ॥ ३३॥ ज० म०

इहाजीव इत्यादि। अस्मिन् वंशे त्वं जीवितोऽसि जीव च। जीव प्राणे। तत् कथम् इहैव त्वं क्रूरं कर्म्म आरब्धवानसि? रभी ङ स्यात्तु राभस्ये। कथम् आर्द्रं पाणिं न दृष्टवानसि? भोजनानन्तरं यावत् न शुष्कः तावदेव स्मृतवानसि इति लोकोक्ति ख्यापनाय इदम् उक्तम्। तव स्नेहात् मम आर्द्रं हिंसाशून्यं पाणिं कुतो न दृष्टवान् इत्यन्ये। आस्तां तावत् अन्यत्, बन्धुत्वम् एकगोत्रमपि कुतो नापेक्षितवानसि? ॥३३॥ भ०

अधर्म्मादित्यादि। हे पाप! अधर्म्मादपि नात्रसः न त्रस्तोऽसि? त्रसी उद्वेगे दिवादौ, वा भ्राशेत्यादिना पक्षे शप्। लोकवादात् जनापवादात् न चाबिभेः न भीतोऽसि? श्लौ द्विर्वचनं, धातोर्गुणः, भीत्रार्थानामित्यपादानसंज्ञा। हे धर्म्मदूषण! धर्म्मस्य दूषण! धर्म्मोच्छेदक! अतिविपरीते स्थितत्वात्। दूष च वैकल्ये। दोषो णा-वित्युपधाया ऊत्वम्। दूषयतीति दूषणः, कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट्, न तु नन्द्यादिपाठे ल्युः। तत्र हि नन्दिवाशिमदिदूषिसाधिवर्द्धिशोधिरोचिभ्यो ण्यन्तेभ्यः पूजायाम् इत्युक्तं, न चात्र पूजा गम्यत इति। नूनम् अवश्यं त्वं नाजानाः स्वयमिदं न ज्ञातवानसि। ज्ञा अवबोधने, क्रियादावुदात्तेत्। ज्ञाजनोर्जा। इदम् अन्यतोऽपि नाशृणोः द्विषद्भ्यो न श्रुतवानसि? श्रुवः शृ च॥ ३४॥ ज० म०

अधर्म्मादित्यादि। हे पाप! अधर्म्मादपि न त्रस्तोऽसि। त्रसी त्रसी ण भये। क्रम-क्लमभ्रमेत्यादिना श्यनः पाक्षिकत्वात् शप्। लोकापवादादपि न भीतोऽसि। ञि भी लि भीत्याम्। हे धर्म्मदूषण! धर्म्मोच्छेदक! कुलोच्छेदकत्वात्। नूनं निश्चितं त्वम् इदं वक्ष्यमाणं न ज्ञातवान् न श्रुतवानसि॥ ३४॥ भ०

निराकृत्य यथा बन्धून् लघुत्वं यात्यसंशयम् ।
पितृव्येण ततो वाक्यमभ्यधीयत शक्रजित् ॥ ३५ ॥
मिथ्या मास्म व्यतिक्रामो मच्छीलं मा न बुध्यथाः ।
सत्यं समभवं वंशे पापानां रक्षसामहम् ॥ ३६ ॥
न त्वजायत मे शीलं तादृग्यादृक् पितुस्तव ।
क्षयावहेषु दोषेषु वार्य्यमाणो मयारमत् ॥ ३७ ॥

किन्तदित्याह

निराकृत्येत्यादि । यथा बन्धून् निराकृत्य परित्यज्य लघुतां याति असंशयम् असन्देहं, ततः पूर्वोक्तेः अनन्तरं पितृव्येण विभीषणेन शक्रजित् वाक्यम् अभ्यधीयत अभिहितः । कर्म्मणि लङ् । घुमेतीत्वम् ॥ ३५ ॥ ज० म०

निराकृत्येत्यादि । यथा बन्धून् निराकृत्य परित्यज्य असंशयं निश्चितं लघुत्वं लोको याति गच्छति, इदं नाज्ञाना इति पूर्वेणान्वयः । धीप्रकरणे यातीति कौप्रवेशो धीविषयेऽपि भूतसामान्ये क्वचित् कौ स्यादिति सूचनाय, वस्तुतस्तु प्रतिज्ञातस्यैकस्य सिद्धार्थम् अस्यार्पणं न दोषावहम् । ततस्तद्वचनानन्तरं पितृव्येण विभीषणेन शक्रजित् वक्ष्यमाणवाक्यम् उक्तम् । अभिपूर्वधाञः कर्म्मणि यक् । दामागेहागिति ङौ ॥ ३५ ॥ भ०

मिथ्येत्यादि । मिथ्या मृषा मास्म व्यतिक्रामः मा परिभूः । शिति क्रमेत्यादिना दीर्घः । शीलं स्वभावं मा न बुध्यथाः मा न बुद्धाः त्वम् अपि तु ज्ञातवानसि । स्मोत्तरे लङ् वा । पापानां रक्षसां वंशेऽहं सत्यं समभवं सम्भूत इति ॥ ३६ ॥ ज० म०

मिथ्येत्यादि । मिथ्याव्यतिक्रमं न कुरु । क्रमः पेऽपि र्घः । मम शीलं स्वभावं न बुद्धवानसि न किञ्चित् ज्ञातवानसि एव । बुध्यौ ङ वेदने । पापानां रक्षसां वंशे सत्यम् अहं सम्भूतोऽस्मि, किन्तु तादृक् न शीलमिति वक्ष्यमाणेनान्वयः ॥ ३६ ॥ भ०

न त्वित्यादि । यद्यपि अहं राक्षसकुले जातः तथापि तव पितुः यादृक् शीलं स्वभावः तादृक् मे न त्वजायत नैवाभूत् । यतोऽसौ क्षयम् आवहन्तीति क्षयावहाः । पचाद्यच् । तेषु दोषेषु परस्त्रीहरणादिषु मया वार्य्यमाणोऽपि

दशग्रीवोऽहमेतस्मादत्यजं न तु विद्विषन्।
परस्वान्यार्ज्जयन्नारीरन्यदीयाः परामृशत्॥ ३८ ॥
व्यजिघृक्षत् सुरान्नित्यं प्रामाद्यद्गुणिनां हिते।
आशङ्कत सुहृद्बन्धूनप्रज्ञान् बह्वमन्यत॥ ३९ ॥

दशग्रीव इति सम्बन्धः। अरमत् रतिं कृतवान्। व्याङ्परिभ्यो रम इति परस्मैपदम्॥ ३७॥ ज० म०

न लज्जायतेत्यादि। यादृशं तव पितुः शीलं जातं न मम तादृशं शीलं जातम्। स्यादानेति जनी जाः। स हि चयावहेषु दोषेषु परस्त्रीहरणादिषु मया वार्य्यमाणोऽपि रतिं कृतवान्। रम क्रीड़े। आङ्पूर्वः। घे पं परैत्यादिना पम्। चयं नाशम् आवहन्ति कुर्वन्तीति पचादित्वादन्॥ ३७॥ भ०

दशग्रीव इत्यादि। एतस्मात् कारणात् अहं रावणम् अत्यजम् त्यक्तवान् अस्मि। पुनः द्विषन् अमित्रीभवन्। द्विषोऽमित्र इति शतृप्रत्ययः। तान् दोषान् आह—परस्वानि परवित्तानि आर्जयत् अन्यैर्ग्राहितवान्। अर्ज अर्जन इति भ्वादेः अर्ज प्रतियत्न इति चौरादिकस्य वा रूपम्। अन्यदीयाः नारीश्च परामृशत् स्पृष्टवान्। मृश आमर्शने इति तुदादावनुदात्तेत्॥ ३८॥ ज० म०

दशग्रीव इत्यादि। एतस्मात् कारणात् अहं दशग्रीवं त्यक्तवान् न तु शत्रुर्भवन्। परमते द्विषः शत्रौ शतृः, स्वमते न विभीषणेन विद्वेषं वैरं कुर्वन् इत्यर्थः; शत्रुवाचित्वे रूढ़िः। तान् दोषान् आह—परधनानि आर्जयत् आनीय संस्कृतवान् हृतवान् इत्यर्थः। अर्ज क् संस्कारे, किंवा अर्ज अर्जने, ञिः प्रेरणे। अन्यदीया नारीः परामृशत् अपहृतवान्। मृश शौ मर्षि। अन्येषामिमा इति विकारसङ्घेत्यादिना ईयः, दकारागमो निपातनात्; किंवा अन्येषां पतिश्वशुरादीनां दा शुद्धिर्याभ्यस्ता अन्यदाः साध्वीरित्यर्थः। दै प शोधने क्विप्, ततः स्वार्थे ईयः॥ ३८॥ भ०

व्यजिघृक्षदित्यादि। सुरान् नित्यं व्यजिघृक्षत् विग्रहीतुमैच्छत्। गुणिनां माल्यवत्प्रभृतीनां यदुक्तं हितं तस्मिन् विषये प्रामाद्यत् प्रमादं गतः। मदी हर्षे। शमामष्टानामिति दीर्घः। सुहृदो बन्धूंश्च सुहृद्बन्धून् आशङ्कत विकल्पितवान्, अप्रज्ञान् अविदुषः प्रहस्तादीन् बह्वमन्यत श्लाघितवान्॥ ३९॥ ज० म०

व्यजिघृक्षदित्यादि। नित्यं देवान् विग्रहीतुं योधयितुम् इष्टवान्। ग्रहेः सन्

दोषैररमतैभिस्ते पितात्यज्यत यैर्मया।
ततोऽरुष्यदनर्दच्च द्विविंशतिभिरेव च ॥ ४० ॥
शरैरताड़यद्बन्धुं पञ्चविंशतिभिर्नृपम्।
रावणिस्तस्य सौमित्रिरमथ्नाच्चतुरो हयान् ॥ ४१ ॥
सारथिञ्चालुनाद्बाणैरभनक् स्यन्दनन्तथा।

ग्रहस्वपप्रच्छां जिः, नेमुगुहयहः, णुर्नोनिमि, ह्ो ढ़ः, झभान्तस्येति घः, षढोः कः। गुणिनां मातामहादीनां सम्बन्धे हिते सश्लोकानां हिते वा प्रामाद्यत् अनवहितोऽभवत्। "प्रमादोऽनवधानता" इति कोषः। मदी भिर्यञि हर्षे। शमादित्वात् दीर्घः। सुहृदो बन्धून् ज्ञातींश्च शङ्कितवान्। शकि ङ त्रासशङ्कयोः। अवज्ञान् अपण्डितान् प्रहस्तादीन् बहु अमन्यत उक्त श्लाघितवान् ॥ ३९ ॥ भ०

दोषैरित्यादि। एभिः दोषैः तव पिता रावणः अरमत क्रीड़ितवान्। यैः दोषैः मया अत्यज्यत। कर्म्मणि लङ्। ततः पितुर्दोषप्रकाशनवचनादनन्तरं रावणिरिति वक्ष्यमाणेन सम्बन्धः। अरुष्यत् रुष्टः। रुष रुष्टौ। अनर्दच्च विस्फूर्जितवांश्च ॥४०॥ज०म०

दोषैरित्यादि। एभिः दोषैः तव पिता रावणो रमते स्म। यैः दोषैः मया त्यक्तः। कर्म्मणि रूपम्। ततः पितृदोषश्रवणात् रावणिरिति वक्ष्यमाणेन सम्बन्धः। अरुष्यत्। रुष्येर्ङि क्रुधि। अनर्दत् शब्दं चकार। द्विविंशतिभिरिति उत्तरश्लोकेनान्वयः ॥ ४० ॥ भ०

शरैरित्यादि। बन्धुं विभीषणं द्विविंशतिभिः अताड़यत्, चत्वारिंशत् इत्यर्थः। द्वे विंशती येषां शराणामिति बहुव्रीहिः। एवञ्च द्व्यष्टनः संख्यायामित्यात्वं न। तथा पञ्चविंशतिभिः शरैः नृपं लक्ष्मणम् अताड़यत्, शतेन इत्यर्थः। द्वौ च विंशतिश्च पञ्च च विंशतिश्च इति अस्मिन् व्याख्याने द्वाविंशत्या पञ्चविंशत्येति च प्राप्नोति। सौमित्रिस्तु तस्य रावणेः चतुरोहयान् बाणैः अमथ्नात्। मन्थ विलोड़न इति क्र्यादौ ॥४१॥ ज०म०

शरैरित्यादि। बन्धुं विभीषणं द्विविंशतिभिः शरैः रावणिः अताड़यत्। नृपं लक्ष्मणं पञ्चविंशतिभिः शरैः अताड़यत्। द्वे विंशती संख्ये येषु इति बहुव्रीहिः। सौमित्रिः तस्य इन्द्रजितोऽश्वान् बाणैः हिंसितवान्। मन्थ ग गाहे ॥ ४१ ॥ भ०

सारथिमित्यादि। तस्य रावणेः सारथिं चालुनात् छिन्नवान्। प्वादीनां ह्रस्वः।

सौमित्रिमकिरद्बाणैः परितो रावणिस्ततः ॥ ४२ ॥
तावस्फावयतां शक्तिं बाणांश्चाकिरतां मुहुः।
वारुणं लक्ष्मणोऽक्षिप्यदक्षिपद्रौद्रमिन्द्रजित् ॥ ४३ ॥
ते परस्परमासाद्य शस्त्रे नाशमगच्छताम्।
आसुरं राक्षसः शस्त्रं ततो घोरं व्यसर्ज्जयत् ॥ ४४ ॥
तस्मान्निरपतद्भूरि शिलाशूलेष्टिमुद्गरम्।

तथा स्यन्दनम् अभनक् भग्नवान्। भञ्जो आमर्दन इति रुधादिः। ततोऽनन्तरं रावणिः सौमित्रिं परितः समन्तात् बाणैः अकिरत् छादितवान् ॥ ४२ ॥ ज० म०

सारथिञ्चेत्यादि। लक्ष्मणो रावणिं सारथिञ्च बाणैः छिन्नवान्। लू ञ गि छिदि। शादेः स्नो ने इति ह्रस्वः। तथा स्यन्दनं रथं भग्नवान्। भन्जी धौ मोटने। नशो न लोप्यः, ह्रसाद्भ्यां दिसेरिति दिलोपः, चुञ्जिति कुङ्। ततोऽनन्तरं रावणिः सौमित्रिं परितः समन्तात् बाणैः आच्छादितवान्। कॄ श विक्षेपे। ऋदिरणाविति इर् ॥ ४२ ॥ भ०

तावित्यादि। तौ इन्द्रजिल्लक्ष्मणौ शक्तिं सामर्थ्यम् अस्फावयतां वर्द्धितवन्तौ। स्फायी व:। बाणांश्च मुहुः अकिरतां विक्षिप्तवन्तौ। वारुणम् अस्त्रं लक्ष्मणोऽक्षिप्यत्। दैवादिकस्य रूपम्। इन्द्रजित् रौद्रं पाशुपतम् अक्षिपत् क्षिप्तवान्। तौदादिकस्य रूपम् ॥ ४३ ॥ ज० म०

तावस्फावयतामित्यादि। तौ इन्द्रजिल्लक्ष्मणौ शक्तिं स्वसामर्थ्यं बर्द्धितवन्तौ। शक्तीरिति पाठे—अस्त्रविशेषान् इत्यर्थः। स्फायी ङ् वृद्धौ। ञिः। पातिस्फायोरिति वङ्। मुहुः वारंवारं बाणान् अकिरतां क्षिप्तवन्तौ। लक्ष्मणो वरुणदेवताकम् अस्त्रं प्रेरितवान्। इन्द्रजित् रुद्रदैवतम् अस्त्रं प्रेरितवान्। क्षिप श औ क्षिप्यौ नुदि ॥ ४३ ॥ भ०

ते परस्परमित्यादि। ते शस्त्रे परस्परम् आसाद्य प्राप्य नाशम् अगच्छतां गते। ततः तन्नाशात् अनन्तरं राक्षसो रावणिः आसुरम् असुरदैवतं शस्त्रं घोरं भीषणं व्यसर्जयत् क्षिप्तवान् ॥ ४४ ॥ ज० म०

ते परस्परमित्यादि। ते इन्द्रजिल्लक्ष्मणसम्बन्धिनी शस्त्रे परस्परं प्राप्य नाशं जग्मतुः। तदनन्तरं राक्षस इन्द्रजित् घोरम् असुरसम्बन्धि शस्त्रं विसर्जितवान् ॥४४॥भ०

तस्मादित्यादि। तस्मात् आसुरात् अस्त्रात् शिलाशूलेष्टिमुद्गरं निरपतत्

माहेश्वरेण सौमित्रिरस्तभ्नात्तत् सुदुर्जयम् ॥ ४५ ॥
ततो रौद्रसमायुक्तं माहेन्द्रं लक्ष्मणोऽस्मरत् ।
तेनागम्यत घोरेण शिरश्चाक्रियत द्विषः ॥ ४६ ॥
अतुष्यन्नमराः सर्वे प्राहृष्यन् कपियूथपाः ।
पर्य्यष्वजत सौमित्रिं मूर्ध्न्यजिघ्रच्च राघवः ॥ ४७ ॥
अरोदीद्राक्षसानीकमरोदन्नभुजां पतिः ।
मैथिल्यै चाशपद्दन्तुं तां प्राक्रमत चातुरः ॥ ४८ ॥

---

इष्टिः प्रहरणविशेषः । तच्च आसुरं सुदुर्ज्जयं सौमित्रिः माहेश्वरेण अस्तभ्नात् स्तम्भित-वान् । स्तन्भित्यादिना श्ना, चकारात् श्नुश्च ॥ ४५ ॥ ज०म०

तस्मादित्यादि । तस्मात् आसुरास्त्रात् भूरि प्रचुरं शिलादिकं निरपतत् निर्गतम् । "इष्टिः खड्गः प्रसारीऽसिर्धर्म्मपालः प्रजाकरः" इति वैजयन्ती । सौमित्रिः तत् सुदुर्ज्जयम् आसुरास्त्रं महेश्वरदैवतेन शस्त्रेण स्तम्भितवान् । स्तन्भु स्तुम्भु स्कन्भ स्कुन्भ स्नु बोधने ॥ ४५ ॥ भ०

तत इत्यादि । ततोऽनन्तरं रौद्रसमायुक्तं रौद्रास्त्रेण सहितं माहेन्द्रम् अस्त्रं लक्ष्मणोऽस्मरत् चिन्तितवान् । तेन स्मरणादेव अगम्यत आगतं, भावे लङ् । तस्य द्विषः शत्रोः शिरश्चाक्रियत छिन्नं, कर्म्मणि लङ् ॥ ४६ ॥ ज०म०

ततं इत्यादि । तदनन्तरं रुद्रदैवतेन अस्त्रेण संयुक्तं महेन्द्रदैवतम् अस्त्रं लक्ष्मणः सस्मार । तेन अस्त्रेण स्मरणात् आगतं, भावे यक् । घोरेण द्विष इन्द्रजितः शिरो हृतं छिन्नम् इत्यर्थः । कर्म्मणि यक् ॥ ४६ ॥ भ०

अतुष्यन्नित्यादि । तस्मिन् मृते अमरा देवाः अतुष्यन् तुष्टाः, कपियूथपाः प्राहृ-ष्यन् प्रहृष्टाः । राघवश्च सौमित्रिं पर्य्यष्वजत् आश्लिष्टवान् । दन्श-सन्जेत्यनुनासिक-लोपः, प्राक्सितादड्व्यवायेऽपीति-वचनात् परिनिविभ्य इत्यादिना षत्वम् । मूर्द्ध्नि अजिघ्रच्च आघ्रातवान् ॥ ४७ ॥ ज०म०

अतुष्यन्नित्यादि । तस्मिन् हते सति सर्वे देवाः तुष्टाः । तुष् ऌ यौ ङि च, चकारात् तुष्टौ । कपियूथपाः सुग्रीवादयः सर्वे हृष्टाः । हृष्य ञि तुष्टौ । रामः सौमित्रिम् आलिङ्गितवान् । ष्वन्जौ सङ्गे । सन्ज दन्श-स्वन्जोऽपि नलोपः । गौक इत्यादिना षत्वम् । मूर्ध्नि तम् आघ्रातवांश्च । घ्रा गन्धग्रहणे । स्था-दानेत्यादिना जिघ्रः ॥ ४७ ॥ भ०

अरोदीदित्यादि । राक्षसानीकं राक्षससैन्यम् अरोदीत् रुदितम् । रुदश्च पञ्चभ्य

अयुक्तमिदमित्यन्ये तमाप्ताः प्रत्यवारयन्।
न्यरुन्धंश्चास्य पन्थानं बन्धुता शुचमारुणत्॥ ४९॥
आस्फायतास्य वीरत्वममर्षश्चाप्यतायत।
रावणस्य ततः सैन्यं समस्तमयुयुत्सयत्॥ ५०॥

इतीट्। नृभुजां पतिः रावणः अरोदत् रुदितः। अड्गार्ग्यगालवयोरित्यडागमः। मैथिल्यै चाशपत् आक्रुष्टवान्, सर्वदोषस्य मूलमिति। श्लाघ-ह्नुङित्यादिना कर्मणः सम्प्रदानसंज्ञा। तां च हन्तुम् आतुरो मन्युवशः प्राक्रमत प्रारब्धवान्। प्रोपाभ्यामिति तङ्॥ ४८॥ ज० म०

अरोदीदित्यादि। राक्षससैन्यम् अरोदीत्। लघिर रुद रोदे। रुदादयस्ति सेरिति दिप ईम्। रक्षसां पती रावणश्च अरोदत्। दिस्योरम् वेति दिपः पक्षेऽम्। सीतायै चाशपत् आक्रुष्टवान्। शपी ञ् क्रोशे। यस्मै दित्सेत्यादिना सम्प्रदानत्वम्। क्रोधेन आतुरः सन् तां हन्तुं प्रारब्धवान्। प्रोपादारम्भ इति मम्॥ ४८॥ भ०

अयुक्तमित्यादि। अन्ये आप्ताः राक्षसाः अयुक्तम् एतदिति मन्यमानाः तं तथाविधं प्रत्यवारयन् प्रत्यवार्य्य स्थिताः। वृञ् वरण इति चुरादिः। अरुन्धंश्च हस्त-पादादिग्रहणेन रुद्धवन्तः। बन्धुता बन्धुसमूहः अस्य शोकम् आरुणत् अपनीतवती। हलङ्यादि लोपः, धकारस्य जश्त्वम्॥ ४९॥ ज० म०

अयुक्तमित्यादि। अन्ये आप्ता इष्टा राक्षसा अयुक्तम् एतत् स्त्रीहननम् इत्युक्त्वा तं निवारितवन्तः। शनैः पादादिग्रहणैः तं रुद्धवन्तः। बन्धुता बन्धुसमूहश्च अस्य शोकम् आरुणत् अपनीतवान्॥ ४९॥ भ०

आस्फायतेत्यादि। अथ निवृत्तशोकस्य रावणस्य वीरत्वं शौर्य्यम् आस्फायत वृद्धिं गतम्। अमर्षश्च क्रोधः अतायत विस्तारं गतः। ततः स रावणः समस्तं सैन्यम् अयुयुत्सयत् युयुत्समानं प्रयोजितवान्॥ ५०॥ ज० म०

आस्फायतेत्यादि। अथ शोकापनयनानन्तरं रावणस्य वीरत्वं शौर्य्यं वर्द्धते स्म। स्फायी ङ संवृद्धौ। अमर्षः क्रोधश्च विस्तीर्णः। तायृङ् पालनसन्तत्योः। तदनन्तरं स रावणः समस्तं सैन्यं योद्धुमिच्छां कारयति स्म। युधेः सनन्तात् णिः॥ ५०॥ भ०

अग्नीनवरिवस्यंश्च तेऽनमस्यंश्च शङ्करम् ।
द्विजानप्रीणयन् शान्त्यै यातुधाना भवद्भियः ॥ ५१ ॥
परितः पर्य्यवाद्वायुराज्यगन्धिर्मनोरमः ।
अश्रूयत सपुण्याहः स्वस्तिघोषः समुच्चरन् ॥ ५२ ॥
योद्धारोऽबिभरुः शान्त्यै साचतं वारि मूर्द्धभिः ।
रत्नानि चाददुर्गाश्च समवाञ्छन्नथाशिषः ॥ ५३ ॥

अग्नीनित्यादि। ते यातुधानाः भवद्भियः उत्पद्यमानभीतयः अग्नीन् अव-रिवस्यन् परिचारितवन्तः। नमोवरिवश्चित्रङ क्यजिति वरिवसः परिचर्य्यायामिति क्यच्, तदन्ताल्लङ्। शङ्करञ्च महादेवम् अनमस्यन् पूजितवन्तः। अत्र नमसः पूजायां क्यच्। द्विजांश्च शान्त्यै शान्त्यर्थम् अप्रीणयन् प्रीणितवन्तः। धूञ-प्रीञोर्नु-र्वक्तव्यः ॥ ५० ॥ ज० म०

अग्नीनित्यादि। भवन्ती उत्पद्यमाना: भीः भयं येषां ते राचसा अग्नीन् सेवितवन्तः। नमस्तपोवरिव इति क्यः। शङ्करं प्रणेमुः पूर्ववत् क्यः। शान्त्यै कल्याणाय द्विजान् प्रीणितवन्तः। प्री-धूञोर्नुक्वा ॥ ५१ ॥ भ०

परित इत्यादि। अग्निसन्तर्पणात् आज्यगन्धिः आज्यस्य गन्धो यस्मिन् वायौ स वायुः मनोरमः परितः सर्वतः वेश्मसु पर्य्यवात् वाति स्म। स्वस्तिघोषश्च सपुण्याहः पुण्याहशब्देन सह समुच्चरन् अश्रूयत श्रूयते स्म। कर्मणि लङ् ॥ ५२ ॥ ज० म०

परित इत्यादि। परितः सर्वतः आज्यस्य घृतस्य गन्धो यस्मिन् स मनोहरो वायुः प्रकृष्टं वाति स्म। गन्धशब्दात् स्वार्थे णिः। आगन्तोर्वेति समासान्त इति। परः गन्ध इति क्वचित् पाठः। पुण्याहसहितः स्वस्तिघोषः समुच्चरन् जनैः श्रूयते स्म ॥ ५२ ॥ भ०

योद्धार इत्यादि। योद्धारः शान्त्यै शान्त्यर्थं साचतम् अचततण्डुलैर्युक्तं सला-जञ्च वारि जलं मूर्द्धभिः अबिभरुः दधति स्म। सिजभ्यस्तेति झेर्जुस्, भञामिदितीत्वम्। रत्नानि गाश्च अददुः दत्तवन्तः, आशिषश्चेष्टेभ्यः समवाञ्छन् काङ्क्षितवन्तः। वाछि इच्छायाम् ॥ ५३ ॥ ज० म०

योद्धार इत्यादि। योद्धारः शान्त्यर्थं मूर्द्धभिः लचितं तण्डुलादिसहितं वारिदधति स्म। टु डु भृञ भृति-पुष्टयोः। श्लादिरे द्विः, पृ भादेर्ङिः इरे, अनुस्त्विदेः, णकस्यत्याम्।

अदिहंश्चन्दनैः शुभ्रैर्विचित्रैः समवस्त्रयन्।
अधारयन् स्रजः कान्ता वर्म्म चान्येऽदधुर्द्रुतम्॥ ५४॥
समक्ष्णुवत शस्त्राणि प्रामृजन् खड्गसंहतीः।
गजादीनि समारोहन् प्रातिष्ठन्ताथ सत्वराः॥ ५५॥
अपूरयन्नभः शब्दो बलसम्वर्त्तसम्भवः।
अपूर्य्यन्त च दिग्भागास्तुमुलैस्तूर्य्यनिस्वनैः॥ ५६॥

रत्नानि गाश्च द्विजेभ्योऽददुः। उस्येचीत्यालोपः। अग्रे आशीर्वादांश्च तेभ्यो वाञ्छितवन्तः। मृजोऽकङिति व्रिरिति पक्षे व्रिः॥ ५३॥ भ०

अदिहन्नित्यादि। शुभ्रैः शुक्लवर्णैः चन्दनैः अदिहन् गात्राणि लिप्तवन्तः। दिह उपचये। विचित्रं शोभनं समवस्त्रयन् आच्छादितवन्तः। मुण्डमिश्रेत्यादिना वस्त्रात्-समाच्छादने णिच्। कान्ताः शुभाः स्रजः अधारयन् धारितवन्तः। धृञ् धारणे, अण्यन्तस्य प्रयोग एव नास्ति। अन्ये च वर्म्म कवचं द्रुतम् अदधुः धारितवन्तः॥ ५४॥ ज० म०

अदिहन्नित्यादि। शुक्लैः चन्दनैः गात्राणि लिप्तवन्तः। दिह औ लिपि। विचित्रं वस्त्रं परिहितवन्तः, विचित्रं शोभनं समाच्छादयन्ति स्म इत्यर्थो वा। वस्त्रात् समाच्छादने परिधाने वा, णिः कल्यादेरिति णिः। कान्ताः शोभनाः स्रजो धारितवन्तः। धृक् च। चकारात् धृत्याम्। अन्ये कवचं धृतवन्तः॥ ५४॥ भ०

समक्ष्णुवतेत्यादि। शस्त्राणि समक्ष्णुवत। क्ष्णु तेजने। समः क्ष्णुव इति तङ्। खड्गसंहतीः प्रामृजन् शोधितवन्तः। मृजेरजादौ विभाषा वृद्धिः। गजादीनि यानानि समारोहन् आरूढाः। गजादिष्विति पाठान्तरम्। तत्राधिकरणत्वं विवक्षितम्। अथ अनन्तरम् आरूढाः सत्वराः प्रातिष्ठन्त प्रस्थिताः। समवप्रविभ्य स्थ इति तङ्॥५५॥ज०म०

समक्ष्णुवतेत्यादि। योधाः शस्त्राणि निशितानि चक्रुः। क्ष्णु ल तेजने। संक्ष्णोरिति मम्। खड्गसमूहान् शोधितवन्तः। मृजोऽकङिति व्रिरिति पक्षे व्रिः। गजादीन् समारूढाः, अथ त्वरान्विताः प्रस्थिताः॥ ५५॥ भ०

अपूरयदित्यादि। बलानां संवर्त्त एकीभावः, तस्मात् सम्भवो यस्य स शब्दः नभः आकाशम् अपूरयत् पूरितवान्। तुमुलैः तूर्य्यनिस्वनैः महद्भिः घोषैः दिग्भागा अपूर्य्यन्त पूर्णाः। कर्म्मणि लङ्॥ ५६॥ ज० म०

आसीद् द्वारेषु सङ्घट्टो रथाश्वद्विपरक्षसाम् ।
सुमहाननिमित्तैश्च समभूयत भीषणैः ॥ ५७ ॥
कपयोऽविभयुस्तस्मिन्नभञ्जंश्च महाद्रुमान् ।
प्रोदखायन् गिरींस्तूर्णमगृह्णंश्च महाशिलाः ॥ ५८ ॥
ततः समभवद् युद्धं प्राहरन् कपिराक्षसाः ।
अन्योऽन्येनाभ्यभूयन्त विमर्दमसहन्त च ॥ ५९ ॥

---

अपूरयदित्यादि । शब्दी नभः पूरितवान् । पूरकश्च, चकारात् पूर्त्तौ । कीदृशः ?—बलानां संवर्त्त एकीभावः, तस्मात् सम्भवी यस्य सम्भवति यस्मादिति व्युत्पत्त्या, स एव सम्भवी यस्येति वा । तूर्य्याणां तुमुलैः सङ्कुलैः शब्दैः दिग्भागाः पूरिताः । कर्म्मणि रूपम् ॥ ५६ ॥ भ०

आसीदित्यादि । रथादीनां निर्गच्छतां लङ्काद्वारेषु सङ्घट्टः सुमहान् आसीत्, जनभूयस्तया सङ्घर्षोऽभूत् । अस्तिसिचोऽपृक्त इतीट् । अनिमित्तैः भीषणैः भयङ्करैः महद्भिः समभूयत, क्षयकरैः निमित्तैः भूतम् । भावे लङ् ॥ ५७ ॥ ज० म०

आसीद द्वारेष्वित्यादि । लङ्काद्वारेषु रथादीनां निर्गच्छतां सुमहान् सङ्घट्ट आसीत् । रुदाद्यस्तीति ईम् । भीषणैः भयानकैः अनिमित्तैः अनाकुलैः सम्भूतम् । भावे यक् ॥ ५७ ॥ भ०

कपय इत्यादि । तस्मिन् निर्गते कपयोऽविभयुः भीतवन्तः । महाद्रुमांश्च योद्धुम् अभञ्जन् भग्नवन्तः । गिरीन् प्रोदखायन् उत्खातवन्तः । खै खनने । शिति आत्वं न भवति । महाशिला अगृह्णन् गृहीतवन्तः ॥ ५८ ॥ ज० म०

कपय इत्यादि । तस्मिन् रावणे निर्गते सति वानराः भीताः । ञि भी लि भीत्याम् । अनुस्विदेः गुरुस्य्याम् । महाद्रुमान् योद्धुं भग्नवन्तः । तुङ्गान् पर्वतान् उत्खातवन्तः । खै स्थैर्य्ये खननहिंसयोः । महाशिलाः गृहीतवन्तः ॥ ५८ ॥ भ०

तत इत्यादि । ततोऽनन्तरं युद्धं समभवत् प्रवृत्तं, कपिराक्षसाः प्राहरन् प्रहृतवन्तः । अन्योऽन्येन अभ्यभूयन्त कपयो राक्षसैः राक्षसाश्च कपिभिरिति । कर्म्मणि लङ् । विमर्दमसहन्त च सोढवन्तः ॥ ५९ ॥ ज० म०

तत इत्यादि । तदनन्तरं युद्धं विस्तृतं कपयो राक्षसाश्च प्रहारं चक्रुः । अन्योऽन्यम् अभ्यभूयन्त कपयो राक्षसैः ते च कपिभिः अभिभूताः । कर्मणि यक् । ते विमर्दं सोढवन्तः ॥ ५९ ॥ भ०

प्रावर्द्धत रजो भौमं तद्व्याश्नुत दिशो दश।
परात्मीयविवेकञ्च प्रामुष्णात् कपिरक्षसाम्॥ ६० ॥
ततोऽद्विषुर्निरालोके स्वेभ्योऽन्येभ्यश्च राक्षसाः।
अद्विषन् वानराश्चैवं वानरेभ्योऽपि निर्दयाः॥ ६१ ॥
अघुरंस्ते महाघोरमश्च्योतन्नथ शोणितम्।
समपद्यत रक्तेन समन्तात्तेन कर्दमः॥ ६२ ॥
गम्भीराः प्रावहन्नद्यः समजायन्त च ह्रदाः।

प्रावर्द्धत इत्यादि। बलद्वयप्रक्षोभात् भौमं रजः प्रावर्द्धत प्रवृद्धं, तत् रजो दश दिशो व्याश्नुत व्याप्नोत्। अयं परोऽयं चात्मीय इति यो विवेकः तञ्च प्रामुष्णात् अपनीतवत्। मुष स्तेये क्र्यादिः॥ ६० ॥ ज० म०

प्रावर्द्धत इत्यादि। भूमिसम्बन्धि रजः प्रवृद्धं, सैन्यक्षोभात्; तत् रजो दश दिशो व्याप्नुवत्। अशूङ् व्याप्तिसंहत्योः। अयं परः अयम् आत्मीय इति यः कपिरक्षसां विवेकः तञ्च प्रामुष्णात् अपनिनाय। मुष ग मुषन् लुण्ठने॥ ६० ॥ भ०

तत इत्यादि। ततोऽनन्तरं निरालोके समरे राक्षसाः स्वेभ्योऽन्येभ्यश्च अद्विषुः क्रुध्यन्ति स्म। वानरा अपि वानरेभ्योऽद्विषन् निर्दयाः सन्तः। अपिशब्दात् राक्षसेभ्योऽपि। द्विषश्चेत्यनेन शाकटायनमते झेर्जुस्। अन्येषाम् अद्विषन्। क्रुध द्रुहेत्यादिना सम्प्रदानसंज्ञा॥ ६१ ॥ ज० म०

तत इत्यादि। रजो बाहुल्यात् निरालोके रणे राक्षसाः स्वेभ्यो राक्षसेभ्यो अन्येभ्यो वानरेभ्यश्च द्वेषं चक्रुः। वानरा वानरेभ्योऽपिशब्दात् राक्षसेभ्यश्च द्वेषं चक्रुः; लद्विषो ञ वैरे। द्विष विदातोऽनुस्वा। यस्मै दित्सेत्यादिना चतुर्थी॥ ६१ ॥ भ०

अघुरन्नित्यादि। अथ अनन्तरं ते हताः अघुरन् घोरं रौद्रं शब्दितवन्तः। घुर भीमार्थशब्दयोः। शोणितं च अश्च्योतत् क्षरति स्म। तेन च रक्तस्रुतेन समन्तात् सर्वतः कर्दमः समपद्यत सम्पन्नः। कर्मणि लङ्॥ ६२ ॥ ज० म०

अघुरन्नित्यादि। ते हताः कपिराक्षसाः महाघोरं शब्दं चक्रुः। घुर ध्वनौ भीमार्थे। अनन्तरं शोणितम् अश्च्योतत् क्षरति स्म। तेन रक्तेन समन्तात् कर्दमः सम्पन्नः। यौ पदङ्गतौ॥ ६२ ॥ भ०

गम्भीरा इत्यादि। तेन रक्तेन वर्द्धिष्णुना गम्भीरा अगाधाः नद्यः प्रावहन्

प्रवृद्धश्च तद्रजोऽशाम्यत् समवेद्यन्त च द्विषः ॥ ६३ ॥
ततोऽचिवीयतास्त्रौघैर्धनुश्चाधूनयन्महत् ।
रामः समीहितं तस्य नाचेतन् स्वे न चापरे ॥ ६४ ॥
छिन्नानैचन्त भिन्नांश्च समन्ताद्रामसायकैः ।
क्रुष्टं हाहेति चाशृखन् न च रामं न्यरूपयन् ॥ ६५ ॥

प्रवृत्ताः ह्रदाः तड़ागाः समजायन्त सञ्जाताः । तच्च रजः प्रवृद्धम् अशाम्यत् शान्तम्, उद्गमाभावात् उत्पन्नस्य च पतनात् । रजःशमनात् द्विषश्च समवेद्यन्त संवेद्यन्ते स्म । विद वेदनाख्यानिवासनेष्विति चौरादिकः । कर्म्मणि लङ् ॥ ६३ ॥ज० म० ॥

गम्भीरा इत्यादि । तेन रक्तेन गम्भीरा नद्यः प्रवहन्ति स्म । गम्भीरा ह्रदाश्च सञ्जाताः । ततः प्रवृद्धं तव रजः शान्तम् अभवत् । ततश्च द्विषः शत्रवो ज्ञाताः । विद क ञ् चेताख्यानिवासे । कर्म्मणि यक् ॥ ६३ ॥ भ०

तत इत्यादि । ततोऽनन्तरं रामः शस्त्रौघैः अचिचीयत आश्चर्य्यीभूतः । नमोवरिव इति, चित ङ् आश्चर्य्ये, इति क्यङ्, ङित्वात्तङ् । धनुश्च महत् अधूनयत् विधूनितवान् । धूञ्प्रीञोर्नुम् वक्तव्यः । तस्य रामस्य समीहितम् अभिप्रेतं स्वे आत्मीयाः वानराः न च अपरे परकीया नाचेतन् न ज्ञातवन्तः ॥ ६४ ॥ ज० म०

तत इत्यादि । तदनन्तरम् अस्त्रसमूहैः आश्चर्य्यरूपैः जातम् । चिवङ आश्चर्य्ये कण्ड्वादिः । रामश्च महत् धनुः आधूनितवान् । धू न गि धू ज च चकारात् कर्म्म । प्री-धूञोर्णन् वा । तस्य रामस्य समीहितम् अभिप्रेतं स्वे वानरा अपरे राक्षसाश्च न ज्ञातवन्तः, शीघ्रकारित्वात् । चिती ज्ञाने ॥ ६४ ॥ भ०

छिन्नानित्यादि । रामसायकैः छिन्नान् भिन्नांश्च समन्तात् ऐचन्त, हाहेति च क्रुष्टं शब्दम् अन्योऽन्यस्य चाशृखन् । न च नैव रामं न्यरूपयन् राम इति च न निश्चितवन्तः । रूप व्याक्रियायामिति चौरादिकः ॥ ६५ ॥ ज० म०

छिन्नानित्यादि । संग्रामस्थाः कांश्चित् रामस्य सायकैः बाणैः छिन्नान् खण्डितान् कांश्चित् भिन्नान् विदारितान् ईचन्ते स्म । समन्तात् सर्वतः हाहेति क्रुष्टं शब्दं श्रुतवन्तः । अत्र रामोऽस्ति न वेति नैव निश्चितवन्तः, शीघ्रभ्रमणात् । रूप त् क तत्कृती ॥ ६५ ॥ भ०

अभिनच्छत्रुसङ्घातानक्षुणद्वाजिकुञ्जरम्।
अपिनट् च रथानीकं न चाज्ञायत सञ्चरन् ॥ ६६ ॥
दश दन्तिसहस्राणि रथिनाञ्च महात्मनाम्।
चतुर्दशसहस्राणि सारोहाणाञ्च वाजिनाम् ॥६७॥
लक्षे च द्वे पदातीनां राघवेण धनुर्भृता।
अनीयन्ताष्टमे भागे दिवसस्य परिक्षयम् ॥ ६८ ॥
॥युग्मकम्॥
यमलोकमिवाग्रथ्नाद्रुद्राक्रीड़मिवाकरोत्।

अभिनदित्यादि। शत्रुसङ्घातान् अभिनत् भिन्नवान्। वाजिकुञ्जरम् अक्षुणत् सम्पिष्टवान्। क्षुदि सम्पेषणे। रथानीकं रथसमूहम् अपिनट् पिष्टवान्। पिष् लृ संचूर्णने। सर्वे रौधादिकाः। न च सञ्चरन् रामः अज्ञायत न ज्ञातः स्वैः परैर्वा इत्यर्थात्। कर्म्मणि लङ् ॥ ६६ ॥ ज० म०

अभिनदित्यादि। रामः शत्रुसमूहान् बिभेद। अ धौ भिदिर् भिदि। वाजिनः कुञ्जरांश्च चूर्णितवान्। अ धौ क्षुदिर् क्षुदि। रथस्य अनीकं समूहञ्च पिष्टवान्। धौ पिष् लृ चूर्णने। सञ्चरन् रामः परैः न ज्ञातः ॥ ६६ ॥ भ०

दशेत्यादि। अनेन श्लोकद्वयेन। राघवेण धनुर्भृता दिवसस्य अष्टमे भागे अर्द्धप्रहरे दन्तिनां दश सहस्राणि, रथिनाञ्च महात्मनां चतुर्दश सहस्राणि, सारोहाणाञ्च वाजिनां तावन्त्येव, पदातीनां द्वे लक्षे परिक्षयं विनाशम् अनीयन्त नीताः। कर्म्मणि लङ्। अनीयतेति पाठान्तरम्। तत्र सर्वमेतदनीयतेति योज्यम् ॥६७॥६८॥ ज० म०

दशेत्यादि। अग्रिमश्लोकेनान्वयः। धनुर्भृता रामेण दिवसस्य अष्टमे भागे प्रहरार्द्धमध्ये दन्तिनां दश सहस्राणि, महात्मनां रथिनाञ्च चतुर्दश सहस्राणि, सारोहाणां वाजिनाञ्च चतुर्दश सहस्राणि, पदातीनां लक्षद्वयञ्च परिक्षयं विनाशं नीतानि। अनीयतेति पाठे—सर्वम् एतत्तु परिक्षयं नीतम्। भावे वा प्रत्ययः, कर्म्मोपादानेऽपि भावे इति परवचनात्; स्वमतेऽपि कर्म्मोपादाने भावप्रत्ययस्य न निषेधः ॥ ६७॥६८ ॥ भ०

यमेत्यादि। स राघवः तैः राक्षसैः हतैः यमलोकमिव अग्रथ्नात् सन्द-

शैलैरिवाचिनोद्भूमिं वृहद्भीराक्षसैर्हतैः ॥ ६९ ॥
अस्तुवन् देवगन्धर्वा व्यस्मयन्त प्लवङ्गमाः ।
कपीन्द्रेऽतन्यत प्रीतिः पौलस्त्योऽमन्यताद्भुतम् ॥ ७० ॥
राक्षस्यः प्रारुदन्नुच्चैः प्राजुगुप्सन्त रावणम् ।
अमुह्यद् बालवृद्धञ्च समरौदितरो जनः ॥ ७१ ॥

र्भितवान् । ग्रन्थ ग्रन्थ सन्दर्भे इति क्र्यादिः । रुद्राक्रीड़मिव रुद्रस्य क्रीड़ास्थानं श्मशानमिव अकरोत् । भूमिं शैलैरिव अचिनोत् छादितवान् ॥६९॥ ज० म०

यमलोकमित्यादि । वृहद्भिः हतैः राक्षसैः रामो यमलोकमिव सन्दर्भितवान्, चकार इत्यर्थः । ग्रन्थ दर्भे । रुद्रस्य आक्रीड़ं क्रीड़ास्थानं श्मशानमिव अकरोत् । अतनोदिति क्वचित् पाठः । भूमिं शैलैरिव अचिनोत् आच्छादितवान्, रक्षसां वृहत्त्वात् । चि न चि ञ चित्याम् ॥ ६९ ॥ भ०

अस्तुवन्नित्यादि । तम् अद्भुतकर्मकारिणं देवा अस्तुवन् स्तुवन्ति स्म । प्लवङ्गमाः कपयः व्यस्मयन्त विस्मिताः । ङ्त्विात्तङ् । कपीन्द्रे सुग्रीवे प्रीतिः अतन्यत तन्यते स्म । कर्म्मकर्त्तरि लङ् । पौलस्त्यो विभीषणः आश्चर्य्यं ज्ञातवान् ॥७०॥ ज०म०

अस्तुवन्नित्यादि । देवा गन्धर्वाश्च तम् अर्थात् अस्तुवन् स्तुवन्ति स्म । कपयो विस्मयं प्राप्ताः । सुग्रीवे प्रीतिः विस्तृता । विभीषणश्च आश्चर्य्यं ज्ञातवान् इत्यर्थः ॥ ७० ॥ भ०

राक्षस्य इत्यादि । राक्षस्यो भर्त्रादिवधदुःखिता उच्चैः प्रारुदन् रुदितवत्यः । रुदादिभ्य इतीट् न भवति, अवलादित्वात् । रावणं प्राजुगुप्सन्त निन्दितवत्यः, एतद्दुर्नयात् सर्वमिति । बाला वृद्धाश्च तद् इयम् अमुह्यत् भयात् मोहं गतम् । इतरो जनः राक्षसीबालवृद्धेभ्योऽन्यः समरौत् आक्रुष्टवान् । रु शब्दे । उतो वृद्धिः लुकि ॥ ७१ ॥ ज० म०

राक्षस्य इत्यादि । पत्यादिवधात् राक्षस्यो रोदनं चक्रुः । उच्चैः रावणं निन्दन्ति स्म । गुपेः कित्तिजगुप इति निन्दायां सन् इमनिषेधश्च । बालवृद्धं कर्त्तृ भयात् अमुह्यत् मोहं प्राप, बालाश्च वृद्धाश्च इति समाहारः । इतरो राक्षसीबालवृद्धेभ्योऽन्यो जनः संरावं चकार । रु ल ध्वनौ, संपूर्वः । रपिद्वस्युतोऽद्वेन्निः ॥७१॥ भ०

सर्वतश्चाभयं प्राप्नोन्नैच्छन्नृभ्यस्तु रावणः।
फलं तस्येदमभ्यायाद्दुरुक्तस्येति चाब्रुवन्॥ ७२॥
ततोऽधावन्महाघोरं रथमास्थाय रावणः।
अध्मायत मही गृध्रास्तमारार्य्यन्त भीषणाः॥ ७३॥
मेघाः सविद्युतोऽवर्षंश्चेलक्नोपञ्च शोणितम्।

सर्वत इत्यादि। सर्वतो देवादिभ्यः अभयं रावणः प्राप्नोत् प्राप्तवान्, यतो ब्रह्मणि वरं दातुम् उद्यते देवादीनाम् अवध्यो भूयासम् इत्युक्तवान्; नृभ्यस्तु सकाशात् अभयं नैच्छन् न इष्टवान्; के मम मानुषाः? इति। तस्य दुरुक्तस्य फलम् अभ्यायात् उपागतम् इत्येवम् अपरे अब्रुवन् उक्तवन्तः॥ ७२॥ ज० म०

सर्वतश्चेत्यादि। रावणः सर्वेभ्यो देवगन्धर्वादिभ्योऽभयं प्राप्तवान्, ब्रह्मसेवया इत्यर्थात्, नृभ्यो मनुष्येभ्यस्तु अभयम् असौ नेष्टवान् ब्रह्माणं न प्रार्थितवान्, तेषां भक्ष्यत्वात्; तस्य दुरुक्तस्य दुष्टभाषितस्य वरप्रार्थनाकाले मनुष्यावज्ञासूचकस्य फलम् इदम् अभ्यायात् उपगतम्, इत्येवं केचित् उक्तवन्तः। पूर्वश्लोकात् समरौदित्यस्य विभक्तिव्यत्ययेन अनुषङ्गः॥ ७२॥ भ०

तत इत्यादि। ततोऽनन्तरं महाघोरं रथम् आस्थाय आरुह्य रावणः योद्धुं वेगेन गतवान्। तस्य च धावतो मही अध्मायत कम्पिता। ध्मायी विधूनने। गृध्राश्च भीषणाः समरार्य्यन्त अत्यर्थं गतवन्तः। सूचि-सूत्रि-मूत्रिभ्यो यङ्, अशूर्णोतीनां ग्रहणं, यङ्विधावनेकाज्हलाद्यर्थमित्युपसंख्यानात्। अर्त्तेर्यङ्। गुणोऽर्त्तिसंयोगाद्योरित्यधिकृत्य यङि चेति गुणः॥ ७३॥ ज० म०

तत इत्यादि। तदनन्तरं महाघोरं रथम् आरुह्य रावणोऽधावत् वेगेन योद्धुं गतः। धावु ङ् जवे। कजि परे तु सर्त्तेर्धावो वेगे शितीति सूत्रं कृत्वा सृ गतावित्यस्य रूपम् वदन्ति, तत्तु व्यर्थं, फलतो विशेषाभावात्। दुर्निमित्तान्याह—भूमिः चलति स्म। ध्मायी ङ् विधूनने। भीषणा गृध्राः तम् अत्यर्थं कुटिलञ्च गताः। ऋ प्रापणे च, चकारात् गतौ। गत्यर्थादिति यङ्, मूत्र-सूत्रेत्यादिना वा पृथग्ग्रहणात्। स्याद्यर्त्तौ गुर्यङ्ङिति गुणः। स्यादौ नवद्रोऽये इति यसंयोगविषये द्वित्वस्य निषेधाभावः। र्घोऽमित इति खेर्दीर्घः॥ ७३॥ भ०

मेघा इत्यादि। सविद्युतो मेघाः चेलक्नोपं शोणितं रक्तम् अवर्षन् वर्षित-

अवान् भीमा नभस्वन्तः प्रारुवन्नशिवाः शिवाः ॥ ७४ ॥
आटाट्यताऽवमत्यासौ दुर्निमित्तानि संयुगे ।
अधुनोद्धनुरस्त्रौघैः प्रोर्णोनूयत विद्विषः ॥ ७५ ॥

वन्तः । यावता रक्तेन चेलं वासः क्नोपयते सिच्यते तावत्प्रमाणं वृष्टवन्तः । क्नुयी शब्दे इत्यस्य णन्तस्य अर्त्ति-ह्रीत्यादिना पुकि यलोपः । चेले क्नोपेरिति णमुल् । भीमाः नभस्वन्तः वायवः अवान् वान्ति स्म । लङः शाकटायनस्यैवेति नियमादन्यमतेन तु सु न भवति । शिवाः शृगालाः अशुभाः अनिष्टशंसिन्यः प्रारुवन् शब्दितवत्यः॥७४॥ज०म०

मेघा इत्यादि । सविद्युतो मेघाः चेलक्नोपं वस्त्रक्लेदनप्रमाणं शोणितं वर्षन्ति स्म । यावता रुधिरेण वस्त्रं सिच्यते तावत्प्रमाणम् इत्यर्थः । क्नुयी ङ् दुर्गन्धे, आर्द्रत्वे शब्दे । दीर्घेकारवानयं "क्नुयी क्ष्मायति ते विदेवय इमे सेविश्वासविस्तथा" इति च । जेः स्वः, क्नोवृल्टरी क्नुयीति पण् गुणश्च । इसालोप इति यलोपः । चेलं क्नोपयति क्लेदयतीति, ढात् षण् । वर्षणक्रियाविशेषणम् । एतद्विशेषणादेतन्मानं गम्यते, अन्यथा एतद्विशेषणस्य वैयर्थ्यं स्यात् । परे तु वस्त्रार्थाद वृष्टिमाने क्नोपयतेः णमु-मित्याहुः । स्वमतेऽपि चणम् वेत्यस्य योगविभागात् तत्र षणम् स्यादेव । तदा चेलं क्नोपयन् इत्यर्थः । भीमा वायवो वान्ति स्म । द्विषविदात इत्यस्य पाक्षिकत्वान्नात उस् । शिवाः शृगाला अशुभसूचकं रवं चक्रुः ॥ ७४ ॥ भ०

आटाट्यतेत्यादि । असौ रावणः दुर्निमित्तानि अवमत्य युद्धार्थम् आटाट्यत अत्यर्थम् आटत् । सूचि-सूत्रीत्यादिना यङ् । संयुगे युद्धे धनुः अधुनोत् कम्पितवान् । अस्त्रौघैः विद्विषः शत्रून् प्रोर्णोनूयत भृशं छादितवान । ऊर्णु ञ् आच्छादने । ऊर्णोति-र्णुवद्भावात् सूचि-सूत्रीत्यादिना वा यङ् । अजादेर्द्वितीयस्येति द्विर्वचने नन्द्रा इति रेफो न द्विरुच्यते, नुशब्दस्य द्विर्वचनम् । गुणो यङ्लुकोरिति गुणः । अकृत्सार्व-धातुकयोरिति दीर्घः ॥ ७५ ॥ ज० म०

आटाट्यतेत्यादि । एतानि दुर्निमित्तानि अवमत्य अवज्ञाय असौ रावणो भृशं कुटिलञ्च अगच्छत् । अट गतौ । मूत्र-सूत्रेति यङ् गत्यर्थादित्यादिना च । संयुगे युद्धे धनुः अधुनोत् कम्पितवान् । धू ञ न कम्पे । अस्त्रौघैः द्विषः शत्रून् भृशं पुनः-पुनर्वा आच्छादितवान् । ऊर्णु ल ञ आच्छादने । मूत्र-सूत्रेति यङ् । स्यादौ नवद्रोऽये

व्यनाशयंस्ततः शत्रून् सुग्रीवास्ता महीभृतः।
ततो व्यरसदग्लायदध्यशेत महीतलम्॥ ७६॥
अस्रवीतद्रुधिरं तोयमलष्यच्चातिविह्वलम्।
अशीयत नृमांसादां बलं सुग्रीवबाधितम्॥ ७७॥
विरूपाक्षस्ततोऽक्रीड़त् संग्रामे मत्तहस्तिना।
मुष्टिनादालयत्तस्य मूर्द्धानं वानराधिपः॥ ७८॥

---

इति निषेधात् रेफं विश्लिष्य नीः द्वित्वम्। अयश्च इत्यनेन यसंयोगादिस्थितस्य निषेधाभावः॥ ७५॥ भ०

व्यनाशयन्नित्यादि। ततोऽनन्तरं सुग्रीवास्ताः सुग्रीवेण क्षिप्ता महीभृतः पर्वताः शत्रुसैन्यं व्यनाशयन् मारितवन्तः। ततो नृमांसादां रक्षसां बलं सुग्रीवबाधितं पीड़ितम् इत्युत्तरश्लोकेन सम्बन्धः। व्यरसत् आक्रन्दितवत्, अग्लायत् ग्लानिं गतं, महीतलमध्यशेत महीतले पतितम्। शीङः सार्वधातुके गुणः॥ ७६॥ ज० म०

व्यनाशयन्नित्यादि। तदनन्तरं सुग्रीवेणास्ताः क्षिप्ताः महीभृतः पर्वताः शत्रून् नाशितवन्तः। ततो नृमांसादां रक्षसां बलं सुग्रीवेण बाधितं सत् व्यरसत् आक्रन्दं चकार इत्युत्तरश्लोकेनान्वयः। रस शब्दे, ग्लै कान्तिसंक्षये। भूतलम् अधिशेते स्म, निपतितम् इत्यर्थः। शीङो रे गुः॥ ७६॥ भ०

अस्रवीतदित्यादि। रुधिरम् अस्रवीतत् अस्रवत्, विह्वलञ्च सत् तोयम् अलष्यत् अभिलषितवत्। वा भ्रासेत्यादिना विकल्पेन श्यप्। अशीयत च अवसन्नम्। शदेः शित इति तङ्। पा-घ्रेत्यादिना शीयादेशः। मांसम् अदन्तीति अदोऽनन्न इति विच्॥ ७७॥ ज० म०

अस्रवीतदित्यादि। रुधिरं रक्तम् अक्षरत्, पानार्थं तोयं जलम् अतिविह्वलम् अतिकातरं यथा स्यात् तथा याचते स्म; अशीयत च अवसादं प्राप्तम् इत्यर्थः। स्या दानेत्यादिना शीयादेशः। अदोऽपि मनित्यादिना मम्॥ ७७॥ भ०

विरूपाक्ष इत्यादि। ततो विरूपाक्षो नाम राक्षसः मत्तहस्तिना संग्रामे अक्रीड़त् भ्रान्तवान्। तस्य मूर्द्धानं वानराधिपः सुग्रीवः मुष्टिना अदालयत् दलितवान्। दल विदारणे, चुरादिः॥ ७८॥ ज० म०

विरूपाक्ष इत्यादि। ततो विरूपाक्षनामा राक्षसः समरे युद्धे मत्तहस्तिना क्रीड़ति स्म। तस्य मूर्द्धानं सुग्रीवो मुष्टिना विदारितवान्। दल मि भेदे॥ ७८॥ भ०

अचूर्णयच्च यूपाक्षं शिलया तदनन्तरम्।
संक्रुद्धो मुष्टिनाऽतुभ्नादङ्गदोऽलं महोदरम्॥ ७९॥
ततोऽकुष्णाद्दशग्रीवः क्रुद्धः प्राणान् वनौकसाम्।
अगोपायच्च रक्षांसि दिशश्चारीनभाजयत्॥ ८०॥
आलोकयत् स काकुत्स्थमधृष्णोद्घोरमध्वनत्।
धनुरभ्रमयद्भीममभीषयत विद्विषः॥ ८१॥

अचूर्णयदित्यादि। तदनन्तरं वानराधिपः यूपाक्षं नाम राक्षसं शिलया अचूर्णयत् चूर्णितवान्। तत्करोतीति णिच्। अङ्गदोऽपि संक्रुद्धः मुष्टिना महोदरम् अलं पर्य्याप्तम् अतुभ्नात् व्यापादितवान्। नभतुभ हिंसायां, क्र्यादिः॥७९॥ज०म०

अचूर्णयच्चेत्यादि। विरूपाक्षवधानन्तरं वानराधिपः शिलया यूपाक्षं राक्षसं चूर्णितवान्। संक्रुद्धोऽङ्गदोऽपि मुष्टिना महोदरम् अलम् अत्यर्थम् अतुभ्नात् जघान। तुभ्य ग च, चकारात् हिंसे॥ ७९॥ भ०

तत इत्यादि। ततो दशग्रीवः क्रुद्धः वनौकसां वानराणां प्राणान् अकुष्णात् कृष्टवान्। कुष निष्कर्षे। रक्षांसि च राक्षसांश्च अगोपायत् रक्षितवान्। गुपूधूपेत्यादिना आयप्रत्ययः। अरींश्च दिशोऽभाजयत् प्रहितवान्॥ ८०॥ ज० म०

तत इत्यादि। अनन्तरं क्रुद्धो रावणो वानराणां प्राणान् अकुष्णात् देहेभ्यो वहिश्चकार। कुष ग निष्कर्षे। रक्षांसि रक्षितवान्। गुपू रक्षे। कम ऋती गुपूधूपेत्यायः। अरींश्च दिशः प्रापितवान्। भजेर्णिः प्रेरणे॥ ८०॥ भ०

आलोकयदित्यादि। स दशग्रीवः काकुत्स्थम् आलोकयत् दृष्टवान्। घोरदर्शनम् अधृष्णोत् धृष्टवान्। ञि धृषा प्रागलभ्य इति स्वादिः। तान् अनुसरन् घोरम् अध्वनत् ध्वनितवान्, रामं मारयामीति। भीमं धनुः अभ्रमयत् भ्रमितवान्। मितां ह्रस्वः, मान्तत्वान्मित्त्वम्। ये विद्विषो न पलायिताः, तान् अभीषयत त्रासितवान्। भियो हेतुभये षुक्, भीस्म्योर्हेतुभय इति तङ्॥ ८१॥ ज० म०

आलोकयदित्यादि। स रावणः काकुत्स्थं दृष्टवान्। लोकृ क् दीप्तौ, आङ्पूर्वो दर्शने। तम् आलोक्य प्रगल्भते स्म। ञि धृषा न प्रागल्भ्ये। घोरम् अध्वनत् सिंहनादं चकार। भीमं धनुः भ्रामयामास। घटादिज्वलीत्यादिना अमन्तत्वात् ह्रस्वः। तान् द्विषः शत्रून् त्रासितवान्। भीभीष् वेति भीषादेशो मश्च॥ ८१॥ भ०

आस्कन्दल्लक्ष्मणं बाणैरत्यक्रामच्च तं द्रुतम्।
राममभ्यद्रवज्जिष्णुरस्कुनाच्चेषुवृष्टिभिः॥ ८२॥
अपौहद्बाणवर्षं तद्भल्लै रामो निराकुलः।
प्रत्यस्कुनोद्दशग्रीवं शरैराशीविषोपमैः॥ ८३॥
मण्डलान्याटतां चित्रमच्छित्तां शस्त्रसंहतीः।
जगद्विस्मापयेतां तौ न च वीरावसीदताम्॥ ८४॥

आस्कन्ददित्यादि। जिष्णुः जयशीलो दशग्रीवः लक्ष्मणं बाणैः आस्कन्दत् बाधितवान्। स्कन्द गतिशोषणयोः। तच्च लक्ष्मणं द्रुतम् अत्यक्रामत् तिष्ठेत्याक्रान्तवान्। शिति दीर्घः। अतिक्रम्य च रामम् अभ्यद्रवत् अभिमुखं गतवान्। द्रु गतौ। इषुवृष्टिभिः अस्कुनात् छादितवान्। स्कु ञ् आवरणे। स्तन्भु-स्तुन्भित्यादिना चकारात् नात्॥ ८२॥ ज० म०

आस्कन्ददित्यादि। जिष्णुः जयशीलो रावणो बाणैः लक्ष्मणम् आस्कन्दत् पीड़ितवान्। स्कन्दिरौ शोषणे गत्याम्। तच्च लक्ष्मणं द्रुतम् अतिक्रान्तवान्। क्रमः पेऽपि र्घः। रामम् अभिमुखेन ययौ। द्रु स्रुतौ गतौ। बाणवृष्टिभिः तम् आच्छादितवान्। स्कु ग न ञ आप्लुतौ॥ ८२॥ भ०

अपौहदित्यादि। तत् बाणवर्षं रामो निराकुलः सन् भल्लैः अपौहत् अपनीतवान्। उपसर्गादस्यत्यूह्योर्वा वचनमिति पचे तिप्। दशग्रीवं बाणैः आशीविषोपमैः दुःसहत्वात् प्रत्यस्कुनोत् प्रतीपं छादितवान्। अत श्नुप्रत्ययः॥८३॥ ज०म०

अपौहदित्यादि। निराकुलो रामः तां बाणवृष्टिं भल्लैः बाणविशेषैः अपनीतवान्। ऊह ङ् तर्के। गेर्वाऽस्योर्हो ढे चेति मस्य पाचिकत्वादत्र पम्। आशीविषोपमैः दुःसहत्वात् सर्पतुल्यैः बाणैः दशग्रीवं प्रत्यस्कुनोत् आच्छादितवांश्च। "आशीः स्यादहिदंष्ट्रेऽपि"। तत्र विषमस्येति मनीषादिः। "आशीमिव कलामिन्दोः" इति दर्शनात् ईकारान्तमपि प्रकृत्यन्तरम्॥ ८३॥ भ०

मण्डलानीत्यादि। चित्रम् आश्चर्य्यं मण्डलानि आटतां चक्रवद् भ्रान्तौ। शस्त्रसंहतीः अच्छित्तां छिन्नवन्तौ। जगत् विस्मापयेतां विस्मापितवन्तौ। नित्यं स्मयतेरिति आत्वम्। न च तौ वीरौ असीदताम् अवसन्नौ। पाघ्रेति सीदादेशः॥ ८४॥ ज०म०

मण्डलानीत्यादि। तौ युध्यमानौ रामरावणौ मण्डलानि आटतां चक्रवद्-

व्योम प्राचिनुतां बाणैः क्ष्मामक्ष्मापयतां गतैः ।
अभित्तां तूर्णमन्योऽन्यं शिक्षाश्चातनुतां मुहुः ॥ ८५ ॥
समाधत्तासुरं शस्त्रं राक्षसः क्रूरविक्रमः ।
तदक्षरन्महासर्पान् व्याघ्रसिंहांश्च भीषणान् ॥ ८६ ॥
न्यषेधत् पावकास्त्रेण रामस्तद्राक्षसस्ततः ।

---

भ्रान्तौ । अट गतौ । अन्योऽन्यम् अस्त्रसमूहान् छिन्नवन्तौ । जगत् विस्मितं चक्रतुः । स्मिङोर्घादिति आ, मश्च, क्रीङ्जीति पण् । न च खिन्नौ, यतो वीरौ । स्यादानेति सदेः सीदः ॥ ८४ ॥ भ०

व्योमेत्यादि । बाणैः व्योम प्राचिनुतां छादितवन्तौ । क्ष्मां पृथिवीम् अक्ष्मापयतां कम्पितवन्तौ । क्ष्मायी विधूनने । अर्त्तिह्रीत्यादिना पुक् । अन्योऽन्यम् अभित्तां विदारितवन्तौ । असोरल्लोपः, चर्त्वेन च तकारः । तूर्णं, शिक्षा धनुषि कौशलानि मुहुः अतनुतां विस्तारितवन्तौ ॥ ८५ ॥ ज० म०

व्योमेत्यादि । तौ बाणैः व्योम आकाशं प्राचिनुतां छादितवन्तौ । चिन चिञ चित्याम् । प्रावृणुतामिति पाठे—वृण्ग वृञ वृतौ । गतैः गमनैः क्ष्मां कम्पितवन्तौ । क्ष्मायी ङ् विधूनने । ञिः, क्रीङ्जीति पण्, हसाल्लोप इति यलोपः । तूर्णम् अन्योऽन्यं भिन्नवन्तौ । ञ धौ भिदिर्ङ भिदि । मनीषादित्वात् सवर्गात् सवर्गस्य सवर्गे वा लोप इति बोध्यम् । तेन एकतकारवानपि पाठः । शिक्षाश्च धनुषि कौशलानि मुहुः आतनुताम् । तन दु ञ विस्तारे ॥ ८५ ॥ भ०

समाधत्तेत्यादि । राक्षसः आसुरं शस्त्रं समाधत्त धनुष्यारोपितवान् । श्लौ द्विर्वचनम्, अभ्यासकार्य्यं, श्नाऽभ्यस्तयोरित्याकारलोपः, दधस्तथोश्चेति भष्भावः, भष-स्तथोर्धोऽध इति प्रतिषेधात् तकारस्य धत्वं न भवति । तत्संहितं सर्पादीन् प्राक्षरत् मुक्तवत् ॥ ८६ ॥ ज० म०

समाधत्तेत्यादि । क्रूरविग्रहो भीमविग्रहो राक्षसः धनुषि असुरदेवतं शस्त्रं समाधत्त आरोपितवान् । डु धा ञ् लि धारणे पुष्टौ दाने, सम्पूर्वः सन्धाने । ह्लादौ रे ह्नि: । आदोरालोप्य इत्यालोपो, धो द धोऽन्तलोप इति खेर्धत्वम् । तत् शस्त्रं संहितं भीषणान् सर्पादीन् चरति स्म ॥ ८६ ॥ भ०

न्यषेधदित्यादि । तत् आसुरं शस्त्रं रामः पावकास्त्रेण न्यषेधत् निषिद्धवान् । ततो राक्षसो रौद्रम् अस्त्रम् अत्युग्रम् अदीव्यत् क्षिप्तवान् । अत्र दिविर्गतौ वर्त्तते।

अदीव्यद्रौद्रमत्युग्रं मुषलाद्यगलत् ततः॥ ८७॥
गान्धर्व्वेण न्यविध्यत्तत् चितीन्द्रोऽथ नराशनः।
सर्व्वमर्म्मसु काकुत्स्थमौम्भत्तीक्ष्णैः शिलीमुखैः॥ ८८॥
ततस्त्रिशिरसं तस्य प्राव्रश्चल्लक्ष्मणो ध्वजम्।
अमथ्नात् सारथिञ्चाशु भूरिभिश्चातुदच्छरैः॥ ८९॥
अश्वान् विभीषणोऽतुम्भात्स्यन्दनञ्चाक्षिणोत् द्रुतम्।

ततो रौद्रात् चिनात् मुषलादि प्रहरणम् अगलत् निर्गतवत्। गल अदने, अनेकार्थत्वात् धातूनां गलिरत्र निर्गमे वर्त्तते॥ ८७॥ ज० म०

न्यषेधदित्यादि। रामः तदा आसुरास्त्रं पावकास्त्रेण विनिवारितवान्। षिधु गत्यां, निपूर्वो निवारणे। गीक इति षत्वम्। ततो राक्षसो रुद्रदैवतम् अत्युग्रम् अदीव्यत् तेन जिगीषाञ्चकार। दिवो धे वेति करणे द्वी। दिव्यु जिगीषेच्छापणिद्युतौ क्रीडागत्योः; गतावित्ह दिविरिति जयमङ्गलाः। व्यनच् तयोरिति दीर्घः। ततो रौद्रास्त्रात् मुषलादि प्रहरणं गलितम्॥ ८७॥ भ०

गान्धर्व्वेत्यादि। चितीन्द्रो रामः तत् रौद्रम् अस्त्रं गान्धर्व्वेण अस्त्रेण न्यविध्यत् ताड़ितवान्। अथ नराशनो राक्षसः शिलीमुखैः बाणैः सर्व्वमर्म्मसु काकुत्स्थम् औम्भत् पूरितवान्। उम्भ पूरणे तुदादौ॥ ८८॥ ज० म०

गान्धर्व्वेणेत्यादि। चितीन्द्रो रामो गन्धर्व्वदेवतेन अस्त्रेण तत् रौद्रास्त्रं विव्याध। व्यधो य ताडे। ग्रहस्वपाद्योरिति जिः। अथ नराशनो रावणः तीक्ष्णैः शिलीमुखैः बाणैः सर्व्वत्र मर्म्मस्थाने काकुत्स्थं पूरितवान्। उन्भपुभ श पूर्त्तौ। हन्पां लुग् वा शणाविति पक्षे नलोपाभावः॥ ८८॥ भ०

तत इत्यादि। ततोऽनन्तरं लक्ष्मणः तस्य रावणस्य ध्वजं त्रिशिरसं त्रिशूलाग्रं प्राव्रश्चत् छिन्नवान्। ओ व्रश्चू छेदने, तुतादौ। सारथिं चामथ्नात् ध्वस्तवान्। मथ विलोड़ने, क्र्यादिः। भूरिभिश्च प्रभूतैः शरैः अतुदत् व्यथितवान्॥ ८९॥ ज०म०

तत इत्यादि। ततः तदनन्तरं लक्ष्मणः तस्य त्रिशिरशं त्रिलेखं ध्वजं छिन्नवान्। व्रश्चू श छेदे। ग्रहस्वपाद्योरिति जिः। सारथिञ्च हतवान्। श मन्थ च गाहे। भूरिभिः बहुभिः शरैः ताड़ितवान् तम् इत्यर्थात्॥ ८९॥ भ०

अश्वानित्यादि। विभीषणश्च अश्वान् अतुम्भात् हतवान्। नभतुभ हिंसायाम्।

नाक्षुभ्नाद्राक्षसो भ्रातुः शक्तिञ्चोदवृहद्गुरुम् ॥ ९० ॥
तामापतन्तीं सौमित्रिस्त्रिधाऽकृन्तच्छिलीमुखैः ।
अशब्दायन्त पश्यन्तस्ततः क्रुद्धो निशाचरः ॥ ९१ ॥
अष्टघण्टां महाशक्तिमुदयच्छन्महत्तराम् ।
रामानुजं तयाविध्यत् स महीं व्यसुराश्रयत् ॥ ९२ ॥

स्यन्दनं च अक्षिणोत् भग्नवान् । क्षिणु हिंसायां तनादौ । राक्षसो रावणः न अक्षुभ्नात् न क्षोभं गतः । क्षुभ सञ्चलने, क्र्यादौ गृह्यते न दिवादौ । भ्रातुः विभीषणस्य कृते गुरुं शक्तिम् उदवृहत् उद्यतवान् । वृह उद्यमने, तुदादौ । गुरुमिति वोतो गुणवचनादिति विकल्पेन ङीष् ॥ ९० ॥ ज० म०

अश्वानित्यादि । तस्य अश्वान् विभीषणो हतवान् । तुभ्य ग च, चकारात् हिंसे । शीघ्रं स्यन्दनं च अक्षिणोत् । क्षण क्षिण दु ञ वधे । नोप्युङी णुरिति गुणाभावः । एतावत्यपि राक्षसो न क्षोभं प्राप । क्षुभ्य ग च, चकारात् सञ्चलने ; मनीषादित्वात् भकारतवर्गयुक्तस्य न णत्वमिति बोध्यम् । भ्रातुः विभीषणस्य कृते गुर्वीं शक्तिम् अस्त्रविशेषम् उत्थापितवान् । शू वृह उद्यमे । भ्रातुः उपरि नाक्षुभ्नात् शत्रुपक्षस्थितत्वादित्यन्ये योजयन्ति ॥ ९० ॥ भ०

तामित्यादि । तस्य उपरि शक्तिम् आपतन्तीं सौमित्रिः शिलीमुखैः त्रिधा त्रिप्रकारम् अकृन्तत् छिन्नवान् । कृती छेदने, तुदादौ । यत्र प्रेक्षकाः पश्यन्तः ते अशब्दायन्त शब्दं कृतवन्तः । वीर ! लक्ष्मण ! साधु कृतमिति । शब्दवैरेत्यादिना करोत्यर्थे क्यङ् । ततोऽनन्तरं निशाचरः क्रुद्धः क्रोधं कृतवान् ॥ ९१ ॥ ज० म०

तमापतन्तीमित्यादि । विभीषणोपरि आपतन्तीं तां शक्तिं लक्ष्मणो बाणैः प्रकारत्रयेण कृन्तति स्म । कृती श प छिदि । पश्यन्तः समरप्रेक्षका देवादयः शब्दं चक्रुः । शब्दसुखकष्टादेरिति ङ्यः । तत इत्यादिकमुत्तरश्लोकेन सम्बध्यत ॥९१॥ भ०

क्रुद्धो निशाचरः किं कृतवानित्याह—

अष्टेत्यादि । अष्टौ घण्टा यस्यां महाशक्तौ, तां शक्तिं प्रभावेण महत्तरां महतीम् अतिशयेन महाप्रमाणाम् उदयच्छत् उद्यतवान् । समुदाङ्भ्यो यमोऽग्रन्थ इति तङ् भवति, अकर्त्रभिप्रायत्वात् । तया च करणभूतया रामानुजं लक्ष्मणम् अविध्यत् विद्धवान् । राममनुजातवानिति अनौ कर्मणीति डः । स च लक्ष्मणो

राघवस्याभृशायन्त शायकास्तैरुपद्रुतः।
ततस्तूर्णं दशग्रीवो रणक्ष्मां पर्य्यशेषयत्॥ ९३॥
सस्फुरस्योदकर्षच्च सौमित्रेः शक्तिमग्रजः।
असिञ्चदोषधीस्ता याः समानीता हनूमता॥ ९४॥
उदजीवत् सुमित्राभूर्भ्रातास्लिष्यत् तमायतम्।

विद्धः व्यसुः विगतप्राणः महीम् आश्रयत् आश्रितवान्, भुवि पतित इत्यर्थः॥ ९२॥ ज० म०

अष्टघण्टामित्यादि। तदनन्तरं क्रुद्धो रावणो महाप्रमाणां शक्तिम् उदयच्छत् उत्थापितवान्। कीदृशीम्?—अष्टौ घण्टा यस्याः तां, प्रभावेण महत्तराम्। महतीशब्दात् तरप्रत्यये सति पुंवत्। स्यादानेति यमेर्यञ्चः। तया शक्त्या रामानुजं लक्ष्मणम् अविध्यत् ताड़ितवान्। स लक्ष्मणो व्यसुः विगतप्राणः सन् भूमिम् आश्रितवान्॥ ९२॥ भ०

राघवस्येत्यादि। तस्मिन् पतिते राघवस्य सम्बन्धिनो वाणा अभृशायन्त अभृशा भृशा अभवन्, शीघ्रगतयो जाता इत्यर्थः। ततः तैः उपद्रुतो दशग्रीवः तूर्णी भूत्वा रणक्ष्मां रणभूमिं पर्य्यशेषयत् त्यक्तवान्। शिष असर्वोपयोगे, चुरादिः॥ ९३॥ ज० म०

राघवस्येत्यादि। लक्ष्मणे पतिते सति राघवस्य शराः पूर्वम् अभृशाः तदानीं भृशा अभवन्, शीघ्रगतयो जाता इत्यर्थः। भृशादिभ्यार्थ इति क्यङ्। तदनन्तरं तैः शायकैः उपद्रुतो दशग्रीवः तूर्णं शीघ्रं रणभूमिं पर्य्यशेषयत् त्यक्तवान्। शिष कि असर्वोपयोगे॥ ९३॥ भ०

सस्फुरस्येत्यादि। अग्रतश्च रामः सौमित्रेः सस्फुरस्य उच्छ्वसतः शक्तिं हृदयलग्नाम् उदकर्षत् उत्कृष्टवान्। याश्च हनूमता औषध्यः समानीताः ता असिञ्चत् व्रणदेशेषु चारितवान्॥ ९४॥ ज० म०

सस्फुरस्येत्यादि। सोऽग्रजो रामः सस्फुरस्य उच्छ्वसतः सौमित्रेः शक्तिं हृदि लग्नाम् उदकर्षत् आकृष्टवान्। स्फुर शि स्फूर्त्तौ चले। पचादित्वादच्, कुटादित्वात् कुटां णुञोऽञ्णितीति निषेधान्न गुणः। या औषधयो हनूमता समानीताः ता औषधीः असिञ्चत् व्रणदेशे इत्यर्थात्। षिच प शी ञ् चरणे॥ ९४॥ भ०

उदजीवदित्यादि। ततः सुमित्राभूः लक्ष्मणः उदजीवत् प्रत्युज्जीवितवान्।

सम्यगमूर्द्धन्युपाशिङ्घदपृच्छच्च निरामयम् ॥ ९५ ॥
ततः प्रोदसहन् सर्वे योद्धुमभ्यद्रवत् परान् ।
अकृच्छ्रायत च प्राप्तो रथेनान्येन रावणः ॥ ९६ ॥
भूमिष्ठस्यासमं युद्धं रथस्थेनेति मातलिः ।
आहरद्रथमत्युग्रं सशस्त्रं मघवाज्ञया ॥ ९७ ॥

तच्च जीवितं भ्राता रामः आयतं दीर्घकालम् अश्लिष्यत् आलिङ्गितवान् । मूर्द्धनि च सम्यक् उपाशिङ्घत् आघ्रातवान् । शिघि आघ्राणे । निरामयञ्च कुशलम् अपृच्छत् पृष्टवान्—किं व्यपगता पीड़ेति ॥ ९५ ॥ ज० म०

उदजीवदित्यादि । सुमित्राभूः लक्ष्मणः उज्जीवितवान् ; मातृनामसङ्कीर्त्तनं पराजितत्वेन अपकर्षात् । भ्राता राम आयतं दीर्घकालं तं लक्ष्मणम् आलिङ्गितवान् । श्लिषो य लृ ञि आलिङ्गने । मूर्द्धनि च सम्यक् आघ्रातवान् । शिघ्याघ्राणे ; स्नेहाभिव्यञ्जकमिदम् । निरामयं पीड़ाया अभावञ्च पृष्टवान् । आमयस्याभाव इत्यव्ययीभावः ॥ ९५ ॥ भ०

तत इत्यादि । पुनः सर्वे एव रामादयो योद्धुं प्रोदसहन् प्रोत्साहितवन्तः । सह मर्षणे इति चौरादिकः परस्मैपदी । आ धृषादिति णिज् भवति, न तु भौवादिकः, तस्यात्मनेपदित्वात् । रावणश्च अन्येन रथेन प्राप्तः सन् परान् उत्सहतोऽभ्यद्रवत् अभिमुखं गतवान् । अकृच्छ्रायत च, कृच्छ्राय पापाय कर्म्मणे क्रमितवान् । सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यमिति क्यङ् । कण्वचिकीर्षा पापचिकीर्षा ॥ ९६ ॥ ज० म०

तत इत्यादि । पुनः सर्वे एव रामादयो योद्धुं प्रोत्सहन्ते स्म । सह्य कि शक्तौ, क्यनुबन्धत्वाद्वा चुरादिः । रावणोऽपि अन्येन रथेन सम्प्राप्तः सन् परान् शत्रून् अभ्यद्रवत् अभिमुखं गतः । आत्मनश्च कृच्छ्रम् इन्द्रजिद्वधादिजन्यं वेदितवान् । सुखादित्वात् शब्दसुखकष्टादेरिति ङ्यः । कृच्छ्रं कर्म्म करोतीति कष्टादिरित्यन्ये । तन्मते कूटयुद्धादिना पापवृत्तिः ; प्रकृत्यन्तरमिति कालापाः, कृच्छ्रशब्दस्य तद्वति पुरुषे वर्त्तमानत्वात् कृच्छ्रवान् इवाचरति स्मेति घान्ङ्प्रकौ इति ङ्य इति केचित् ॥ ९६॥भ०

भूमिष्ठस्येत्यादि । भूमिष्ठस्य रामस्य । अम्बाम्बेति मूर्द्धन्यः । रथस्थेन रावणेन

सोऽध्यष्ठीयत रामेण शस्त्रं पाशुपतं ततः।
निरास्यत दशास्यस्तच्छक्रास्त्रेणाजयन्नृपः॥ ९८॥
ततः शतसहस्रेण रामः प्रौर्णोन्निशाचरम्।
बाणानामक्षिणोद्धुर्य्यान् सारथिञ्चादुनोद्द्रुतम्॥ ९९॥
अदृश्यन्तानिमित्तानि प्राह्वलत् क्षितिमण्डलम्।

सह योद्धुम् असमम् अतुल्यम् अयुक्तमिति निरूपितवतो मघवतः इन्द्रस्य आज्ञया मातलिः सशस्त्रं रथम् अत्युग्रम् आहरत् आनीतवान्॥ ९७॥ ज० म०

भूमिष्ठस्येत्यादि। भूमिस्थितस्य रामस्य रथस्थितेन रावणेन सह युद्धम् असमम् अतुल्यम् अयुक्तमिति विचारयतो मघोन इन्द्रस्य आज्ञया मातलिः तस्य सारथिः सशस्त्रम् अत्युग्रं रथम् आहरत् आनीतवान्। भूमौ तिष्ठतीति ह्रनजनादिति डः, मनीषादित्वात् षत्वम्॥ ९७॥ भ०

सोऽध्यष्ठीयतेत्यादि। स रथी रामेण अध्यष्ठीयत अध्यासितः। कर्म्मणि लङ्। घुमास्थेतीत्त्वं, उपसर्गात् इत्यादिना षत्वम् अड्व्यवायेऽपि। ततोऽनन्तरं दशास्यः पाशुपतम् अस्त्रं निरास्यत क्षिप्तवान्। उपसर्गादस्यत्यूह्योर्वा वचनमिति तङ्। तत् पाशुपतं नृपो रामः शक्रास्त्रेण अजयत् जितवान्॥ ९८॥ ज० म०

सोऽध्यष्ठीयतेत्यादि। स रथो रामेण अधिष्ठितः। कर्म्मणि यक्, दामागैह्यागित्यादिना ङीः, गौक इति षत्वम्। ततो दशास्यः पशुपतिदैवतं शस्त्रं क्षिप्तवान्। शेर्वास्योह इति पक्षे मम्। नृपो रामः तत् पाशुपतशस्त्रं शक्रास्त्रेण जितवान् ॥९८॥भ०

तत इत्यादि। ततोऽनन्तरं रामः निशाचरं बाणानां शतसहस्रेण लक्षेण प्रौर्णोत् छादितवान्। गुणोऽपृक्त इति गुणः। द्रुतं धुर्य्यान् अश्वान्। धुरो यड्ढाविति यत्। अक्षिणोत् हतवान् सारथिं च अदुनोत् उपतापितवान्॥ ९९॥ ज० म०

तत इत्यादि। तदनन्तरं रामो बाणानां शतसहस्रेण लक्षेण निशाचरं रावणं प्रौर्णोत् आच्छादितवान्। ऊर्णु ल ञ आच्छादने। घ्यामिति गुणः। द्रुतं धुर्य्यान् रथाश्वान् अक्षिणोत् हिंसितवान्। क्षणक्षिण दु ञ् वधे। धुरं वहतीति ढघेकादिति यः, र्व्वनच्तयोत्युक्तेन दीर्घः। सारथिञ्च पीड़ितवान्॥ ९९॥ भ०

अदृश्यन्तेत्यादि। रावणस्य अनिमित्तानि अदृश्यन्त दृष्टानि। कर्म्मणि लङ्। क्षितिमण्डलं प्राह्वलत् चलितम्। ह्वल चलने। रावणस्य अनिमित्तानि दृष्ट्वा ब्रह्मदत्त-

रावणः प्राहिणोच्छूलं शक्तिश्चैन्द्रीं महीपतिः ॥ १०० ॥
ताभ्यामन्योऽन्यमासाद्य समवाप्यत संशमः ।
लक्षेण पत्रिणां रक्षः क्रुद्धो रामस्य राक्षसः ॥ १०१ ॥
अस्तृणादधिकं रामस्ततोऽदेवत शायकैः ।
अक्लाम्यद्रावणस्तस्य सूतो रथमनाशयत् ॥ १०२ ॥

शूलं प्राहिणोत् क्षिप्तवान् । महीपतिः स रामः ऐन्द्रीं शक्तिं प्राहिणोत् । हि गतौ, स्वादिः ॥ १०० ॥ ज० म०

अदृश्यन्तेत्यादि । रावणेन अनिमित्तानि दुर्निमित्तानि दृष्टानि । कर्म्मणि यक् । क्षितिमण्डलं प्राह्वलत् चचाल । ह्वल-ह्मल चाले । रावणः शूलं प्राहिणोत् क्षिप्तवान् । महीपती राम ऐन्द्रीं शक्तिं प्राहिणोत् । हि न वर्द्धने गतौ ॥ १०० ॥ भ०

ताभ्यामित्यादि । ताभ्यां शूलशक्तिभ्याम् अन्योऽन्यम् आसाद्य संश्लिष्य संशमः संशमनं, घञि नोदात्तेति वृद्धिप्रतिषेधः । समवाप्यत प्राप्तः । कर्म्मणि लङ् । अनन्तरं क्रुद्धो राक्षसः पत्रिणां शराणां शतसहस्रेण लक्षेण रामस्य वक्षः अस्तृणादिति वक्ष्यमाणेन सम्बन्धः । छादितवान् । प्वादीनां ह्रस्वः ॥ १०१ ॥ ज० म०

ताभ्यामित्यादि । शूलशक्तिभ्याम् अन्योऽन्यम् आसाद्य आश्लिष्य संशमः क्षयः प्राप्तः । कर्म्मणि यक् । संशमनं संशमः ; घञि जनबधः सेम इति ह्रस्वः । ततो रावणः क्रोधात् पक्षिणां बाणानां लक्षेण रामस्य वक्षो हृदयम् अस्तृणादित्युत्तरश्लोकेनान्वयः । स्तृ ञ गि च्छादने । प्वादेः स्नौ ने इति स्वः ॥ १०१ ॥ भ०

अस्तृणादित्यादि । ततोऽनन्तरं रामो राक्षसात् अधिकम् अदेवत क्रीड़ितवान् । तेवृ-देवृ देवन इति भ्वादावनुदात्तेत् । स तथा रामेण आहतो रावणः अक्लाम्यत् ग्लानिम् उपगतः । तस्य तथाभूतस्य रावणस्य सूतः सारथिः स्वामिजीवितेच्छया रथम् अनाशयत् दूरम् अपनीतवान् ॥ १०२ ॥ ज० म०

अस्तृणादित्यादि । ततो रामो रावणसायकाधिकसायकैः अदेवत क्रीड़ितवान् । देवृ ङ देवने । रामेण हतो रावणोऽक्लाम्यत् । क्लमुर ञि भिर्म्लानौ । तस्य तादृशस्य रावणस्य सूतः सारथी रथम् अनाशयत् स्वामिजीवनेच्छया दूरम् उपनीतवान् । नश् ल य ू नाशे, ञिः ॥ १०२ ॥ भ०

राक्षसोऽतर्जयत् सूतं पुनश्चाढौकयद्रथम्।
निरास्येतामुभौ बाणानुभौ धुर्य्यानविध्यताम्॥ १०३॥
उभावक्रन्ततां केतूनव्यथेतामुभौ न तौ।
अदीप्येतामुभौ धृष्णू प्रायुञ्जाताञ्च नैपुणम्॥ १०४॥
उभौ मायां व्यतायेतां वीरौ नाश्राम्यतामुभौ।
मण्डलानि विचित्राणि चिप्रमाक्रामतामुभौ॥ १०५॥

राक्षस इत्यादि। राक्षसो रावणः सूतम् अतर्जयत् भर्त्सितवान्। हा पाप! किं शत्रुसमीपात् रथं पराङ्मुखयसि? इति। इत्थं सन्तर्जितः सूतः पुनरपि रथम् अढौकयत् ढौकितवान्, रामसमीपम् इत्यर्थात्। उभौ रामरावणौ बाणान् निरास्येतां चिप्तवन्तौ। अस्यत्युह्योर्वेति तङ्। धुर्य्यान् अश्वान् अविध्यतां ताड़ितवन्तौ॥ १०३॥ ज० म०

राक्षस इत्यादि। रावणः सूतं तर्जितवान्, रथापसारणेन लज्जोपादानात्। तर्ज क ङ् तर्ज भर्त्सने। चुरादित्वात् आत्मनेपदित्वं, चुर्थौ ञिर्वेति ञेः, पाक्षिकत्वात् तदभावपक्षे ङनुबन्धादात्मनेपदं, कानुबन्धान्नित्यञन्ततेति चेत्? क्वचिदात्मनेपदिनोऽपि परस्मैपदित्वम्—"परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनम्" इत्यादि प्रयोगदर्शनात्, भौवादिकात् प्रेरणआवर्थासङ्गतिः, कर्म्मकर्तृत्वविवक्षया पुनः प्रेरणे ञिरिति केचित्। पुनश्च रथम् अढौकयत् रामान्तिकं प्रापितवान्। ढौक तौक तिक्व ङ् गत्याम्। प्रेरणे ञिः। उभौ रामरावणौ बाणान् चिप्तवन्तौ। गेर्वाऽस्योह इति मम्। ततो धुर्य्यान् अश्वान् अविध्यताम्॥ १०३॥ भ०

उभावित्यादि। तौ उभौ रामरावणौ केतून् ध्वजान् अक्रन्ततां छिन्नवन्तौ, तौ उभौ नाव्यथेतां न व्यथितवन्तौ, उभौ अदीप्येतां शोभितवन्तौ। धृष्णू च प्रगल्भौ नैपुणं कौशलं प्रायुञ्जातां प्रयुक्तवन्तौ॥ १०४॥ ज० म०

उभावित्यादि। तत उभौ रामरावणौ केतून् ध्वजान् अक्रन्तताम्। कृतो श प च्छिदि। तौ उभौ न व्यथेतां न भीतौ। व्यथ ष म ङ् दुःखे चाले भये। उभौ अदीप्येतां शोभितवन्तौ। दीपि ङ्य ऋ दीपने। धृष्णू प्रगल्भौ नैपुणं युद्धकौशलं प्रयुक्तवन्तौ। युञिर्धौ ञ च युतौ। युजिर उद्गाच इति मं, निपुणाद्भावे विकारसङ्गेति ष्णः॥१०४॥भ०

उभौ मायामित्यादि। तौ उभौ मायां व्यतायेतां विस्तारितवन्तौ। ताय् सन्तान-

न चोभावप्यलच्येतां यन्तारावाहतामुभौ ।
स्यन्दनौ समपृच्येतामुभयोर्दीप्तवाजिनौ ॥ १०६ ॥
ततो मायामयान्मूर्ध्नो राचसोऽप्रथयद्रणे ।
रामेणैकशतं तेषां प्राव्रश्च्यत शिलीमुखैः ॥ १०७ ॥

---

पालनयोः, भ्वादौ । उभौ वीरौ नाश्राम्यतां न श्रान्तौ युध्यमानौ च । तौ उभौ मण्डलानि विचित्राणि गतिवैचित्र्यात् चिप्रम् आक्रामतां भ्रान्तौ । वा भ्राशेति श्यप् ॥ १०५ ॥ ज० म०

उभौ मायामित्यादि । उभौ मायां व्यतायेतां विस्तारितवन्तौ । तायृ ङ पालन-सन्तत्योः । नाश्राम्यतां न श्रान्तौ, यतो वीरौ । युध्यमानौ उभौ विचित्राणि मण्डलानि चिप्रम् आक्रामतां भ्रान्तौ । क्रमः पेऽपि र्घः ॥ १०५ ॥ भ०

न चेत्यादि । तौ उभौ न अप्यलच्येतां प्रेचकैर्न ज्ञातौ—अयं रामः अयञ्च रावण इति । कर्म्मणि लङ् । यन्तारौ सूतौ, कर्म्मपदम् एतत्, उभौ परस्परस्य आहतवन्तौ । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । स्यन्दनौ रथौ उभयोः राम-रावणयोः दीप्तवाजिनौ चामरादिमण्डनात् । दीप्ता उज्ज्वला वाजिनो ययोः तयोः स्यन्दनौ समपृच्येतां संपृक्तौ । पृची सम्पर्के । कर्म्मणि लङ् ॥१०६॥ ज०म०

न चेत्यादि । तौ उभौ न चालच्येतां प्रेचकैर्न दृष्टौ । लच क ञ दर्शनेऽङ्के । कर्म्मणि यक् । तौ उभौ यन्तारौ सारथी सकर्मकत्वान्न मं, हन्तेरनिम्त्वात् वन-तनाद्यनिमामिति नलोपः । उभयोः तयोः स्यन्द्रनौ संपृक्तौ । पृच घी सम्पर्के । कर्म्मणि कर्म्मकर्त्तरि वा यक् । चामरादिना दीप्ता वाजिनोऽश्वाः ययोः स्यन्द-नयोः ॥ १०६ ॥ भ०

तत इत्यादि । ततोऽनन्तरं राचसः मायामयान् मायास्वभावान् मूर्ध्नः शिरांसि अप्रथयत् प्रदर्शितवान् । प्रथ प्रख्याने इति घटादौ । तेषाञ्च शिरसाम् एकशतम् एकाधिकं शतं रामेण शिलीमुखैः शरैः प्राव्रश्च्यत छिन्नम् । कर्म्मणि लङ् ॥ १०७ ॥ ज० म०

तत इत्यादि । तदनन्तरं रावणो मायामयान् मायास्वभावान् मूर्ध्नः शिरांसि अप्रथयत् विस्तारितवान्, स्वाभाविकमस्तकानां रचार्थं वहिर्वर्त्तीनि अन्यानि शिरांसि कृतवानिति भावः । प्रथ ष म ङ् ख्यातौ । घटादित्वात् ह्रस्वः । मयट् तद्रूपे । तेषां शिरसाम् एकाधिकं शतं रामेण प्राव्रश्च्यत छिन्नम् । कर्म्मणि यक् ॥ १०७ ॥ भ०

समक्षुभन्नुदन्वन्तः प्राकम्पन्त महीभृतः।
सन्त्रासमबिभः शक्रः प्रैङ्खच्च क्षुभिता क्षितिः॥ १०८॥
ततो मातलिना शस्त्रमस्मार्य्यत महीपतिः।
बधाय रावणस्योग्रं स्वयम्भूर्यदकल्पयत्॥ १०९॥
नभस्वान् यस्य वाजेषु फले तिग्मांशुपावकौ।
गुरुत्वं मेरुसङ्काशं देहः सूक्ष्मो वियन्मयः॥ ११०॥

समक्षुभन्नित्यादि। छिन्नानाञ्च पततां क्षोभात् उदन्वन्तः सागराः समक्षुभन् सञ्चलिताः। क्षुभ सञ्चलने इति क्र्यादौ। महीभृतः प्राकम्पन्त कम्पिताः। शक्र इन्द्रः सन्त्रासम् अबिभः भृतवान्—पततां शिरसां पुनःपुनः उदयात् मायया विमोह्यायं रामम् अजैषीत् इति। बिभर्त्तेः श्लौ द्विर्वचनं, भृञामित् धातोर्गुणः, पररूपत्वमिति लोपविसर्जनीयौ। प्रैङ्खत् क्षुभितश्च स शक्रः। उखेत्यादौ इखिरिति पठ्यते। क्षितिश्च क्षुभिता चलिता॥ १०८॥ ज० म०

समक्षुभन्नित्यादि। छिन्नानां मूर्द्ध्नां पतनात् उदन्वन्तः समुद्राः संक्षोभिताः। क्षुभ्य न च, चकारात् सञ्चलं। मनीषादित्वान्न णभावः। पर्वताः कम्पिताः। शक्रः सन्त्रासं बभार, खड्गेनापि छिन्नानां शिरसाम् उत्क्षेपणात्। भृ टु डु ञ भृतिपुष्ट्योः। श्लादौ रे द्विः। पृभार्दर्डिः, यघूङ इति गुणः, हसाङ्गामिति दिपो लोपः। मस्तकभरात् प्रक्षुभिता क्षितिः प्रैङ्खत् कम्पिता। इखि ईखि गतौ। शक्रः प्रैङ्खत्। क्षितिः प्रक्षुभिता इत्यन्ये॥ १०८॥ भ०

तत इत्यादि। रावणस्य बधाय स्वयम्भूः यत् अकल्पयत् कल्पितवान्। क्लपेर्णौ गणः, क्लपे रो लः। तत् अस्त्रं मातलिना अस्मार्य्यत स्मारितम्। स्मरतेर्ण्यन्तात् कर्म्मणि लङ्। मित्त्वाद् ह्रस्वत्वम्। महीपतेरित्यधीगर्थेति षष्ठी॥ १०९॥ ज०म०

तत इत्यादि। तदनन्तरं रावणस्य बधाय स्वयम्भूः ब्रह्मा यत् उग्रं शस्त्रम् अकल्पयत्, तत् शस्त्रं मातलिना महीपतिः रामोऽस्मार्य्यत स्मारितः। स्मृ स्मृतौ, णन्तात् कर्म्मणि यक्। महीपतेरिति पाठे—भावे यक्, कर्म्मणि सम्बन्धविवक्षया वा षष्ठी॥ १०९॥ भ०

कीदृशं तदित्याह—

नभस्वानित्यादि। यस्य शस्त्रस्य वाजेषु नभस्वान् वायुः सन्निहित इत्यर्थात्, फले तिग्मांशुः आदित्यः पावकश्च यस्य, गुरुत्वं मेरुवत् मेरोरिव दृढत्वं मेरुसङ्काशम्

राजितं गारुड़ैः पक्षैर्विश्वेषां धाम तेजसाम् ।
स्मृतं तद्रावणं भित्त्वा सुघोरं भुव्यशाययत् ॥ १११ ॥

आबध्नन् कपिवदनानि सम्प्रसादं
प्राशंसत् सुरसमितिर्नृपं जितारिम् ।
अन्येषां विगतपरिप्लवा दिगन्ता
पौलस्त्योऽजुषत शुचं विपन्नबन्धुः ॥ ११२ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्विलसितो नाम
सप्तदशः सर्गः ।

---

इति पाठान्तरम् । तत्र मेरुस्थगौरवसदृशम् इत्यर्थः । सूक्ष्मो देहो दिव्यचक्षुर्गम्यः, वियन्मय आकाशस्वभावः ॥ ११० ॥ ज० म०

नभस्वानित्यादि । यस्य अस्त्रस्य वाजेषु पक्षेषु नभस्वान् वायुः सन्निहित इत्यर्थात्, यस्य फलेऽग्रे तिग्मांशुपावकौ सूर्य्योऽग्निश्च, यस्य गुरुत्वं मेरुवत् मेरोरिव । मेरुसङ्काशमिति पाठे—मेरोः यद् गुरुत्वं तत्तुल्यम् इत्यर्थः । यस्य देहः सूक्ष्मः दिव्यदृष्टिदृश्यः अथच वियन्मय आकाशस्वभावः । स्मृतमिति वक्ष्यमाणेनान्वयः ॥११०॥ भ०

राजितमित्यादि । गारुड़ैः पक्षैः राजितं शोभितं, तेजसां विश्वेषाम् अनेकप्रकाराणां धाम स्थानं, तत् अस्त्रं रामेण स्मृतं स्मृतिम् आगत्य सुघोरं रावणं भित्त्वा भुवि अशाययत् शायितवत्, रावणस्य उदरं भित्त्वा भूमौ पातितवत् इत्यर्थः ॥ १११ ॥ ज० म०

राजितमित्यादि । गरुड़सम्बन्धिभिः पक्षैः राजितं दीप्तं, विश्वेषां तेजसां धाम स्थानं, तत् अस्त्रं रामेण स्मृतं सुघोरम् अतिभीषणं रावणं हत्वा भुवि अशाययत् पातयामास इत्यर्थः । शो य निशाने । जि: प्रेरणे । शाच्छासाह्वेति यन् ॥१११॥ भ०

आबध्नन्नित्यादि । तस्मिन् हते कपिवदनानि कर्तृभूतानि तोषात् सम्प्रसादम् आबध्नन् सेवितवन्ति । सुरसमितिः सुरसमूहः नृपं जितारिं प्राशंसत् स्तुतवती । अन्येषां मुनिजनानां दिगन्ताः रावणबधात् विगतपरिप्लवा निरुपद्रवा जाता इत्यर्थात् । पौलस्त्यो विभीषणः विपन्नबन्धुः हतभ्रातृकः शुचं शोकम् अजुषत सेवितवान् । जुषिस्तुदादावनुदात्तेत् ॥ ११२ ॥ ज० म०

इति भट्टिकाव्यटीकायां तिङ्काण्डे लङ्विलसितश्चतुर्थः परिच्छेदः ।
काव्यस्य रावणबधो नाम सप्तदशः सर्गः ।

# अष्टादशः सर्गः ।

—०*०—

व्यश्नुते स्म ततः शोको नाभिसम्बन्धसम्भवः ।
विभीषणमसावुच्चै रोदिति स्म दशाननम् ॥ १ ॥
भूमौ शेते दशग्रीवो महार्हशयनोचितः ।
नेक्षते विह्वलं माञ्च न मे वाचं प्रयच्छति ॥ २ ॥

---

आवव्रन्नित्यादि । तस्मिन् हते सति, कपीनां वदनानि सम्प्रसादं प्रसन्नताम् आवव्रन्तुः । सम्प्रकाशमिति क्वचित् पाठः ; सम्प्रहासमिति केचित् । सुरसमितिः देवानां सभा जितारिं नृपं प्राशंसत् । अन्येषां जनानां दिगन्ता रावणवधात् विगतपरिप्लवा निरुपद्रवा अभवन् । पौलस्त्यो विभीषणः विपन्नबन्धुः हतभ्रातृकः शुचं शोकं जुषते स्म सेवितवान् । श ङी जि जुष मुदि सेवे । प्रहर्षिणी छन्दः । लक्षणं यथा—त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ॥ ११२ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां
मुग्धबोधिन्यां भट्टिटीकायां रावणवधो नाम सप्तदशः सर्गः ।

———

इतः प्रभृति लटमधिकृत्य लड्विलसितमाह । तत्र वर्त्तमाने लट्, ततोऽन्यत्रापि दर्शयिष्यति—

व्यश्नुत इत्यादि । ततो वधात् अनन्तरं शोको विभीषणं व्यश्नुते स्म व्याप्तवान् । लट् स्म इति भूतानद्यतनपरोक्षे लट् । नाभिसम्बन्धेन एकोदरसम्बन्धेन सम्भवो यस्य शोकस्य, असौ प्रवृद्धशोको विभीषणः उच्चैः महता शब्देन दशाननं नामग्राहं रोदिति स्म रुदितवान् ॥ १ ॥

अथ कौमधिकृत्याह । अस्याः परमते लड़िति संज्ञा ।

व्यश्नुते इत्यादि । ततो रावणवधानन्तरं शोको विभीषणं व्यश्नुते स्म व्याप्तवान् । अशू ङ न व्याप्तिसंहत्योः । कौ स्मेनातीत इति भूते कौ । कीदृशः शोकः ?—नाभिसम्बन्धेन गोत्रसम्बन्धेन सम्भवः उत्पत्तिः यस्य । असौ शोकार्त्तो विभीषण उच्चैः महाशब्देन दशाननं रोदिति स्म । रु घिर रुद रोदे । पूर्ववद्भूते कौ । रुदादेरीऽय इतीम् ॥१॥भ०

विपाकोऽयं दशग्रीव ! संदृष्टोऽनागतो मया ।
त्वं तेनाभिहितः पथ्यं किं कोपं न नियच्छसि ॥ ३ ॥
भजन्ति विपदस्तूर्णमतिक्रामन्ति सम्पदः ।
तान् मदान्नावतिष्ठन्ते ये मते न्यायवादिनाम् ॥ ४ ॥

तदेव दर्शयन्नाह

भूमावित्यादि। महार्हशयने उचितो यः स भूमौ शेते। शोकात् विह्वलश्च मां नेक्षते। मे वाचं प्रतिवचनं न प्रयच्छति न ददाति। दाण दाने। पा-घ्रेत्यादिना यच्छादेशः ॥ २ ॥ ज० म०

भूमावित्यादि। दिव्यशय्यास्थायी दशग्रीवो भूमौ शेते। शी ङ् ल ञि स्वप्ने। भवदभूतभव्ये इति वर्त्तमाने क्तो। शीङो रे गुः। विह्वलं शोकव्याकुलं मां न ईक्षते न पश्यति। ईक्ष ङ् दर्शने। मह्यं वाचं न प्रयच्छति न ददाति। दाण दाने। स्था-दाण-पेति यच्छादेशः ॥ २ ॥ भ०

विपाक इत्यादि। हे दशग्रीव ! अयं विपाको मरणलक्षणं फलम् अनागतो भविष्यन् एव मया संदृष्टः सम्यक् उपलब्धः; इदानीं पश्यसि, तेन कारणेन योऽभिहितोऽसि सीतां मुञ्चेति, अतः किमिति कोपं न नियच्छसि नापनयसि ? नास्त्येव मम दोषः। निपूर्वो यमिरपनयने वर्त्तते ॥ ३ ॥ ज० म०

विपाक इत्यादि। हे दशग्रीव ! अयम् अनागतो भविष्यन् विपाको मरणरूपो मया संदृष्टः सम्यक् उपलब्धः। तेन कारणेन पथ्यं सीतां मुञ्चेति हितं त्वम् अभिहित उक्तोऽसि। लोपोऽत्यसोरिति सलोपः। इदानीं मृत एव किं कोपं न नियच्छसि नापनयसि ? मम दोषो नास्त्येव। यमौ ङ विरतौ, निपूर्वोऽपनयने। स्था-दाणपेति यच्छादेशः ॥ ३ ॥ भ०

भजन्तीत्यादि। अन्यच्च, ये स्वामिनो मदात् अवलेपात् न्यायवादिनां माल्यवत्-प्रभृतीनां मते नावतिष्ठन्ते। समवप्रविभ्यः स्थ इति तङ्। ते पुरुषाः विपदस्तूर्णं भजन्ति अवसादं सेवन्ते। भजिरुभयपदी। सम्पदश्च अतिक्रामन्ति त्यजन्ति॥४॥ ज०म०

भजन्तीत्यादि। ये स्वामिनो न्यायवादिनां मते मदात् अहङ्कारात् नावतिष्ठन्ते, प्रतिज्ञानिर्णयेत्यादिना अवपूर्वात् स्थो मम्। तान् विपदस्तूर्णं भजन्ति सेवन्ते। भजै ञो भागसेवयोः। सम्पदः तान् अतिक्रामन्ति त्यजन्ति। क्रमः पेऽपि र्घः।

अपथ्यमायतौ लोभादामनन्त्यनुजीविनः।
प्रियं शृणोति यस्तेभ्यस्तमृच्छन्ति न सम्पदः॥ ५॥
प्राज्ञास्तेजस्विनः सम्यक् पश्यन्ति च वदन्ति च।
तेऽवज्ञाता महाराज! क्लाम्यन्ति विरमन्ति च॥ ६॥
लेढि भेषजवन्नित्यं यः पथ्यानि कटून्यपि।
तदर्थं सेवते चाप्तान् कदाचिन्न स सीदति॥ ७॥

---

न्यायवादिनां माल्यवदादीनां यन्मतं त्वया नादृतं, तेन इयं विपत्, सम्पच्च गतेति भावः॥ ४॥ भ०

अपथ्यमित्यादि। प्रायेण हि अनुजीविनः प्रहस्तादिसदृशाः आयतौ आगामिनि काले वृद्धावस्थायाम् अपथ्यं अनिष्टं फलं लोभेन तृष्णया वा प्रियम् आमनन्ति उपदिशन्ति साध्विदमिति। तेभ्यो यः शृणोति तं सम्पदो न ऋच्छन्ति। अर्त्तेः ऋच्छादेशः॥ ५॥ ज० म०

अपथ्यमित्यादि। अनुजीविनः प्रहस्तादिसदृशाः प्रायेण लोभात् तृष्णया आयतौ उत्तरकाले अपथ्यम् अनिष्टफलम् आपाततः सुखश्राव्यत्वात् प्रियं भर्तृषु आमनन्ति उपदिशन्ति। म्ना अभ्यासे। स्था-दानेति मनादेशः। यः तेभ्यः प्रियं साधूक्तमिदमिति शृणोति। श्रौः शुर्वे रे जिश्च। सम्पदः तं न ऋच्छन्ति न गच्छन्ति। ऋ प्रापणे च। पूर्ववत् ऋच्छादेशः, ऋच्छधातो रूपं वा॥ ५॥ भ०

प्राज्ञा इत्यादि। ये प्राज्ञाः तेजस्विनः अस्मद्विधाः सम्यक् अविपरीतं शास्त्रचक्षुषा पश्यन्ति वदन्ति च सम्यक्। हे महाराज! अवज्ञाताः ते तिरस्कृताः क्लाम्यन्ति खिद्यन्ते, विरमन्ति च विमुखा भवन्ति। तदवज्ञानफलमेतदिति भावः॥ ६॥ ज० म०

प्राज्ञा इत्यादि। ये प्राज्ञाः तेजस्विनोऽस्मद्विधाः सम्यक् अविपरीतं शास्त्रदृष्ट्या पश्यन्ति। दृशः पूर्ववत् पश्यादेशः। ज्ञातिहितार्थं वदन्ति च। हे महाराज! ते युष्मद्विधाः वक्तारोऽस्मद्विधाः त्वया अवज्ञाताः तिरस्कृताः सन्तः क्लामन्ति खिद्यन्ते। क्लम यु भिर् ञि म्लानौ। यन्वोशमादीति र्घः। विरमन्ति मौनम् आचरन्ति च। घे पं परानुक्लप्रतीत्यादिना विपूर्वरमः पम्। तदवज्ञाफलमिदमिति भावः॥ ६॥ भ०

लेढीत्यादि। यस्तु स्वामी आदौ कटून्यपि पथ्यानि परिणामसुखानि भेषजवत्

सर्वस्य जायते मानः स्वहिताच्च प्रमाद्यति ।
वृद्धौ भजति चापथ्यं नरो येन विनश्यति ॥ ८ ॥
द्वेष्टि प्रायो गुणिभ्योऽपि न च स्निह्यति कस्यचित् ।
वैरायते महद्भिश्च शीयते वृद्धिमानपि ॥ ९ ॥

औषधमिव नित्यं लेढि श्रोत्रेन्द्रियेण अनुभवति, तदर्थं च आप्तान् अविसंवादिनः सेवते, स कदाचिन्न अवसीदति—इह च परत्र च अवसन्नो न भवति ॥७॥ ज०म०

लेढीत्यादि । यः स्वामी पथ्यानि सर्वदा हितानि कटून्यपि लेढि अभिलष्यति भेषजवत् तिक्तौषधमिव पिबति । लिह्‌ौ ल ञ आस्वादे । हो ढः, ढभात् तथोर्धः, ष्टुभिरिति ढः । तदर्थं पथ्यार्थम् आप्तान् अविसंवादिनः सेवते, स कदाचित् न अवसीदति न अवसन्नो भवति । स्यादानेति सदेः सीद ॥ ७ ॥ भ०

सर्वस्येत्यादि । प्रायेण वृद्धौ सत्यां सर्वो जनो मानी सञ्जायते, वृद्धेश्चित्तविकारित्वात्, स्वहिताच्च प्रमाद्यति हिताद्भ्रष्टो भवति, अपथ्यञ्च भजति सेवते ; येन अपथ्येन सेवितेन नरो विनश्यति ॥ ८ ॥ ज० म०

सर्वस्येत्यादि । प्रायेण वृद्धौ सत्यां सर्वस्य जनस्य मानो गर्वो जायते । जनी म य ङ् जनने । स्वहितात् प्रमाद्यति वृद्ध्या प्रमत्तमतित्वात्, स्वीयम् उपकारं न जानाति । मदेः श्मादित्वात् दीर्घः । अपथ्यञ्च भजति सेवते । येन अपथ्येन विनाशं गच्छति । णश लृ यू नाशे ॥ ८ ॥ भ०

द्वेष्टीत्यादि । यत् यस्मात् वृद्धौ सत्यां प्रायेण गुणिभ्यः वृद्धसेवित्वादिभ्यः प्रभुः द्वेष्टि । क्रुध-द्रुहेति सम्प्रदानसंज्ञा । न च कस्यचित् स्निह्यति प्रीयते, महद्भिश्च सह वैरायते वैरं करोति । शब्दवैरेति क्यङ् । यस्मात् कारणात् वृद्धिमानपि शीयते विनश्यति । शदेः शिति शीयादेशः । शदेः शित इति तङ् ॥ ९ ॥ ज० म०

द्वेष्टीत्यादि । यः प्रभुः प्रायो गुणिभ्यो वृद्धपण्डितादिभ्यो द्वेष्टि । ल द्विषौ ञ् वैरे । यस्मै दित्सेत्यादिना चतुर्थी । न च न कस्यचित् स्निह्यति प्रीयते, सम्बन्धविवक्षया षष्ठी । ष्णिह य ल ञि प्रीतौ । महद्भिः सह वैरायते वैरं करोति । शब्द-सुख-कष्टादेरिति ङ्यः । तस्मात् कारणात् वृद्धियुक्तोऽपि शीयते विनश्यति । स्यादानेति शदेः शीयादेशः ॥ ९ ॥ भ०

समाश्वसिमि केनाहं कथं प्राणिमि दुर्गतः।
लोकत्रयपतिर्भ्राता यस्य मे स्वपिति क्षितौ ॥ १० ॥
अहो जागर्त्ति कृच्छ्रेषु दैवं यद्बलभिज्जितः।
लुठ्यन्ति भूमौ क्लियन्ति बान्धवा मे स्वपन्ति च ॥११॥
शिवाः कुष्णन्ति मांसानि भूमिः पिबति शोणितम्।
दशग्रीवसनाभीनां समदन्त्यामिषं खगाः ॥ १२ ॥

समाश्वसिमीत्यादि। यस्य मम भ्राता लोकत्रयपतिः क्षितौ स्वपिति, सोऽहं केन उपायेन समाश्वसिमि शोकं त्यजामि? रुदादिभ्य इतीट्। दुर्गतो दुःखितः कथं केन प्रकारेण प्राणिमि जीवामि? ॥ १० ॥ ज० म०

समाश्वसिमीत्यादि। केन प्रकारेण अहं समाश्वसिमि? रुदादित्वात् रुदादिभ्यः सार्वधातुके इतीट् इति इम्। दुःखी अहं केन प्रकारेण प्राणिमि जीवामि? पूर्ववदिम्, प्राग्वन्नो णः इत्यादिना णत्वम्। यस्य मे मम त्रैलोक्यस्य शासिता भ्राता रावणः क्षितौ स्वपिति शेते। पूर्ववदिम्। सोऽहमिति योज्यम् ॥ १० ॥ भ०

अहो इत्यादि। अहो इति विस्मये। कृच्छ्रेषु दुःखेषु दैवं जागर्त्ति अवहितम् इत्यर्थः, नित्यं दुःखोत्पादनात्। यत् यस्मात् कारणात् अपरमपि मम बान्धवाः बलभिज्जितः। बलं भिनत्तीति बलभित् इन्द्रः तं जयन्तीति क्विप्। भूमौ लुठ्यन्ति। लुटलुठ लोठने दिवादौ। तथा क्लियन्ति पूतीभवन्ति; स्वपन्ति दीर्घनिद्रां प्रवेशिताः ॥ ११ ॥ ज० म०

अहो इत्यादि। अहो आश्चर्य्यम्। कृच्छ्रेषु कष्टेषु विषयेषु दैवं किं जागर्त्ति चेष्टते? सदा देहिनां कष्टं जनयति इत्यर्थः। यत् यस्मात्, बलभिज्जितः शक्रपराभवकारिणोऽपि मम बान्धवा रावणादयो भूमौ लुठ्यन्ति लुठिता भवन्ति, क्लियन्ति क्लेदयुक्ता भवन्ति, स्वपन्ति च महानिद्रां प्रविशन्ति इत्यर्थः ॥ ११ ॥ भ०

शिवा इत्यादि। दशग्रीवसनाभीनां दशग्रीवेण तुल्यगोत्राणाम्। ज्योतिर्जनपदेत्यादिना समानस्य सभावः। मांसानि शिवाः शृगालाः कुष्णन्ति। कुष निष्कर्षे। भूमिः शोणितं पिबति, खगाः पक्षिणः मांसशोणितव्यतिरिक्तं वसामज्जादिकं समदन्ति भक्षयन्ति ॥ १२ ॥ ज० म०

शिवा इत्यादि। दशग्रीवसनाभीनां रावणसजातीयानां मांसानि शिवाः

येन पूतक्रतोर्मूर्ध्नि स्थीयते स्म महाहवे ।
तस्यापीन्द्रजितो दैवात् ध्वाङ्क्षैः शिरसि लीयते ॥ १३ ॥
स्वर्भानुर्भास्करं ग्रस्तं निष्ठीवति कृताह्निकः ।
अभ्युपैति पुनर्भूतिं रामग्रस्तो न कश्चन ॥ १४ ॥
त्वमजानन्निदं राजन्नीडिषे स्म स्वविक्रमम् ।
दातुं नेच्छसि सीतां स्म विषयाणाञ्च नेशिषे ॥ १५ ॥

शृगालाः कुष्णन्ति । भूमिः पृथिवी च तेषां रक्तं पिबति । खगाः पक्षिणः तेषाम् आमिषं मांसशोणितातिरिक्तं वसामज्जादिकं समदन्ति भक्षयन्ति । कुष निष्कर्षे ॥ १२ ॥ भ०

येनेत्यादि । येन इन्द्रजिता पूतक्रतोः इन्द्रस्य महाहवे महासमरे मूर्ध्नि अग्रतः स्थीयते स्म स्थितम् । अपरोक्षे चेति लट्, विभीषणस्य ह्यपरोक्षभूतानद्यतनत्वादर्थस्य । तस्यापि इन्द्रजितः शिरसि दैवात् रामात् हेतुभूतात् ध्वाङ्क्षैः काकैः लीयते । वर्त्तमान एव भावे लट् ॥ १३ ॥ ज० म०

येनेत्यादि । येन इन्द्रजिता पूतक्रतोः इन्द्रस्य महाहवे महायुद्धे मूर्ध्नि अग्रतः स्थीयते स्म । दामागेहागिति ङीः । तस्यापि इन्द्रजितः शिरसि मस्तके दैवात् ध्वाङ्क्षैः काकैः लीयते । ली ङ् य ओ श्लिषि । उभयत्र भावे की ॥ १३ ॥ भ०

स्वर्भानुरित्यादि । स्वर्भानुः राहुः भास्करं ग्रस्तं ग्रासीकृतं कृताह्निकः कृताहारः निष्ठीवति स्वमुखात् निरस्यति । रामग्रस्तो रामाभिभूतः पुनर्भूतिं नाभ्युपैति कश्चन, कश्चिदपि भूतिं न प्राप्नोति । एत्येधत्यूट्स्विति वृद्धिः । अभ्यमितीति पाठान्तरं, तदयुक्तं छान्दसत्वात् ; यतः अमो बहुलं छन्दसि हलादावनन्तरे सार्वधातुके तुरुस्तुशम्यमः सार्वधातुक इतीट् ॥ १४ ॥ ज० म०

स्वर्भानुरित्यादि । स्वर्भानुः राहुः ग्रस्तं ग्रासीकृतं सूर्य्यं कृताह्निकः कृताहारः सन् निष्ठीवति निरस्यति । ष्ठिवुक्लमाचम इति दीर्घः । भ्वाद्यादिणा इत्यादौ ष्ठिववर्जनान्नादौ षस्य सत्वम् । रामेण ग्रस्तोऽभिभूतः कश्चित् पुनर्भूतिं वृद्धिं नाभ्युपैति न प्राप्नोति । गेधौरनेधिणा इति इणवर्जनात् आदिगेचोरिति त्रिः ॥ १४ ॥ भ०

त्वमित्यादि । हे राजन् ! त्वम् इदं यथोदितम् अजानन् स्वविक्रमम् ईडिषे स्म

मन्त्रे जातु वदन्त्यज्ञास्त्वं तानप्यनुमन्यसे।
कथं नाम भवांस्तत्र नावैति हितमात्मनः॥ १६॥
अपृष्टोनु ब्रवीति त्वां मन्त्रे मातामहो हितम्।
न करोमीति पौलस्त्य ! तदा मोहात्त्वमुक्तवान्॥ १७॥

स्तुतवानसि। ईड्जनोर्ध्वे चेति, चकारात् सेशब्दस्यापीट्। एवञ्च कृत्वा'त्वं सीतां दातुं नेच्छसि स्म नेष्टवानसि। विषयाणां शब्दादीनां नेशिषे स्म विषयान् न जितवानसि। ईशः से इतीट्। अधीगर्थेति कर्म्मणि षष्ठी। सर्व्वत्रापरोचे चेति लट्॥१५॥ ज०म०

त्वमित्यादि। हे राजन्! त्वम् इदं यथोक्तम् अजानन् अहमेव शूर इति स्वविक्रमम् ईडिषे स्म स्तुतवान्। ईड ल ङ स्तुतौ। सध्वोः रत्येमिति इम्। स्वपराक्रमाहङ्कारात् सीतां रामाय दातुम् अर्पयितुं नेच्छसि स्म।: इषु श वाञ्छे। स्था-दानेत्यादिना इच्छादेशः। विषयाणाञ्च न ईशिषे स्म न यथेष्टं विनियुङ्क्षे। सध्वो रत्येतीम्। कर्म्मणि षष्ठी॥ १५॥ भ०

मन्त्र इत्यादि। मन्त्रविषये अपण्डिताः मूर्खाः सन्तः जातु कदाचिदपि वदन्ति गर्हितमेतत्, तानपि त्वम् अनुमन्यसे अनुमतवान्। इदमपि अतिगर्हितम्। गर्हायां लडपिजात्वोरिति अपिजात्वोरुपपदयोः कालसामान्ये लट्। कथम् एतत् न्याय्यम्?—यत् तत्र भवान् रावणः विद्वानपि न आत्मनो हितम् अवैति न विदितवान्। विभाषा कथमि लिङ् चेति, कथंशब्द उपपदे, चकारात् गर्हायां लट्। तत्र भवानिति इतराभ्योऽपि दृश्यन्त इति भवदादियोगे प्रथमान्तात् त्रल्प्रत्ययः॥ १६॥ ज० म०

मन्त्र इत्यादि। मन्त्रणाविषये अज्ञा मूर्खा जातु कदाचित् वदन्ति वक्ष्यन्ति। गर्हितम् एतत् अनधिकारात्। तानपि त्वम् अनुमन्यसे अनुमतवानसि। एतदपि गर्हितम्। जात्वपिभ्यां सदा चेप इति कौ। अज्ञा अपि वदन्तु; तत्र भवान् रावणो विद्वानपि आत्मनो हितं नावैति:नालोचितवान्। कथं नाम कथम् एतत्? अन्याय्यम्। कथमा स्थी च वेति कौ॥ १६॥ भ०

अपृष्ट इत्यादि। किम् अस्मिन् काले युज्यत इति मन्त्रे मातामहो माल्यवान् अपृष्टः सन् हितं नु ब्रवीति। हे पौलस्त्य! त्वं पुनः हितम् अकार्षीः इति माल्यवता पृष्टम्। तदा तस्मिन् काले न करोमीति मोहात् अज्ञानात् उक्तवान्।

त्वं स्म वेत्थ महाराज ! यत् स्माह न विभीषणः ।
पुरा त्यजसि यत् क्रुद्धो मां निराकृत्य संसदि ॥ १८ ॥
हविर्जक्षिति निःशङ्को मखेषु मघवानसौ ।
प्रवाति स्वेच्छया वायुरुद्गच्छति च भास्करः ॥ १९ ॥

---

अत्र नुशब्दे नशब्दे चोपपदे ननौ पृष्टप्रतिवचन इति भूते धात्वर्थे नन्वोर्विभाषेति विभाषया लट् ॥ १७ ॥ ज० म०

अपृष्ट इत्यादि । त्वया मन्त्रविषये प्रश्ने अपृष्टोऽपि मातामहो माल्यवान् स्वयम् उपेत्य त्वां हितं ब्रवीति उक्तवान् । अभिधानाद्वर्त्तमानसामीप्ये कौ । पिङ्गलस्येम् ब्रुव इति ईम् । हे पौलस्त्य ! रावण ! न करोमीति मोहात् अज्ञानात् त्वम् उक्तवान् ॥ १७ ॥ भ०

त्वमित्यादि । हे महाराज ! विभीषणो यदाह स्म उक्तवान्, तत्त्वं न वेत्थ स्म न विदितवानसि ; किम् एतेन हितम् उक्तं न वेति । उभयत्र अपरोक्षे चेति लट् । तत्र पूर्वस्मिन् विदो लटो वेति सिपस्थादेशः । अपरस्य ब्रुवः पञ्चानामिति तिपो णलादेशः । तत् यस्मात् त्वं क्रुद्धः सन्, मां संसदि सभायां निराकृत्य पादप्रहारेण पुरा पूर्वं त्यजसि त्यक्तवानसि । पुरि लुङ् चास्म इति चकाराल्लट् ॥ १८ ॥ ज० म०

त्वमित्यादि । हे महाराज ! विभीषणो यदाह स्म उक्तवान् । पञ्चतिप् पञ्चणल् वाहश्चेति ब्रुवस्तिपः स्थाने पञ्चे आहादेशश्च । तत्त्वं न वेत्थ न ज्ञातवान्, श्रुतवान् इत्यर्थः । वेत्तेः कौपं ठौपं वेति सिपस्थप् । यत् यस्मात् क्रुद्धः सन् त्वं सदसि सभायां मां पादप्रहारेण निराकृत्य पुरा पूर्वं त्यजसि त्यक्तवान् । यावत्पुराभ्यां भव्ये इत्यत्र चकाराध्याहारात् कौ स्मेनातीत इत्यस्मात् अतीत इत्यनुवर्त्तत इति बोध्यम् ; तेनात्र पुरायोगे भूते कौ ॥ १८ ॥ भ०

हविरित्यादि । असौ मघवान् इन्द्रः मखेषु यज्ञेषु हविः आज्यादिकम् अधुना जक्षिति भक्षयति । रुदादिभ्य इतीट् । वायुश्च स्वेच्छया प्रवाति गच्छति । पवतीति पाठान्तरं, पवित्रीकरोति इत्यर्थः । भास्करश्च यथेष्टम् उद्गच्छति उदेति ॥ १९ ॥ ज० म०

हविरित्यादि । असौ मघवान् इन्द्रो निर्भयः सन् मखेषु यज्ञेषु हविः हवनीयं घृतादिकं जक्षिति भक्षयति । रुदादित्वादिम् । वायुः स्वेच्छया वाति गच्छति ।

धनानामीशते यक्षा यमो दाम्यति राक्षसान्।
तनोति वरुणः पाशमिन्दुनोदीयतेऽधुना ॥ २० ॥
शाम्यत्यृतुसमाहारस्तपस्यन्ति वनौकसः।
नो नमस्यन्ति ते बन्धून् वरिवस्यन्ति नामराः ॥ २१ ॥
श्रीर्न हृष्यति लङ्कायां विरज्यन्ति समृद्धयः।
न वेद तन्न यस्यास्ति मृते त्वयि विपर्य्ययः ॥ २२ ॥

भास्करः स्वेच्छया उद्गच्छति। "न वेद तं न यस्यास्ति मृते त्वयि विपर्य्ययः" इति चतुर्थश्लोकेनान्वयः। त्वयि सति एवं नासीदिति भावः ॥ १९ ॥ भ०

धनानामित्यादि। यक्षेन्द्रो धनानाम् ईष्टे स्वयमेव धनस्येशो भवति। ईश ऐश्वर्य्ये। यमोऽपि राक्षसान् दाम्यति वशीकरोति। वरुणः पाशं तनोति विस्तारयति। इन्दुनोदीयतेऽधुना। भावे लट्। अधुना इति सर्व्वत्र योज्यम्; अणुनेति पाठान्तरम् असम्पूर्णत्वात् ॥ २० ॥ ज० म०

धनानामित्यादि। यक्षा धनानाम् ईशते पालयन्ति। ईश लङ् ऐश्वर्य्ये। मान्तोऽदनतः। यमो राक्षसान् दाम्यति वशीकरोति। शमादित्वात् दीर्घः। वरुणः पाशं तनोति विस्तारयति। अधुना इदानीं शशिना उदीयते। भावे क्तो। अधुनेति सर्व्वत्र योज्यम्। पूर्व्वमेवं नासीदिति भावः ॥ २० ॥ भ०

शाम्यतीत्यादि। ऋतूनां समाहारः सम्भूयावस्थानं शाम्यति अपैति। वनौकसो वनवासिनो मुनयः तपस्यन्ति तपश्चरन्ति। कर्म्मणो रोमन्थेत्यादिना क्यङ्, तपसः परस्मैपदञ्च। ते त्वद्बन्धून् अमरा नो नमस्यन्ति न प्रणमन्ति, न वरिवस्यन्ति नाप्रतिषेधेन परिचरन्ति। नमोवरिवश्चित्रङः क्यच् ॥ २१ ॥ ज० म०

शाम्यतीत्यादि। ऋतूनां वसन्तादीनां समाहारः सम्भूयावस्थानं शाम्यति। वनौकसो मुनयः तपस्यन्ति तपः कुर्व्वन्ति। नमस्तपोवरिव इति क्यः। अमराः तव बन्धून् नो नमस्यन्ति न प्रणमन्ति। पूर्व्ववत् क्यः। न च वरिवस्यन्ति न परिचरन्ति तव बन्धूनां परिचर्य्यां न कुर्व्वन्ति इत्यर्थः। पूर्व्ववत् क्यः ॥ २१ ॥ भ०

श्रीरित्यादि। लङ्कायां पुर्य्याम् अधुना श्रीर्न कुष्यति। कुष रोषे। कुषिरञ्जोः

शचीं संस्वजते शक्रो गोपायति हरिः श्रियम्।
देववन्द्यः प्रमोदन्ते चित्रीयन्ते घनोदयाः॥ २३॥
बिभ्रत्यस्त्राणि सामर्षा रणकाम्यन्ति चामराः।
चकासति च मांसादां तथा रन्ध्रेषु जाग्रति॥ २४॥

प्राचां श्यन् परस्मैपदञ्च। समृद्धयश्च विरज्यन्ति अपयान्ति। सर्वथा तद्वस्तु न वेद न वेद्मि। विदो लटो वेति मिपो णल्। यस्य त्वयि मृते न विपर्य्ययः नान्यथा-भावः॥ २२॥ ज० म०

श्रीरित्यादि। लङ्कायां श्रीर्न हृष्यति न हृष्टा भवति। समृद्धयो विभूतयो विरज्यन्ति विरक्ता भवन्ति। रन्ज्य रन्ज मौ ञ् रागे। दिवादित्वात् श्यन्। अपिद्‌रस्य ङित्त्वात् हसुङ्लोपोऽणौ। त्वयि मृते सति यस्य विपर्य्ययो नास्ति यः त्वत्कृतां मर्य्यादां न लङ्घते, तम् अहं न वेद्मि। वेत्तेः कोपमिति मिपो णप्॥ २२॥ भ०

शक्तिमित्यादि। शक्रः शक्तिं प्रहरणम् अधुना संस्वजते गृह्णाति। दन्शषन्ज-स्वनजां शपीत्यनुनासिकलोपः। हरिः विष्णुः श्रियं गोपायति आत्मन्येव कृत्वा रक्षति। देववन्द्यः प्रमोदन्ते हृष्यन्ति। घनोदयाः चित्रीयन्ते नानारूपेण अद्भुतायन्ते। मृते त्वयि इति सर्व्वत्र योज्यम्॥ २३॥ ज० म०

अन्यमपि विपर्य्ययमाह

शचीमित्यादि। शक्रः शचीं संस्वजते सम्यक् आलिङ्गति, चिरं तदकरणात् त्वद्-वधहर्षाच्च। स्वन्जौ ञि ङ आलिङ्गे। षन्जदन्शस्वन्जोऽपि नलोपः। हरिः विष्णुः श्रियं लक्ष्मीं गोपायति रक्षति, एतावन्तं कालं त्वद्गृहे सम्पद्रूपा आसीत् इति भावः। कम ऋतो गुपू इति आयः। देवानां वन्द्यो हठस्त्रियः प्रमोदन्ते प्रहृष्यन्ति। घनोदया मेघाः चित्रीयन्ते नानाविधा भवन्ति। चित्र ङ आश्चर्य्ये कण्ड्वादिः॥ २३॥ भ०

बिभ्रतीत्यादि। अमराः सामर्षाः सकोपाः अस्त्राणि बिभ्रति धारयन्ति। रण-काम्यन्ति च आत्मनो रणमिच्छन्ति। आत्मेच्छायां काम्यच्। चकासति च दीप्यन्ते च। जक्षित्यादित्वादभ्यस्तसंज्ञायां झेरदादेशः। तथा मांसादां राक्षसानाम्। अदो-ऽनन्न इति विच्। रन्ध्रेषु व्यसनेषु जाग्रति सावधाना भवन्ति वा॥ २४॥ ज० म०

बिभ्रतीत्यादि। अमराः सामर्षाः सकोपाः सन्तः अस्त्राणि बिभ्रति धारयन्ति। ञि डु भृञ् भृतिपुष्योः। ह्वादौ रे द्विः। पृभादेर्ङिः खे रे। आत्मनो रणमिच्छन्ति च।

चङ्क्रूर्यन्तेऽभितो लङ्कामस्मांश्चाप्यतिशेरते।
भूमयन्ति स्वसामर्थ्यं कीर्त्तिं नः कनयन्ति च ॥ २५ ॥
दिशो व्यश्नुवते दृप्तास्त्वत्कृतां जहति स्थितिम्।
क्षोदयन्ति च नः क्षुद्राः हसन्तस्त्वां विपन्नतम् ॥ २६ ॥

ले: काम्यक् स्वेच्छायाम्। चकासति दीप्यन्ते। चकासृ च् लु दीप्तौ। अन्तीऽद् द्वे:। तथा मांसादां राक्षसानां रन्ध्रेषु जाग्रति सावधाना भवन्ति। जागृ च् लु जागरे ॥२४॥ भ०

चङ्क्रूर्यन्त इत्यादि। लङ्काम् अभित: वाह्यतोऽभ्यन्तरतश्च। पर्य्यभिभ्यां सर्वो-भयार्थे तसि:। चङ्क्रूर्य्यन्ते गर्हितं चरन्ति। लुपसदेति भावगर्हायां यङ्, चरफलोश्चेत्य-भ्यासस्य लुक्, उत्परस्यात इत्युत्त्वम्। अतिशेरते च अतिशयिता भवन्ति च। स्वसामर्थ्यं भूमयन्ति वर्द्धयन्ति। बहूनां भाव इति पृथ्वादिभ्य इमनिच्, बहोर्लोपो भू च बहोरिति बहोर्भूयादेश:, इमनिजादिर्लोपश्च। भूमानं कुर्वन्तीति णिचि णाविष्ठवत् प्रातिपदिकस्येतीष्ठवद्भावात् टिर्लोपयणादिपरलोप: चिण्मतोर्लुगर्थमिति वचनात् वा टिलोप:। किञ्च नोऽस्माकं कीर्त्तिं कनयन्ति अल्पां कुर्वन्ति अमरा इति योज्यम्। अल्पां कुर्वन्तीति णिचि णाविष्ठवद्भावाद्युवाल्पयो: कनन्यतरस्यामिति कनादेश: ॥ २५ ॥ ज० म०

चङ्क्रूर्यन्त इत्यादि। अमरा इत्यनुषज्यते। लङ्काम् अभित: उभयतो वाह्यतोऽभ्य-न्तरतश्च चङ्क्रूर्य्यन्ते गर्हितं चरन्ति परिभ्रमन्ति इत्यर्थ:। गत्यर्थाद् गॄ लुप सद चरेति यङ्, चरफलोरश्चोङ इति खेर्नुण् उङ उकारश्च। लङ्कामिति धिक्समयेति द्वी। तथा अस्मानपि अतिशेरते अतिक्रामन्ति। शिङो रे णु:, मान्तो रम्, मान्तोऽदनत:। स्वसामर्थ्यं स्वशक्तिं भूमयन्ति वर्द्धयन्ति। बहोर्भावे भूमादेश:, भूयोभूमन्भूयिष्ठा इति निपातनात् बहुशब्दस्य इमन्प्रत्ययान्तस्य रूपम्। तं करोतीति ले: क्वत्याख्याने ञि:, ओमंयेति डित्, टेर्लोप:। भावयन्तीति क्वचित् पाठ:। तदा बहुशब्दस्य ओ भ्यादेश: स्यादिति पर:। स्वमते भूधातोर्ञ्यन्तस्य रूपम्। एतावन्तं कालमनवस्थितत्वात् उज्ज्वलयन्ति इत्यर्थ:। भूययन्तीति क्वचित् पाठ:। तदा बहुशब्दस्य ओ भूयादेशो वेति पर:। स्वमते बहुशब्दस्य ईयसौ भूय इति रूपम्। तस्मात् ञि:। बहुतरं कुर्वन्तीत्यर्थ:। तथा नोऽस्माकं कीर्त्तिं कनयन्ति अल्पयन्ति। अल्पशब्दात् पूर्ववत् ञि:। युवाल्पौ कन् वेति कनादेश: ॥ २५ ॥ भ०

दिश इत्यादि। दृप्ता: सन्त: दिशो व्यश्नुवते व्याप्नुवन्ति स्थितिव्यवस्थां त्वत्-

**श्रमं श्रमं नभस्वन्तः पुनन्ति परितो जगत् ।**
**उज्जिहीषे महाराज ! त्वं प्रशान्तो न किं पुनः ॥ २७ ॥**
**प्रोर्णोति शोकश्चित्तं मे सत्त्वं संशाम्यतीव मे ।**
**प्रमार्ष्टि दुःखमालोकं मुष्णाम्यूर्ज्जं त्वया विना ॥ २८ ॥**

कृताम् । प्रत्ययोत्तरपदयोश्चेति त्वदादेशः । जहति त्यजन्ति, विपन्नतश्च त्वां हसन्ति । क्षुद्राः अल्पकायाः चोदयन्तीव क्षुद्रमिव आचक्षत इति । भुवने यो हि न्यक्कृतत्रिलोकः, स कथं क्षुद्र उच्यते ? स्थूलदूरेत्यादिना णौ यणादिपरलोपः, पूर्वस्य च गुणः ॥ २६ ॥ ज० म०

दिश इत्यादि । अत्रापि अमरा इत्यनुषज्यते । इमाः सन्तो दिशो व्यश्नुवते व्याप्नुवन्ति । अश् ङ् व्याप्तिसंहत्योः । श्रुध्वोरित्युव् । मान्तोऽदनतः । त्वया कृतां स्थितिं व्यवस्थां जहति त्यजन्ति । ओ हाक् लि त्यागे । श्नाभ्योरातोऽलोप्यः । अन्तोऽदहे: । क्षुद्रा अल्पा अपि विपन्नतं त्वां हसन्तो नोऽस्मान् क्षुद्रान् कुर्व्वन्ति आचक्षते वा । क्षुद्रशब्दात् पूर्ववत् ञिः, वाढान्तिकेत्यादिना चोदादेशः । इमा दुष्टलोकाः, क्षुद्राः क्षुद्रलोका इत्यन्ये ॥ २६ ॥ भ०

श्रममित्यादि । नभस्वन्तो वायवः श्रमं श्रमं श्रान्त्वा श्रान्त्वा । आभीक्ष्ण्ये णमुल्, नोदात्तेति वृद्धिप्रतिषेधः, आभीक्ष्ण्ये द्वे भवतः । परितः सर्वतो जगत् पुनन्ति पवित्रयन्ति, प्रशान्ता अपि पुनर्भूत्वा जगत् पुनन्ति । हे महाराज ! त्वं पुनः प्रशान्तोऽपि किं न उज्जिहीषे न उत्तिष्ठसि ? ओ हाङ् गतौ, अभ्यासस्य भृञामित्, ई हल्यघोः इति ईत्वम् ॥ २७ ॥ ज० म०

श्रममित्यादि । नभस्वन्तो वायवः श्रमं श्रमं श्रान्त्वा श्रान्त्वा परितः सर्वतो जगत् पुनन्ति पवित्रयन्ति । पू ञ गि च, चकारात् शोधे । प्वादेः श्नौ ने इति ह्रस्वः । चणम् वाभीक्ष्ण्ये इति श्रमेश्चणम् । आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धम् । हे महाराज ! त्वं पुनः प्रशान्तः सन् किं न उज्जिहीषे न उद्गच्छसि ? ओ हा ङ् लि गतौ । श्नाभ्योरालोप्य इति ईः ॥ २७ ॥ भ०

प्रोर्णोतीत्यादि । हे महाराज ! त्वया विना शोको मम चित्तं प्रोर्णोति आच्छादयति । सत्त्वम् अवष्टम्भः संशाम्यतीव अपगच्छतीव, मां त्यजति इत्यर्थः । दुःखञ्च कर्तृ आलोकं प्रकाशं प्रमार्ष्टि अपनयति । अतः त्वया विना ऊर्जं बलं मुष्णामि अलसो भवामि इत्यर्थः ॥ २८ ॥ ज० म०

के न संविद्रते नान्यस्त्वत्तो बान्धववत्सलः।
विरौमि शून्ये प्रोर्णौमि कथं मन्युसमुद्भवम्॥ २९॥
रोदिम्यनाथमात्मानं बन्धुना रहितस्त्वया।
प्रमाणं नोपकाराणामवगच्छामि यस्य ते॥ ३०॥
नेदानीं शक्रयत्नेन्द्रौ बिभीतो न दरिद्रितः।

प्रोर्णोतीत्यादि। हे महाराज! शोको मे मम चित्तं प्रोर्णोति। वोर्णोः पिङ्क्ते णुरिति पक्षे णुः, प्रोर्णौतीति पाठे—गुणाभावपक्षे रपिङ्क्त्युत इति त्रिः। सत्त्वं शाम्यतीव शान्तमिव। दुःखं कर्तृ आलोकम् आलोचनं प्रमार्ष्टि निरोधयति। सजोऽकङ्ग्तौति त्रिः। ऊर्जम् ऊर्जस्वलत्वं मुञ्चामि। मुच् ऌ श प औ मोक्षे। नुम्। न त्वया विना इति सर्वत्र योज्यम्॥ २८॥ भ०

के नेत्यादि। त्वत्तोऽन्यो बान्धववत्सलो न, इति के न संविद्रते न जानते? समो गमिति तङ्। वेत्तेर्विभाषेति रुट्। बन्धुः एव बान्धवः, प्रज्ञादित्वादण्। अतोऽहं शून्ये बन्धुविरहिते विरौमि फूत्करोमि। कथं केन प्रकारेण मन्युसमुद्भवं शोकोत्थादं प्रोर्णौमि आच्छादयामि?॥ २९॥ ज० म०

के नेत्यादि। त्वत्तोऽन्यो बान्धवेषु वत्सलः स्नेहवान् नास्ति, इति के जना न जानन्ति? समो गमृच्छेत्यादिना वेत्तेर्मम्। मान्तो रम् विदस्तु वेति पाक्षिको रम्। अहं शून्ये बन्धुरहितप्रदेशे विरौमि शब्दं करोमि। रु ल ध्वनौ। रपिङ्क्त्युत इति त्रिः। कथं केन प्रकारेण मन्युसमुद्भवं शोकोन्मादं प्रर्णौमि आच्छादयामि? वोर्णोः पिदित्यस्याप्रवृत्तिपक्षे पूर्ववद् त्रिः॥ २९॥ भ०

रोदिमीत्यादि। त्वया बन्धुना रहितत्वात् अनाथोऽस्मीति आत्मानमेव रोदिमि। यस्य ते उपकाराणां प्रमाणम् इयत्तां न अवगच्छामि॥ ३०॥ ज० म०

रोदिमीत्यादि। बन्धुना त्वया रहितोऽहम्। अत एव नाथहीनम् आत्मानं रोदिमि, त्वाम् उपहत्य सशब्दक्रन्दनेन युक्तं करोमि। रुदादिभ्य इति इम्। यस्य ते तव उपकाराणां प्रमाणं संख्यां न अवगच्छामि न जानामि, अपरिमितत्वात् संख्यां कर्तुं न शक्नोमि इत्यर्थः॥ ३०॥ भ०

नेदानीमित्यादि। इदानीं त्वयि एवंभूते शक्रयत्नेन्द्रौ न बिभीतः न भयं कुरुतः। भियोऽन्यतरस्यामिति इत्वाभावपक्षे रूपम्। न दरिद्रितः दरिद्रौ न भवतः,

न गर्वं जहितो दृप्तो न क्लिश्नीतो दशानन ! ॥ ३१ ॥
त्वयापि नाम रहिताः कार्य्याणि तनुमो वयम् ।
कुर्म्मश्च जीविते बुद्धिं धिक् तृष्णां कृतनाशिनीम् ॥ ३२ ॥
तृणेह्मि देहमात्मीयं त्वं वाचं न ददासि चेत् ।
द्राघयन्ति हि मे शोकं स्मर्य्यमाणा गुणास्तव ॥ ३३ ॥
उन्मुच्य स्रजमात्मीयां मां स्रजयति को हसन् ।

इद्दरिद्रस्येति हलादौ क्ङिति सार्वधातुके इत् । दृप्तौ न गर्वं जहितः परित्यजतः । जहातेश्चेतीत्त्वम् । न क्लिश्नीतः क्लेशं नानुभवतः । ई हल्यघोरितीत्त्वम् ॥ ३१ ॥ ज० म०

नेदानीमित्यादि । हे दशानन ! इदानीं त्वयि मृते इन्द्रकुबेरौ न भयं कुरुतः । ञि भी लि भीत्याम् । न दरिद्रितः न दीनतां गच्छतः । दरिद्रा च्लु दुर्गत्याम् । दरिद्री ङिर्ईत्तेऽणाविति ङिः । दृप्तौ सन्तौ नाहङ्कारं परित्यजतः । ओ हा क् लि त्यागे, पूर्वेण पचे ङिः । न क्लेशम् अनुभवतः । क्लिश् ग विबाधे । श्नाघोरिति ईः ॥३१॥ भ०

त्वयेत्यादि । यद्वयं त्वया विना कार्य्याणि राज्याङ्गानि तनुमः प्रसारयिष्यामः, जीविते च बुद्धिं कुर्म्मः, तदिमां कार्य्ये जीविते च तृष्णां कृतनाशिनीं धिक् । गर्हायां लडपिजात्वोरिति भविष्यति लट् ॥ ३२ ॥ ज० म०

त्वयापीत्यादि । त्वयापि रहिताः त्यक्ता वयं कार्य्याणि तनुमः विस्तारयामः । तन दु ञ विस्तृतौ । नूपोऽस्यस्येत्यस्याप्रवृत्तिपचे रूपम् । नाम प्रकाशे । तथा जीविते बुद्धिम् आशां कुर्मः । कुरुब्लोपोऽम्वेः इति श्नपी लोपः । व्यंनच्तयीत्यादौ कुर्वर्जनान्न दीर्घः । तस्मात् कृतनाशिनीं कृतघ्नीं तृष्णां धिगस्तु ॥ ३२ ॥ भ०

तृणेह्मीत्यादि । मम प्रतिवचनं न ददासि चेत् यदि त्वं, तर्हि आत्मीयं देहं तृणेह्मि हन्मि । तृण्ह इम् । हि यस्मात् स्मर्य्यमाणाः तव गुणाः मम शोकं द्राघयन्ति दीर्घं कुर्वन्ति । णाविष्ठवद्भावेन प्रियस्थिरेत्यादिना दीर्घशब्दस्य द्राघादेशः ॥३३॥ज०म०

तृणेह्मीत्यादि । चेत् यदि त्वं वाचं न ददासि, तदा आत्मीयं देहं तृणेह्मि छिनद्मि । तृह ध तृन्भू श हिंसे । तृह इण् पिङ्क्ते । हि यस्मात् तव गुणाः स्मर्य्यमाणाः सन्तः नोऽस्माकं शोकान् द्राघयन्ति दीर्घान् कुर्वन्ति । दीर्घशब्दात् ञिः कृत्याख्याने इति ञिः । वाढ़ान्तिकेति द्राघादेशः ॥ ३३ ॥ भ०

उन्मुच्येत्यादि । आत्मीयां स्रजं मालाम् उन्मुच्य अपनीय देहात् हसन् परि-

नेदयत्यासनं को मे कर्हि मे वदति प्रियम्॥ ३४ ॥
न गच्छामि पुरा लङ्कामायुर्यावद्दधाम्यहम्।
कदा भवति मे प्रीतिस्त्वां पश्यामि न चेदहम्॥ ३५ ॥
ऊर्द्ध्वं म्रियै मुहूर्त्ताद्धि विह्वलः हतबान्धवः।
मन्त्रे स्म हितमाख्यामि न करोमि तवाप्रियम्॥ ३६ ॥

---

तोषात् को मां स्रजयति स्रग्विणं करोति? णाविष्ठवद्भावात् विन्मतोर्लुगिति विनो लुक्। प्रकृत्यैकाजिति टिलोपाभावः। को वा मम आसनं नेदयति अन्तिकं करोति? अत्रापि णौ इष्ठवद्भावादन्तिकबाढयोर्नेदसाधाविति अन्तिकशब्दस्य नेदादेशः। कर्हि कदा को मे प्रियं वदति वदिष्यति? विभाषा कदाकर्ह्योरिति भविष्यति लट्॥ ३४ ॥ ज० म०

उन्मुच्येत्यादि। आत्मीयां मालाम् उन्मुच्य अपनीय परितोषात् हसन् को मां स्रजयति स्रग्विणं करोति? पूर्ववत् णिः। लुङ्महद्विनामिति विन्लुक्। को वा मे मम आसनं नेदयति अन्तिकं करोति? पूर्ववत् णिः, नेदादेशश्च। कर्हि कदा को वा मह्यं प्रियं वदति वदिष्यति? त्वया विना इति शेषः। कदाकर्हिभ्यां वेति भव्ये को॥ ३४ ॥ भ०

न गच्छामीत्यादि। यावत् अहम् आयुः दधामि धारयिष्यामि। यावत् पुरा निपातयोर्लडिति भविष्यति लट्। पुराशब्दोऽत्र भविष्यदासत्तिमाह प्रीतेर्हि लङ्काप्रवेशः इति दर्शयन्नाह—चेत् यदि अहं त्वां जीवन्तं न पश्यामि। वर्त्तमाने लट्। कदा कस्मिन् काले मे मम प्रीतिः भवति भविष्यति। विभाषा कदाकर्ह्यो-रिति भविष्यति लट्॥ ३५ ॥ ज० म०

न गच्छामीत्यादि। यावत् अहम् आयुः दधामि धारयिष्यामि, तावत् पुरा लङ्कां न गच्छामि। यावत्पुराभ्यां भव्य इति को। पुराशब्दो भविष्यदासत्तिमाह, लङ्काप्रवेशस्य कारणं प्रीतिः, तत्र उच्यते।—कदा मम प्रीतिः भवति। कदाकर्हिभ्यां वेति को। चेत् यदि त्वां जीवन्तं न पश्यामि॥ ३५ ॥ भ०

ऊर्द्ध्वमित्यादि। मुहूर्त्तात् ऊर्द्ध्वम् उपरि अहं म्रियै मरिष्यामि, हतबान्धव-त्वात् विह्वलः। स च अनेन मरणस्य निमित्तभूतं प्राप्तकालं लोडर्थं दर्शयति, तेन लिङ्गोर्द्ध्वमौहूर्त्तिक इति लोडर्थलक्षणे चेति भविष्यति लट्; लोडर्थश्च प्रैषादिकः। म्रियतेर्लुङ्लिङोश्चेति, चकारात् शितश्चात्मनेपदम्। अन्यच्च मन्त्रे मन्त्रविषये हितम्

अन्तःपुराणि पौलस्त्यं पौराश्च भृशदुःखिताः ।
संश्रुत्य स्माभिधावन्ति हतं रामेण संयुगे ॥३७॥
मूर्द्धजान् स्म विलुञ्चन्ति क्रोशन्ति स्मातिविह्वलम् ।
स्माधीयन्त्युपकाराणां मुहुर्भर्त्तुः प्रमन्यु च ॥ ३८ ॥
रावणस्य नमन्ति स्म पौराः साश्रा रुदन्ति च ।

---

आख्यामि स्म आख्यातवान् अहम् । अपरोक्षे चेति लट् । मम अप्रियं मा कार्षीरिति पृष्टः सन्नहं न करोमि तवाप्रियमिति न कृतवानस्मि । नन्वोर्विभाषेति पृष्टप्रतिवचने लट् ॥ ३६ ॥ ज० म०

ऊर्द्धमित्यादि । हतबान्धवत्वात् विह्वलो व्याकुलोऽहं मुहूर्त्तात् ऊर्द्धं म्रिये मरिष्यामि, प्राप्तकालोऽहम् इत्यर्थः । अभिधानाद्वर्त्तमानप्राये क्तौ । मृङ्ष्टौर्द्ध्वम् । मन्त्रविषये हितमाख्यामि स्म उक्तवान् । ख्या ल ख्यातौ कथने । तवाप्रियं न करोमि स्म न कृतवान् । स्मेत्यनुषज्यते, क्तौ स्मेनातीत इति करणाख्याभ्यां भूते क्तौति परः ॥ ३६ ॥ भ०

अन्तःपुराणीत्यादि । अनन्तरं पौलस्त्यं रामेण हतं संश्रुत्य अन्तःपुराणि पौराश्च दुःखिताः अभिधावन्ति स्म ढौकन्ते स्म । लट् स्म इति भूतानद्यतनपरोक्षे लट् ॥ ३७ ॥ ज० म०

अन्तःपुराणीत्यादि । अथ अन्तःपुराणि पौराश्च संयुगे युद्धे रामेण हतं पौलस्त्यं रावणं संश्रुत्य श्रुत्वा अत्यर्थं दुःखिताः सन्तः अभिधावन्ति स्म वेगेन आभिमुख्यं गच्छन्ति स्म ॥ ३७ ॥ भ०

मूर्द्धजानित्यादि । केशान् विलुञ्चन्ति स्म अपनयन्ति स्म, अतिविह्वलम् अतिवैक्लव्यं (गुणप्रधानो निर्देशः) क्रोशन्ति स्म, फूत्कारं कुर्वन्ति स्म, अन्तःपुराणीत्यर्थः । भर्त्तुश्च उपकाराणां मुहुः अधीयन्ति स्म । इक स्मरणे । अधीगर्थेति कर्म्मणि षष्ठी । प्रमन्यु चेति क्रियाविशेषणं, प्रकृष्टशोकमित्यर्थः । प्रमन्यव इति पाठान्तरं, प्रकृष्टशोका इत्यर्थः ॥ ३८ ॥ ज० म०

मूर्द्धजानित्यादि । अन्तःपुराणि पौराश्च इत्यनुषज्यते । मूर्द्धजान् केशान् विलुञ्चन्ति स्म अपनयन्ति स्म । लुञ्चापनयने । अतिव्याकुलाः सन्तः क्रोशन्ति स्म रोदनं कुर्वन्ति स्म । क्रुश औ रोदे हृतौ । भर्त्तुः उपकाराणां मुहुः वारं वारं ध्यायन्ति स्म । कर्म्मणि षष्ठी । पादावित्यध्याहरन्त्यन्ये ॥ ३८ ॥ भ०

भाषते स्म ततो रामो वचः पौलस्त्यमाकुलम्॥ ३९॥
दातुः स्थातुर्द्विषां मूर्ध्नि यष्टुस्तर्पयितुः पितॄन्।
युद्धाभग्नविपन्नस्य किं दशास्यस्य शोचसि॥ ४०॥
बोभवीति न सम्मोहो व्यसने स्म भवादृशाम्।
किं न पश्यसि सर्वोऽयं जनस्त्वामवलम्बते॥ ४१॥

रावणस्येत्यादि। पौराश्च रावणस्य नमन्ति स्म नमस्यन्ति, पादौ इत्यर्थात् तत्सम्बन्धित्वात्। सालाश्च सन्तः रुदन्ति स्म च। ततोऽनन्तरं रामः पौलस्त्यं विभीषणम् आकुलं वचो भाषते स्म उक्तवान्॥ ३९॥ ज० म०

रावणस्येत्यादि। पौरा रावणस्य नमन्ति स्म नमस्यन्ति स्म। कर्मणि षष्ठी, पादौ इत्यध्याहरन्ति अन्ये। ततः सालाः सन्तो रुवन्ति स्म शब्दितवन्तः। रु ल ध्वनौ। ततोऽनन्तरं रामः आकुलं पौलस्त्यं विभीषणं वचो वक्ष्यमाणं भाषते स्म उक्तवान्॥ ३९॥ भ०

दातुरित्यादि। दशास्यो दाता, द्विषां मूर्ध्नि स्थाता, यष्टा यज्ञानां, पितॄन् तर्पयिता। तृप तृप्तौ चुरादिः। युधि देवादीनां संग्रामेऽभग्नः अविपन्नः, तस्य एवंविधस्य किं शोचसि? शोच्यमेव नास्ति। वर्त्तमाने लट्॥ ४०॥ ज०म०

दातुरित्यादि। हे विभीषण! दशास्यस्य किं शोचसि? अस्य शोच्यमेव नास्तीत्यर्थः। कीदृशस्य?—दातुः धनादीनां, द्विषां शत्रूणां मूर्ध्नि स्थातुः, यष्टुः यज्ञानां, पितॄन् तर्पयितुः तर्पणशीलस्य। युधि देवानां संग्रामे अभग्नविपन्नस्य अपलायमृतस्य॥ ४०॥ भ०

बोभवीतीत्यादि। भवादृशां युष्मद्विधानां व्यसनेषु दुःखेषु सम्मोहः अज्ञानं न बोभवीति अत्यर्थं न भवति। यङ्लुकि रूपम्। एवञ्च सति स्वार्थो न हीयते। यतः किं न पश्यसि, अयं सर्वो जनः त्वाम् अवलम्बते? त्वमेव स्वामीति प्रतीच्छते?॥ ४१॥ ज० म०

बोभवीतीत्यादि। भवादृशां भवद्विधानां ज्ञानिनां कृच्छ्रेषु व्यसनेषु अपि सम्मोहोऽज्ञानं न बोभवीति नात्यर्थं भवति। यङो लुकि पिद्वत्स्थेमिति इम्। अयं सर्वो जनो रावणानुगतः त्वाम् अवलम्बते आश्रयति, एतत् किं न पश्यसि?॥ ४१॥ भ०

त्वमर्हसि भ्रातुरनन्तराणि
कर्त्तुं जनस्यास्य च शोकभङ्गम् ।
धुर्य्ये विपन्ने त्वयि राज्यभारो
मज्जत्यनूढः क्षणदाचरेन्द्र ! ॥ ४२ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्विलसितो
नामाष्टादशः सर्गः ।

## एकोनविंशः सर्गः ।

अपमन्युस्ततो वाक्यं पौलस्त्यो राममुक्तवान् ।

---

त्वमर्हसीत्यादि । तस्मात् भ्रातुः अनन्तराणि अग्निसत्कारादीनि कर्त्तुं त्वम् अर्हसि युज्यसे, अस्य च जनस्य शोकभङ्गं शोकापनयनं कर्त्तुञ्च । अन्यथा त्वयि धुर्य्ये धुरं वहति विपन्ने विनष्टे सति हे क्षणदाचरेन्द्र ! राज्यभारो अनूढो अन्यैः अनधिष्ठितः सन् मज्जति अधो याति शत्रुभिः विनश्यति, तस्मात् त्वया समाहितेन राज्यभारो वोढव्य इति ॥ ४२ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लङ्विलसितो
नाम पञ्चमः परिच्छेदः ।

काव्यस्य विभीषणविलापो नाम अष्टादशः सर्गः ।

त्वमर्हसीत्यादि । तस्मात् त्वं भ्रातुः अनन्तराणि अग्निकार्य्यादीनि कर्त्तुम्, अस्य त्वाम् आश्रयतः सर्वस्य जनस्य शोकभङ्गं शोकापनयनञ्च कर्त्तुम् अर्हसि । अन्यथा हे क्षणदाचरेन्द्र ! त्वयि धुर्य्ये धुर्वहे विपन्ने नष्टे सति अयं राज्यभारोऽनूढोऽधृतः सन् मज्जति अधो गच्छति ॥ ४२ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां
मुग्धबोधिन्यां भट्टिटीकायां विभीषणविलापो नाम अष्टादशः सर्गः ।

---

इतः प्रभृति लिङमधिकृत्य विलसितमाह । तत्र विध्यादिषु लिङ्, ततोऽन्यत्रापि दर्शयिष्यति ।

अपमन्युरित्यादि । ततोऽनन्तरं पौलस्त्यो विभीषणः अपगतशोकः अपगतो

अशोच्योऽपि व्रजन्नस्तं सनाभिर्दुनुयान्न किम्॥ १॥
तन्नो देवा विधेयासुर्येन रावणवद् वयम्।
सपत्नांश्चाधिजीयास्म संग्रामे च मृषीमहि॥ २॥
क्रियेरन्न दशास्येन यथाऽन्येनापि नः कुले।
देवद्राञ्चो नराहारा न्यञ्चश्च द्विषतां गणाः॥ ३॥

मन्युः यस्य। प्रादिभ्यो धातुजस्य बहुव्रीहिर्वा चोत्तरपदे लोपश्च। रामं वाक्यम् उक्तवान्। देव! किम् एवम् अभिधत्से अशोच्य इति। यतः सनाभिः सगोत्रोऽस्तं व्रजन् विनाशं गच्छन् अशोच्योऽपि सन् किं न दुनुयात् नियोगेन अवश्यतया किं नोपतापयेत्? निमन्त्रणे नियोगकरणे लिङ्॥ १॥ ज० म०

अथ स्त्रीध्यावधिकृत्योच्यते, तयोः परमते लिङिति संज्ञा।

अपमन्युरित्यादि। ततोऽनन्तरम् अपगतशोकः पौलस्त्यो विभीषणो रामं वाक्यम् उक्तवान्। किं तदित्याह—अशोच्योऽपि सनाभिः सगोत्रः अस्तं विनाशं व्रजन् किं न दुनुयात् अपि तु तापयत्येव। टुदु न अनुतापे। विधिनिमन्त्रणेत्यादिना नियोगकरणे स्त्री॥ १॥ भ०

तन्न इत्यादि। युष्मद्वचनात् आत्मा मया स्थिरीकृतः, किन्तु इदम् आशंसे, तम् उपायं नोऽस्माकं देवा विधेयासुः। घुमास्थेत्यनुवृत्तौ एर्लिङीत्येकारादेशः। येन उपायेन रावणवत् सपत्नान् वयम् अधिजीयास्म। उपसर्गेण धात्वर्थो बलात् अन्यत्र नीयत इति सकर्म्मकता। संग्रामे च मृषीमहि। लिङ्श्चेति लिङः, कित्त्वान्न गुणः, आर्द्धधातुकत्वान्न सलोपः। सर्व्वत्रैवाशिषि लिङ्॥ २॥ ज० म०

तन्न इत्यादि। देवा नोऽस्माकं तद्विधेयासुः कुर्वन्तु। क्याशिषि, दामागैद्दागिति धाञो दासंज्ञत्वात् ङेः। येन रावणवत् सपत्नान् वैरिणो वयम् अधिजीयास्म मारयामः। पूर्ववदाशिषि ढी, घोंऽज्यरे। युद्धे मृषीमहि प्राणान् त्यजामः। अत्राप्याशिषि ढी। इगुङ्कुर्मढीति कित्त्वाद्गुणाभावः। एतेन युष्मद्वचनात् मया स्थिरीकृतोऽन्तरात्मा, किन्तु युष्मत्प्रसादात् एवमेवं भवत्विति भावः॥ २॥ भ०

क्रियेरन्नित्यादि। यथा दशास्येन नराहाराः राक्षसा देवद्राञ्चः देवैः सह अञ्चन्तो गच्छन्तः क्रियेरन् कृताः। विष्वग्देवयोश्चेत्यादिना देवशब्दाकारस्याद्र्यादेशः। द्विषताञ्च गणाः न्यञ्चः नीचैः अञ्चन्तः कृताः तिरस्कृताः, तथा नोऽस्माकं

स एव धारयेत्प्राणानीदृशे बन्धुविप्लवे ।
भवेदाश्वासको यस्य सुहृच्छक्तो भवादृशः ॥ ४ ॥
म्रियेयोर्द्ध्वं मुहूर्त्ताद्धि न स्यास्त्वं यदि मे गतिः ।
आशंसा न हि नः प्रेते जीवेम दशमूर्द्धनि ॥ ५ ॥

कुले अन्येनाधिक्रियेरंश्च । आशंसायां कर्म्मणि लिङ् । क्रुशीरन्निति वा पाठः । आशिषि कर्म्मणि लिङ् ॥ ३ ॥ ज० म०

क्रियेरन्नित्यादि । यथा दशास्येन नराहाराः राक्षसा देवद्राञ्ची देवान् अञ्चन्ती गच्छन्तः कृताः, द्विषतां शत्रूणां गणाश्च न्यञ्ची निकृष्टम् अञ्चन्तो गच्छन्तः कृताः तिरस्कृता इत्यर्थः ; तथा नोऽस्माकं कुलेऽन्येनापि क्रियेरन्, इत्यहमाशंसे । विधिनिमन्त्रणेति आदिशब्दात् परक्रियाशंसायां लो, सम्प्रश्ने वा । कर्म्मणि यक् । ऋद्रिः । देवानञ्चतीति क्विप्, विष्वग्देवस्य टेरिति टेरद्रिः ॥ ३ ॥ भ०

स एवेत्यादि । ईदृशे बन्धुविप्लवे बन्धुविनाशेऽपि स एव प्राणान् धारयेत् नियोगतो बिभृयात् । निमन्त्रणे नियोगकरणे लिङ् । यस्य भवादृशः सुहृत् मित्रं शक्त आश्वासकः सान्त्वयिता भवेत् सम्भाव्येत । सम्भावनायां लिङ् ॥ ४ ॥ ज० म०

स एवेत्यादि । ईदृशे बन्धूनां विप्लवे विनाशे स एव प्राणान् धारयेत्, नियोगतः धारयेत् । विधिनिमन्त्रणेति आदिशब्दात् नियोगकरणे लो । यस्य भवादृशः शक्तः समर्थः सुहृत् मित्रम् आश्वासकः सान्त्वयिता भवेत् सम्भवति । प्रोक्ष्या सम्भावन इति लो ॥ ४ ॥ भ०

म्रियेयेत्यादि । यदि मे मम गतिः शरणं त्वं न स्याः न भवेः । लिङ् । तदा यस्मिन् मुहूर्त्ते रावणोऽपि नष्टः तस्मात् मुहूर्त्तात् ऊर्द्ध्वं म्रियेय नियोगतः प्राप्तकालः प्राणांस्त्यक्तवान् अहम् । अत्र प्राप्तकाले गम्यमाने चोर्द्ध्वं मौहूर्त्तिक इति भूते लिङ् । तत्र हि प्रैषादयोऽनुवर्त्तन्ते । म्रियतेर्लुङ्लिङोश्चेति तङ् । ततः सार्वधातुकत्वात् शः । हि यस्मात् नोऽस्माकं न इयम् आशंसा, यत् दशमूर्द्धनि दशानने प्रेते मृते त्वयि वा शरणे जीवेम प्राणान् धारयिष्याम इति । अत्राशंसावचनस्योपपदत्वात् लिङ् ॥ ५ ॥ ज० म०

म्रियेयोर्द्ध्वमित्यादि । यदि त्वं मे मम गतिः तारको न स्याः न भवेः, तदा यस्मिन् मुहूर्त्ते रावणो मृतः तस्मात् मुहूर्त्तात् ऊर्द्ध्वम् अहं म्रियेय प्राप्तकालः

प्रकुर्य्याम वयं देशे गर्ह्यां तत्र कथं रतिम्।
यत्र विंशतिहस्तस्य न सोदर्य्यस्य सम्भवः॥ ६॥
आमन्त्रयेत तान् प्रह्वान् मन्त्रिणोऽथ विभीषणः।
गच्छेत त्वरितं लङ्कां राजवेश्म विशेत च॥ ७॥
आददीध्वं महार्हाणि तत्र वासांसि सत्वराः।
उद्धुनीयात सत्केतून् निर्हरेताग्र्यचन्दनम्॥ ८॥

सन् प्राणांस्त्यक्तवान् अहम्। विधिनिमन्त्रणेति ली। हि यस्मात् नोऽस्माकम् इयम् आशङ्का इष्टाशंसनं, दशमूर्द्धनि रावणे प्रेते मृते सति वयं न जीवेम प्राणान् न धारयाम इति। गी चेच्छार्थैरिति कामोक्ते ली॥ ५॥ भ०

प्रकुर्य्यामित्यादि। यत्र देशे सोदर्य्यस्य भ्रातुः विंशतिहस्तस्य न सम्भवोऽस्ति तत्र कथं वयं गर्ह्यां निन्द्यां रतिं प्रकुर्य्याम करिष्यामः? नैवेत्यर्थः। अत्र गर्हायामित्यधिकृत्य विभाषा कथमि लिङ् चेति कथमित्युपपदे भविष्यति लिङ्॥ ६॥ ज० म०

प्रकुर्य्यामित्यादि। यत्र देशे सोदर्य्यस्य सहोदरस्य विंशतिहस्तस्य रावणस्य सम्भवो नास्ति दुर्लभत्वात्, तत्र देशे कथं गर्ह्यां निन्द्यां रतिं वयं प्रकुर्य्याम करिष्यामः? नैव इत्यर्थः। कथमा ली च वेति ली॥ ६॥ भ०

आमन्त्रयेतेत्यादि। अथ अनन्तरं विभीषणः सदसि यैः मन्त्रिभिः सह उत्थितः तान् मन्त्रिणः प्रह्वान् आमन्त्रयेत कर्म्मसु नियोगतः संविहितवान् इत्यर्थः। निमन्त्रणे नियोगकरणे लिङ्। तदेव दर्शयति—लङ्कां त्वरितं यूयं गच्छेत यात। गताश्च राजवेश्म विशेत च प्रविशत च। अत्र विधौ प्रेषणे लिङ्। स हि सर्वलकाराणामपवादः॥ ७॥ ज० म०

आमन्त्रयेतेत्यादि। अथ अनन्तरं प्रह्वान् प्रणतान् मन्त्रिणो विभीषण आमन्त्रयेत सम्बोधितवान्। सम्बोधनार्थस्य आमन्त्रणं, विधिनिमन्त्रणेति प्रेषणे ली, अध्येषणे विधौ वा॥ ७॥ भ०

आददीध्वमित्यादि। तत्र राजवेश्मनि वासांसि महार्हाणि महामूल्यानि सत्वरा आददीध्वं गृह्णीत। श्नाभ्यस्तयोरात इत्याकारलोपः। सत्केतून् शोभनध्वजान् उद्धुनीयात ऊर्द्धीकरिष्यथ। प्वादीनां ह्रस्वः, ईहल्यघोः। अग्र्यचन्दनं सच्चन्दनकाष्ठानि निर्हरेत निर्गमयत॥ ८॥ ज० म०

मुञ्चेताकाशधूपांश्च ग्रथ्नीयात स्रजः शुभाः।
आनयेतामितं दारु कर्पूरागुरुकुङ्कुमम्॥ ९॥
उह्येरन् यज्ञपात्राणि क्रियेत च विभावसुः।
भ्रियेत चाज्यमृत्विग्भिः कल्प्येरत च समित्कुशम्॥१०॥
स्नानीयैः स्नापयेताशु रम्यैर्लिम्पेत वर्णकैः।
अलङ्कुर्य्यात रत्नैश्च रावणार्हैर्दशाननम्॥ ११॥

आददीध्वमित्यादि। तत्र राजवेश्मनि स्थितानि महामूल्यानि वासांसि यूयं सत्वराः सन्तः आददीध्वं ग्रहीष्यथ। सत्केतून् शोभनध्वजान् उद्धुनीयात ऊर्द्ध्वं करिष्यथ। धू ञ गि धूञ कम्पे। अग्र्यचन्दनं शोभनचन्दनं निर्हरेत निर्हरिष्यथ॥ ८॥ भ०

मुञ्चेतेत्यादि। धूपघटिकाभिः आकाशधूपांश्च मुञ्चेत प्रवर्त्तयत। स्रजः पुष्पमालाः शुभाः ग्रथ्नीयात गुम्फिष्यथ। श्रन्थग्रन्थ सन्दर्भे इति क्र्यादिः। दारु काष्ठम् अमितं प्रभूतं कर्पूरागुरुकुङ्कुमञ्च आनयेत। सर्वत्र विधौ लिङ्। प्रादिप्रयोगश्च॥ ९॥ ज० म०

मुञ्चेतेत्यादि। यूयम् आकाशधूपान् मुञ्चेत प्रवर्त्तयिष्यथ। मञ्चु गतिपूजनयोः। शुभाः शोभनाः स्रजो माला ग्रथ्नीयात ग्रन्थिष्यथ। ग्रन्थ कि सन्दर्भे। श्नाभ्योरिति ईः। अमितं प्रचुरं दारु काष्ठं कर्पूरादि च आनयेत आनेष्यथ। सर्वत्र विधौ ख्री॥ ९॥ भ०

उह्येरन्नित्यादि। यज्ञपात्राणि स्रुगादीनि उह्येरन् आनीयन्तां, विभावसुश्च अग्निः क्रियेत ऋत्विग्भिः आज्यमपि भ्रियेत। समित्कुशं कल्प्येरत च कल्प्यताम्। सर्वत्र विधौ कर्म्मणि लिङ्॥ १०॥ ज० म०

उह्येरन्नित्यादि। ऋत्विग्भिः एव, मान्यैः यज्ञपात्राणि उह्येरन् आनेष्यन्ते। वहौ ञै प्रापणे। ग्रहस्वप्नाद्योरिति जिः। विभावसुः अग्निः क्रियेत आनेष्यते। आज्यं हविः भ्रियेत् भरिष्यते। समित्कुशं कल्प्येरत कल्पयिष्यते। सर्वत्र कर्म्मणि विधौ ख्री॥ १०॥ भ०

स्नानीयैरित्यादि। यथाशास्त्रविहितञ्च कृत्वा रम्यैः स्नानीयैः दशाननं राक्षसाधिपं स्नापयेत स्नापयिष्यथ। ग्लास्नावनुवमाञ्चेति विकल्पेन मित्त्वम्। तत्र ज्वलह्वलह्मल-

वासयेत सुवासोभ्यां मेध्याभ्यां राक्षसाधिपम्।
ऋत्विक् स्रग्विणमादध्यात् प्राङ्मूर्द्धानं मृगाजिने ॥ १२ ॥
यज्ञपात्राणि गात्रेषु चिनुयाच्च यथाविधि।
जुहुयाच्च हविर्वह्नौ गायेयुः साम सामगाः ॥ १३ ॥
गत्वाथ ते पुरीं लङ्कां कृत्वा सर्वं यथोदितम्।
समीपेऽन्त्याहुतेः स्नाताः प्रोक्तवन्तो विभीषणम् ॥ १४ ॥

---

नमामनुपसर्गादिति वाग्ग्रहणमनुवर्त्तते। वर्णकैः चन्दनादिभिः रम्यैः लिम्पेत विलिप्स्यथ। रत्नैश्च रावणार्हैः नित्यनैमित्तिकैः अलङ्कुर्य्यात अलङ्करिष्यथ ॥ ११ ॥ ज० म०

स्नानीयैरित्यादि। यूयं दशाननं स्नानीयैः स्नानार्हैः जलैः स्नापयेत स्नापयिष्यथ। ज्वलह्वलेत्यादिना ह्रस्वस्य विभाषितत्वात् अत्र न ह्रस्व। वर्णकैः चन्दनादिभिः लिम्पेत विलिप्स्यथ। मुचादित्वान्नुम्। नानाकारैः नानाविधैः रत्नैः अलङ्कुर्य्यात अलङ्करिष्यथ। रावणार्हैरिति क्वचित्पाठः। सर्वत्र विधौ लिङ् ॥ ११ ॥ भ०

वासयेतेत्यादि। वासोभ्यां मेध्याभ्यां पूताभ्यां वासयेत च आच्छादयिष्यथ। ऋत्विक् यज्वा स्रग्विणं कृत्वा मालाभूषितं कृत्वा मृगाजिने प्राङ्मूर्द्धानं प्राच्यां मूर्द्धा यस्य, पूर्वशिरसम् आदध्यात् स्थापयेत् ॥ १२ ॥ ज० म०

वासयेतेत्यादि। यूयं मेध्याभ्यां पवित्राभ्यां सुवासोभ्यां शोभनवस्त्राभ्यां राक्षसाधिपं रावणं वासयेत आच्छादयिष्यथ। वस ल ङ् स्तौ। ऋत्विक् यजनशीलः स्रग्विणं मालावन्तं राक्षसाधिपं मृगाजिने प्राङ्मूर्द्धानं पूर्वशिरसम् आदध्यात् स्थापयिष्यति। आङ्गोरित्यालोपः, अद इत्युक्तेनं ईः। उभयत्र विधौ लिङ् ॥ १२ ॥ भ०

यज्ञपात्राणीत्यादि। स एव यथाविधि यथाक्रमं यज्ञस्य पात्राणि स्रुगादीनि गात्रेषु चिनुयात्। हविः आज्यं वह्नौ जुहुयात्। सामगाः छन्दोगाः च साम गायेयुः। सर्वत्र विधौ लिङ् ॥ १३ ॥ ज० म०

यज्ञपात्राणीत्यादि। ऋत्विक् यथाविधि विधेरनतिक्रमेण यज्ञपात्राणि स्रुगादीनि रावणस्य गात्रेषु चिनुयात् स्थापयिष्यति। चिन् चित्र चित्याम्। वह्नौ हविः आज्यं जुहुयात् होष्यति। सामगाः साम गायेयुः आवर्त्तयिष्यन्ति। गै गाने। सर्वत्र विधौ लिङ् ॥ १३ ॥ भ०

गत्वेत्यादि। अथ अनन्तरं ते मन्त्रिणः लङ्कां गत्वा यथोदितञ्च कृत्वा अन्त्याहुतेः मृताहुतेः समीपे अनन्तरं स्नाताः सन्तः विभीषणं प्रोक्तवन्तः ॥ १४ ॥ ज० म०

कृतं सर्वं यथादिष्टं कर्त्तुं वह्निजलक्रियाम् ।
प्रयतेथा महाराज ! सह सर्वैः स्वबन्धुभिः ॥ १५ ॥
अभ्रवन्नोत्सहेथास्त्वं धेया धीरत्वमच्युतम् ।
स्थेयाः कार्य्येषु बन्धूनां हेयाः शोकोद्भवं तमः ॥ १६ ॥
नावकल्प्यमिदं ग्लायेद् यत् कृच्छ्रेषु भवानपि ।
न पृथग्जनवज्जातु प्रमुह्येत् पण्डितो जनः ॥ १७ ॥

गत्वार्थेत्यादि । अथ अनन्तरं ते मन्त्रिणो लङ्कां पुरीं गत्वा यथोदितं सर्वं कृत्वा अन्त्याहुतेः समीपे अन्त्याहुतिकर्मसामीप्ये साक्षा विद्यमानास्ता विभीषणं प्रोक्तवन्तः ॥ १४ ॥ भ०

कृतमित्यादि । यथोद्दिष्टं यथाभिहितं सर्वम् अस्माभिः कृतं, त्वम् इदानीं भ्रातुः वह्निक्रियां जलक्रियाञ्च कर्त्तुं स्वबन्धुभिः सर्व्वैः सह प्रयतेथाः । प्रार्थनायां लिङ् ॥ १५ ॥ ज० म०

कृतं सर्वमित्यादि । हे महाराज ! यथादिष्टं सर्वम् अस्माभिः कृतं, सम्प्रति वह्निक्रियां जलक्रियाञ्च कर्त्तुं सर्वैः स्वबन्धुभिः सह प्रयतेथाः यत्नं कुरु । विधिनिमन्त्रणेति प्रार्थनायां स्त्री ॥ १५ ॥ भ०

अभ्रवदित्यादि । शोकात् अप्रवर्त्तमानं पुनराहुः ।—अभ्रवत् किं न उत्सहेथाः किम् अवसीदसि ? गर्हितमेतत् । किं वृत्ते लिङ्लृटाविति गर्हायां लिङ् । इयं च अस्माकम् आशंसा यत्तु धीरत्वं धैर्य्यम् अच्युतमपि नाम धेयाः धास्यसि । बन्धूनाञ्च कार्य्ये स्थेयाः स्थास्यसि । शोकोद्भवञ्च तमो हेयाः त्यक्ष्यसि । सर्वत्राशिषि लिङ् । आर्द्धधातुकत्वादेर्लिङ्गीत्यसंयोगादेरेत्वम् ॥ १६ ॥ ज० म०

अभ्रवदित्यादि । अभिधीयमानस्य कर्म्मणोऽतिशोकात् अप्रवृत्तेः पुनः प्रवृत्त्यर्थम् उच्यते ।—अभ्रवत् मूर्ख इव किं न उत्सहेथाः किम् अवसीदसि ? गर्हितमेतत् । किंवृत्ते लिप्स्यायामिति स्त्री । इयम् अस्माकम् आशंसा, यत् त्वम् अच्युतम् अविनाशं धीरत्वं धैर्य्यं धेया धास्यसि । स्याशिषि । दामागेहागिति धाञो दासंज्ञकत्वात् ङेः । बन्धूनां कार्य्येषु स्थेयाः स्थास्यसि । पूर्ववत् ढौ, ङेश्च । बन्धुशोकोद्भवं तमो हेयाः त्यक्ष्यसि । ओ हाक् लि त्यागे । पूर्ववत् ढौ, ङेश्च ॥ १६ ॥ भ०

नावकल्प्यमित्यादि । अन्यच्च, अनवकल्प्यमिदं न सम्भाव्यमेतत्, येन कृच्छ्रेषु दुःखेषु

यच्च यत्र भवांस्तिष्ठेत् तत्रान्यो रावणस्य न।
यच्च यत्र भवान् सीदेन्महद्भिस्तद्विगर्हितम्॥ १८॥
आश्चर्य्यं यच्च यत्र त्वां प्रब्रूयाम वयं हितम्।
अपि साक्षात् प्रशिष्यास्त्वं कृच्छ्रेष्विन्द्रपुरोहितम्॥ १९॥

भवानपि ग्लायेत् ग्लानिं याति। अनवक्लृप्तौ असम्भावनायाम्। अनवक्लृप्त्यमर्षेत्यादिना लिङ्। सार्वधातुकत्वाद्ग्लान्यस्येत्यत्वं न विकल्प्यते। यस्मात् पण्डितो जनः पृथग्जनवत् अपण्डितवत् जातु कदाचिदपि न प्रमुह्येत् न मोहं यातीति सम्भावयामः। जातु-यदोर्लिङित्यनवक्लृप्तौ लिङ्॥ १७॥ ज० म०

नावकल्प्यमित्यादि। अन्यच्च, नावकल्प्यमिदं न सम्भाव्यमेतत्,—यत् भवानपि कृच्छ्रेषु दुःखविषयेषु ग्लायेत् ग्लानिं यास्यति। विधिनिमन्त्रणेति आदिशब्दात् सम्भावनायां लिङ्। कथमेतत् उच्यते? इत्याह।—यस्मात् पण्डितो जनः पृथग्जनवत् मूर्खवत् जातु कदाचित् न प्रमुह्येत् न मोहं गच्छति। जातुयद्यदायदिभिः लिङ्॥ १७॥ भ०

यच्चेत्यादि। यत्र देशे काले वा भवांस्तिष्ठेत्, तत्र यच्च अन्यो रावणस्य कः तिष्ठेत् अवस्थानं कः करिष्यति न एतत् सम्भावयामः, तस्य तव न्यूनत्वात्। अन्यस्मिन्नवक्लृप्तिः यच्छब्देनोपपदेन योगात् यच्चयत्रयोरित्यनवक्लृप्तौ भविष्यति लिङ्। यच्चेति निपातसमुदायो यच्छब्दस्यार्थे वर्त्तते। किञ्च, यत्र देशे काले वा यच्च भवान् सीदेत् अवसादं करोतीति महद्भिः पण्डितैः विगर्हितं निन्दितम्। गर्हायां चेति सर्वलकाराणामपवादो लिङ्। यच्चयत्रयोरित्यनुवर्त्तते। अनवक्लृप्ताविति निवृत्तम्॥ १८॥ ज० म०

यच्च यत्रेत्यादि। यत्र देशे काले वा भवान् यच्च तिष्ठेत् अवस्थानं करिष्यति, तत्र रावणस्य अन्यो न तिष्ठेत् नावस्थानं करिष्यति। यत्र देशे काले वा भवान् सीदेत् अवसादं गमिष्यति, तत् महद्भिः गर्हितम्। यच्चयत्राभ्यां चेपचित्रे चेति लिङ्॥ १८॥ भ०

आश्चर्य्यमित्यादि। यत्र देशे काले वा यच्च यत् वयमपि त्वां हितं प्रब्रूयाम, तत् आश्चर्य्यं विचित्रम् एतत्। चित्रीकरणे चेति लिङ् यत्र यच्चयोरिति वर्त्तते। त्वाम् इत्यकथितं कर्म्म। अतः त्वं कृच्छ्रेषु व्यसनेषु साक्षात् इन्द्रपुरोहितं बृहस्पतिं

कामो जनस्य जह्यास्त्वं प्रमादं नैरृताधिप ! ।
उत द्विषोऽनुशोचेयुर्विप्लवे किमु बान्धवाः ॥ २० ॥
स भवान् भ्रातृवद्रक्षेद्यथावदखिलं जनम् ।
न भवान् संप्रमुह्येच्चेदाश्वस्युश्च निशाचराः ॥ २१ ॥

प्रशिष्याः वाढं शिक्षयसि । उताप्योः समर्थयोर्लिङ्, अपिशब्दस्योपपदत्वात् समर्थत्वं चानयोर्वाढमिति यस्मिन् अर्थे । शास इदङ् हलोः, शासिवसोत्यादिना षत्वम् ॥ २९ ॥ ज० म०

आश्चर्यमित्यादि । यत्र देशे काले वा यच्च त्वां हितं वयं प्रब्रूयाम, तत् आश्चर्यं चित्रमेव । पूर्ववत् ख्ली । कथम् आश्चर्यमित्याह—यस्मात् त्वं कृच्छ्रेषु व्यसनेषु साक्षात् इन्द्रपुरोधसं बृहस्पतिं शिक्षयसि । वाढेऽप्युताभ्यां ख्ली ॥ १९ ॥ भ०

काम इत्यादि । हे नैरृताधिप ! रक्षसां नाथ ! त्वं विषादं जह्याः त्यज । अस्य जनस्य पौरस्य काम इच्छा । कामप्रवेदनेऽकच्चितीति लिङ् । कच्चिच्छब्दस्याप्रयोगात् कामप्रवेदनञ्च जनाभिप्रायप्रकाशनम् । अन्यच्च अस्मिन् विप्लवे विनाशे द्विषः शत्रवोऽपि उत अनुशोचेयुः अनुशोचन्ति किं नु बान्धवाः ? उताप्योः समर्थयोः लिङ् ॥ २० ॥ ज० म०

काम इत्यादि । हे नैरृताधिप ! राक्षसेश्वर ! त्वं प्रमादं विषादं शोकं वा जह्याः त्यज । जनस्य पौरस्य अयं कामः । कामोक्तेऽकच्चितीति ख्ली । ह्राकोऽन्तर्लोपः व्याम् । शोको युज्यत एवेति दर्शयति ।—विप्लवे विनाशे द्विषः शत्रवोऽपि ततोऽनुशोचेयुः वाढं शोकं कुर्वन्ति किं नु बान्धवाः ? सुतरामेव शोचन्ति । वाढेऽप्युताभ्यां ख्ली ॥ २० ॥ भ०

स इत्यादि । चेत् यदि भवान् न सम्प्रमुह्येत् मोहं न गच्छेत्, तदा स भवान् भ्रातृवत् यथा भ्राता जनो रक्ष्यते तद्वत् इमम् अखिलं जनं यथावत् सम्यक् रक्षेत् । एते च निशाचरा आश्वस्युः आश्वासं गच्छेयुः । हेतुमतोर्लिङ् । अत्र प्रमोहो हेतुः, जनरक्षणं निशाचराश्वासनञ्च हेतुमत् । श्वसेरदादित्वाच्छपो लुक् । आश्वसेयुरिति पाठान्तरम् । आश्वास इव आचरेयुः इत्यर्थः । आश्वसितीति आश्वसः, पचाद्यच्, तदन्तात्सर्वप्रातिपदिकेभ्य इति क्विप् ॥ २१ ॥ ज० म०

स भवानित्यादि । चेत् यदि भवान् न प्रमुह्येत् मोहं न गच्छेत्, तदा स

ततः स गतवान् कर्त्तुं भ्रातुरग्निजलक्रियाम्।
प्रोक्तवान् कृतकर्त्तव्यं वचो रामोऽथ राक्षसम्॥ २२ ॥
अम्भांसि रुक्मकुम्भेण सिञ्चन्मूर्ध्नि समाधिमान्।
त्वं राजा रक्षसां लङ्कामवेक्षेथा विभीषण!॥ २३ ॥
क्रुद्धाननुनयेः सम्यक् धनैर्लुब्धानुपार्जयेः।
मानिनो मानयेः काले त्रस्तान् पौलस्त्य! सान्त्वयेः॥२४॥

भवान् इमम् अखिलं जनं भ्रातृवत् रावण इव रक्षेत् रक्षिष्यति। यथावत् सम्यक् ते निशाचरा आश्वस्युः आश्वासं गच्छेयुः। भव्ये वा फलहेत्वोरिति लिङ्। श्वस ष्लु प्राणे॥ २१ ॥ भ०

तत इत्यादि। ततो वचनानन्तरं भ्रातुः अग्निक्रियां जलक्रियाञ्च कर्त्तुं गतवान्। अथ कृतकर्त्तव्यं कृतकृत्यं राक्षसं रामः वचः प्रोक्तवान्॥ २२ ॥ ज० म०

तत इत्यादि। ततः तद्वचनानन्तरं स विभीषणो भ्रातुः अग्निक्रियां जलक्रियाञ्च कर्त्तुं गतवान्। अथ अनन्तरं कृतकृत्यं राक्षसं विभीषणं रामो वचः प्रोक्तवान्॥ २२ ॥ भ०

अम्भांसीत्यादि। रुक्मकुम्भेण स्वर्णकलसेन अम्भांसि जलानि मूर्द्ध्नि सिञ्चन् पातयन् रामः प्रोक्तवानिति पूर्वेणान्वयः। हे विभीषण! त्वम् अद्यप्रभृति रक्षसां राजा, लङ्काम् अवेक्षेथाः कार्य्याकार्य्यनिरूपणेन द्रक्ष्यसि॥ २३ ॥ ज० म०

अम्भांसीत्यादि। रुक्मकुम्भेण सुवर्णकलसेन अम्भांसि तस्य मूर्ध्नि सिञ्चन् पातयन् समाधिमान् कृतसमाधानरचनः प्रोक्तवानिति पूर्वेणान्वयः। समाधिनेति पाठे—समाहितेन चेतसेत्यर्थः। किमुक्तवानित्याह—हे विभीषण! त्वम् अद्य प्रभृति रक्षसां राजा, लङ्काम् अवेक्षेथाः कार्य्याकार्य्यविचारणेन द्रक्ष्यसि। विधिनिमन्त्रणेति आमन्त्रणे लिङ्॥ २३ ॥ भ०

क्रुद्धानित्यादि। हे पौलस्त्य! क्रुद्धान् अनुनयेः प्रसादयिष्यसि। ये लुब्धाः तान् धनेन उपार्जयेः दानेन ग्रहीष्यसि। मानिनः सत्कारोचिते काले मानयेः पूजयिष्यसि। त्रस्तान् भीतान् सान्त्वयेः समाश्वासयिष्यसि। सर्वत्र निमन्त्रणे नियोगकरणे प्रार्थनायां वा लिङ्॥ २४ ॥ ज० म०

क्रुद्धानित्यादि। हे पौलस्त्य! त्वं क्रुद्धाननुनयेः प्रसादयिष्यसि। लुब्धान्

इच्छा मे परमानन्द्येः कथं त्वं वृत्रशत्रुवत् ।
इच्छेद्धि सुहृदं सर्वो वृद्धिसंस्थं यतः सुहृत् ॥ २५ ॥
वर्द्धिषीष्ठाः स्वजातेषु बध्यास्त्वं रिपुसंहतीः ।
भूयास्त्वं गुणिनां मान्यस्तेषां स्थेया व्यवस्थितौ ॥ २६ ॥
धेयास्त्वं सुहृदां प्रीतिं वन्दिषीष्ठा दिवौकसः ।

धनैः धनदानेन उपार्जयेः ग्रहीष्यसि। मानिनः सत्कारोचितकाले मानयेः पूजयिष्यसि। त्रस्तान् उद्विग्नान् सान्त्वयेः समाश्वासयिष्यसि। सर्वत्र विधिनिमन्त्रणेति प्रार्थनायां विधौ वा लिङ् ॥ २४ ॥ भ०

इच्छेत्यादि। इयञ्च मे इच्छा परमा महती, यत् त्वं वृत्रशत्रुवत् इन्द्र इव कथम् आनन्द्येः मुदितो भविष्यसि। इच्छार्थेषु लिङ्लोटाविति लिङ्, इच्छार्थस्य धातोरुपपदत्वात्। यतः सर्व एव सुहृत् सुहृदं वृद्धिसंस्थम् उदयस्थम् इच्छेत् इच्छति। इच्छार्थेभ्यो विभाषा वर्त्तमान इति लिङ् ॥ २५ ॥ ज०म०

इच्छेत्यादि। इयं मम परमा महती इच्छा, त्वं कथं वृत्रशत्रुवत् आनन्द्येः मुदितो भविष्यसि। गो चेच्छार्थैरिति कामोक्तो लिङ्। तत्रैतेन किमित्याह—यतो यस्मात् सर्वः सुहृत् मित्रं सुहृदं वृद्धिसंस्थम् उदयस्थम् इच्छेत् वाञ्छेत् इति भवद्भूतभव्ये विश्वः क्याद्या इति वर्त्तमाने लिङ्, इच्छार्थे वर्त्तमाने वा लिङिति परः ॥ २५ ॥ भ०

वर्द्धिषीष्ठा इत्यादि। स्वजातेषु स्वजातिषु राक्षसेषु मध्ये त्वं वर्द्धिषीष्ठाः वृद्धिमान् भविष्यसि। आशिषि लिङ्; एवं वक्ष्यमाणेष्वपि सर्वत्र। रिपुसंहतीः शत्रुसमूहान् बध्याः विनाशयिष्यसि। हनो बध लिङि। भूयाश्च गुणिनां मान्यः श्रुतशीलवतां मानार्हश्च भविष्यसि। तेषाञ्च गुणिनां व्यवस्थायां चिरकालं स्थेयाः स्थास्यसि ॥ २६ ॥ ज० म०

वर्द्धिषीष्ठा इत्यादि। स्वजातिषु ज्ञातिसमूहेषु त्वं वर्द्धिषीष्ठा वर्द्धमानो भविष्यसि। शत्रुसंहतीः शत्रुसमूहान् त्वं बध्याः हनिष्यसि। हनो बधष्टीध्यलीति बधादेशः। त्वं गुणिनां मान्यो भूयाः भविष्यसि। तेषां गुणिनां व्यवस्थितौ व्यवस्थायां स्थास्यसि। दामागैहागिति ङेः। सर्वत्र आशिषि ॥ २६ ॥ भ०

धेया इत्यादि। त्वं सुहृदां प्रीतिं धेयाः जनयिष्यसि। दिवौकसो देवान्

सोमं पेयास्व हेयास्व हिंस्रा ह्यानिकरीः क्रियाः ॥ २७ ॥
अवसेयास्व कार्य्याणि धर्म्मेण पुरवासिनाम्।
अनुरागं क्रिया राजन्! सदा सर्वङ्कषं जने ॥ २८ ॥
घानिषीष्ट त्वया मन्युर्ग्राहिषीष्ट समुन्नतिः।
रक्षोभिर्दर्शिषीष्ठास्त्वं द्रक्षीरन् भवता च ते ॥ २९ ॥
मन्युं बध्या भटवधकृतं बालवृद्धस्य राजन्!
शास्त्रार्थज्ञाः सदसि सुधियः सन्निधिं ते क्रियासुः।

वन्दिषीष्ठाः प्रशंसस्ति। सोमं पेयाः पास्यसि। तथा हिंस्राः परोपघातिकाः ह्यानिकरीः अपचयहेतुकाः क्रियाः हेयाः त्यक्ष्यसि ॥ २७ ॥ ज० म०

धेया इत्यादि। त्वं सुहृदां प्रीतिं धेयाः धास्यसि जनयिष्यसि। पूर्ववत् ङः। दिवौकसो देवान् वन्दिषीष्ठाः प्रशंसस्ति। सोमं पेयाः सोमपानं करिष्यसि। पूर्ववत् ङः। तथा हिंस्राः परोपतापिकाः ह्यानिकरीः अपचयहेतुकाः क्रियाः हेयाः त्यक्ष्यसि। पूर्ववत् ङः। सर्वत्र आशिषि ॥ २७ ॥ भ०

अवेत्यादि। पुनः पुरवासिनां पौराणां कार्य्याणि धर्मेण अवसेयाः ज्ञास्यसि। षोऽन्तकर्मणि। हे राजन्! अत्र जने अनुरागं सर्वगतं सर्वव्यापिनं क्रियाः करिष्यसि ॥ २८ ॥ ज० म०

अवसेयाश्चेत्यादि। पुरवासिनां पौराणां कार्य्याणि धर्मेण अवसेयाः ज्ञास्यसि। षो य नाशे। पूर्ववत् ङः। हे राजन्! जनविषये सर्वङ्कषम् अनुरागम् अनन्यकृतमनुरञ्जनं क्रियाः करिष्यसि। कृ ञ डु द कृतौ। ऋद्रिः शयकृङीपे। उभयत्र आशिषि ॥ २८ ॥ भ०

घानिषीष्टेत्यादि। मन्युः क्रोधः त्वया घानिषीष्ट हनिष्यते। चिण्वद्भावो वृद्धिर्घत्वञ्च। समुन्नतिः अभ्युदयः ग्राहिषीष्ट ग्रहीष्यते। रक्षोभिः दर्शनपरैः दर्शिषीष्ठाः त्वं द्रक्ष्यसे। ते च राक्षसाः भवता दर्शनपरेण च द्रक्षीरन्। अचिण्वद्भावपक्षः ॥ २९ ॥ ज० भ०

घानिषीष्टेत्यादि। मन्युः कोपः त्वया घानिषीष्ट, समुन्नतिः अभ्युदयः त्वया ग्राहिषीष्ट ग्रहीष्यते। रक्षोभिः राक्षसैः त्वद्दर्शनलालसैः त्वं दर्शिषीष्ठाः, भवता च ते राक्षसा द्रक्षीरन् द्रक्ष्यन्ते इत्यर्थः ॥ २९ ॥ भ०

संरंसीष्ठाः सुरमुनिकृते वर्त्मनि प्राज्यधर्म्मे
सम्भुत्सीष्ठाः सुनय-नयनैर्विद्विषामीहितानि ॥ ३० ॥
इति भट्टिकाव्ये तिङन्तकाण्डे लिङ्विलसितोनाम-
एकोनविंशतितमः सर्गः ॥ १८ ॥

---

मन्युमित्यादि । अन्यच्च, हे राजन् ! बालानां वृद्धानाञ्च । सर्वो द्वन्द्वे विभाषैकवद्भवतीति । बालाश्च वृद्धाश्च बालवृद्धं तस्य मन्युं शोकं भटवधकृतं भटानाम् पितृपुत्रादीनाञ्च यो बधः तत्कृतं बध्याः प्रियवचनार्थप्रदानादिभिः अपनेष्यसि । शास्त्रार्थज्ञाः शास्त्रार्थकुशलाः ते तव सदसि सभायां सन्निधिं क्रियासुः सन्निहिता भवन्तु इत्यर्थः । सुरैः मुनिभिश्च गते सेविते वर्त्मनि मार्गे प्राज्यधर्मे भूरिपुण्ये संरंसीष्ठाः रंस्यसे । द्विषां शत्रूणाम् ईहितानि चेष्टितानि सुनयनयनैः शोभनाः ये नयाः तैरेव नयनैः चक्षुर्भिरिव अवस्थितैः सम्भुत्सीष्ठाः सम्यक् ज्ञास्यसि । बुध अवगमने । एकाचोवशोभष् ॥ ३० ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लिङ्विलसितः

षष्ठः परिच्छेदः ।

काव्यस्य विभीषणाभिषेको नाम एकोनविंशतितमः सर्गः ।

मन्युमित्यादि । हे राजन् ! त्वं बालवृद्धस्य मन्युं शोकं बध्याः प्रियवचनेन प्रसादनेन च अपनेष्यसि । मन्युं किम्भूतम् ?—भटानां योधानां पितृपुत्रादीनां यो बधः तत्कृतम् । बालाश्च वृद्धाश्चेति समाहारः । तव सदसि सभायां शास्त्रतत्त्वविदः पण्डिताः सन्निधिं क्रियासुः सन्निहिता भविष्यन्ति । सुरमुनिभिः सेविते प्रचुरधर्मे पथि त्वं संरंसीष्ठाः सम्यक्प्रकारेण रतिं करिष्यसि । तथा सुनया एव नयनानि तैः द्विषां शत्रूणाम् ईहितानि त्वं सम्भुत्सीष्ठाः सम्यक् ज्ञास्यसि । सर्वत्र श्चाशिषि । बुध्यौ ङ वेदने । झभान्तस्यादिजवामिति बो भः ॥ ३० ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां
मुग्धबोधिन्यां भट्टिटीकायां विभीषणराज्याभिषेको
नाम एकोनविंशतितमः सर्गः ।

# विंशः सर्गः।

—०*०—

समुपेत्य ततः सीतामुक्तवान् पवनात्मजः।
दिष्ट्या वर्द्धस्व वैदेहि! हतस्त्रैलोक्यकण्टकः॥ १॥
अनुजानीहि हन्यन्तां मयैताः क्षुद्रमानसाः।
रक्षिकास्तव राक्षस्यो गृहाणैतासु मत्सरम्॥ २॥
तृणहानि दुराचारा घोररूपाशयक्रियाः।
हिंस्रा भवतु ते बुद्धिरेतासु कुरु निष्ठुरम्॥ ३॥

---

इतः प्रभृति लोटमधिकृत्य तद्विलसितमाह। तत्र लोट् चेति वचनाद्विध्यादिष्वर्थेषु लोट्। ततोऽन्यत्रापि दर्शयिष्यति।

समुपेत्येत्यादि। ततोऽनन्तरं पवनात्मजः रामाज्ञया सीतां समुपेत्य समुपगम्य उक्तवान्।—हे वैदेहि! रावणः त्रैलोक्यस्य प्रतोदकत्वात् कण्टको हतः, तेन दिष्ट्या प्रियवचनेन वर्द्धस्व नियोगतो वर्त्स्यसि। इति निमन्त्रणे लोट्॥ १॥ ज० म०

अथ गोमधिकृत्योच्यते, तस्याः परमते लोडिति संज्ञा।

समुपेत्येत्यादि। तदनन्तरं हनूमान् रामाज्ञया समुपेत्य समीपेषु उपागम्य सीताम् उक्तवान्। किं तदित्याह,—हे वैदेहि! त्रैलोक्यकण्टकः अत्र रावणो हतः, तेन दिष्ट्या आनन्देन त्वं वर्द्धस्व। विधिनिमन्त्रणेत्यादिना निमन्त्रणेऽनुमतौ वा गो। दिष्ट्येत्यानन्देऽव्ययम्। त्रिलोक्येव त्रैलोक्यम्। विकारसङ्घेति स्वार्थे ष्णः॥ १॥ भ०

अनुजानीहीत्यादि। अनुज्ञां प्रयच्छ। प्रार्थनायां लोट्। येन मया एता राक्षस्यः तव रक्षिकाः क्षुद्रमानसाः पापाशयाः हन्यन्तां विनाशयिष्यन्ते। अत्र विधौ कर्म्मणि लोट्। तस्मात् एतासु मत्सरं गृहाण जनय। प्रार्थनायां लोट्। येन गृहीतक्रोधा माम् अनुज्ञास्यसि॥ २॥ ज०म०

अनुजानीहीत्यादि। अनुज्ञां देहि। आद्योरित्यादिना ईः। मया एताः तव रक्षिकाः क्षुद्रमानसाः पापाशयाः राक्षस्यो हन्यन्तामिति। विधौ गो। कर्म्मणि यक्। तस्मात् एतासु मत्सरं क्रोधं गृहाण, धृतक्रोधा सती माम् अनुज्ञास्यसि इति। प्रार्थनायां गो। ग ग्रह ज्ञ च, चकारादादाने। ग्रहस्वपाद्योरिति जिः। हसान्नान ह्वाविति श्नानः। हेर्लोपः॥ २॥ भ०

तृणहानीत्यादि। एता दुराचाराः घोररूपाशयक्रियाः क्रूराणि आकाराभि-

पश्चिमं करवामैतत्प्रियं देवि ! वयं तव।
ततः प्रोक्तवती सीता वानरं करुणाश्रया ॥ ४ ॥
उपशाम्यतु ते बुद्धिः पिण्डनिर्वेशकारिषु।
लघुसत्त्वेषु दोषोऽयं यत्कृतो निहतोऽसकौ ॥ ५ ॥

प्रायानुष्ठानानि यासां ताः तृणह्मानि हनिष्यामि, तत एतासु हिंसनशीला तव बुद्धिः भवतु। निष्ठुरञ्च नैष्ठुर्य्यं कुरु। भावप्रधानो निर्देशः ॥ ३ ॥ ज० म०

तृणह्मानीत्यादि। घोरं भयानकं रूपम् आशयोऽभिप्रायः क्रिया कर्म्म च यासां ता एता दुराचारा दुष्टशीला राक्षसीः अहं तृणह्मानि हनिष्यामि। तृह ध तृन्भू श हिंसे। रुधादित्वात् श्नन् णत्वम्। एतासु ते तव बुद्धिः हिंस्रा हिंसनशीला भवतु। निष्ठुरं नैष्ठुर्य्यं कुरु। भावप्रधाननिर्देशः ॥ ३ ॥ भ०

पश्चिममित्यादि। हे देवि ! किम् अत्र विचारितेन? तव पश्चिमम् अन्त्यं प्रियम् एतत् वयं करवाम करिष्यामः, अस्य एकत्वे बहुवचनमन्यतरस्याम्। ततोऽनन्तरं सीता करुणाश्रया सती वानरं प्रोक्तवती ॥ ४ ॥ ज० म०

पश्चिममित्यादि। हे देवि ! अलं विचारेण? तव एतत् पश्चिमम् अन्त्यं प्रियं वयं करवाम। अस्मदः एकत्वे बहुत्वविवक्षया आमन्त्रणे प्रार्थने वा लोट्। अनन्तरं करुणाश्रया सीता वानरं प्रोक्तवती ॥ ४ ॥ भ०

उपेत्यादि। लघुसत्त्वेषु स्त्रीजनेषु पिण्डनिर्वेशकारिषु पिण्डस्य ग्रासस्य निर्वेशो निष्क्रयः तत्कारिषु ते बुद्धिः उपशाम्यतु सकरुणा भवतु। सर्वत्र विधौ लोट्। किमिति चेत्? यत्कृतो यज्जनितोऽयं दोषः मम एताभिः कृतः असकौ असौ रावणो निहतो व्यापादितः। कुत्सायामव्ययसर्वनाम्नामकच् प्राक् टेरिति अकच् ॥ ५ ॥ ज० म०

उपशाम्यत्वित्यादि। पिण्डस्य ग्रासस्य निर्वेशो निष्क्रयः तत्कारिषु अन्नार्थं परायत्तेषु। अत एव लघुसत्त्वेषु अल्पबलेषु स्त्रीजनेषु तव बुद्धिः उपशाम्यतु कृपापरा भवतु। विधौ लोट्। यत्कृतो यन्निमित्तकोऽयं दोषः मदुपद्रवरूपः असकौ रावणो हत एव। अदसस्त्यादिव्यासेत्यादिना अक्; स चात्र कुत्सार्थे, तत्र वाशब्दस्य व्यवस्थितविभाषितत्वात्। तदुक्तं,—"कृपायां निन्दने ज्ञाने नीतौ दानेन मानिते। प्रायोऽन्त्यस्वरात् पूर्वोऽग् वा सर्वनामतिङव्ययात् ॥" इति ॥ ५ ॥ भ०

न हि प्रेष्यवधं घोरं करवाण्यस्तु ते मतिः।
एधि कार्य्यकरस्त्वं मे गत्वा प्रवद राघवम् ॥ ६ ॥
दिदृक्षुर्मैथिली राम ! पश्यतु त्वाऽविलम्बितम्।
तथेति स प्रतिज्ञाय गत्वा राघवमुक्तवान् ॥ ७ ॥
उत्सुकानीयतां देवी काकुत्स्थकुलनन्दन !।
त्स्मां लिखित्वा विनिश्वस्य स्वरालोक्य विभीषणम् ॥८॥

न हीत्यादि। अन्यच्च न हि नैव घोरं प्रेष्यवधं करवाणि करिष्यामि इति इत्यम् मतिः तव अपि अस्तु। आशिषि लिङ्लोटाविति लोट्। अतः त्वं कार्य्यकरः कार्य्यकरणे अनुकूलः आनुलोम्येन एधि भव। श्नसोरल्लोपः, घ्वसोरेद्धावभ्यासलोपश्च। एत्वस्य समानाश्रयत्वादसिद्धत्वे हुझल्भ्यो हेर्धिः। कार्य्यमाह—गत्वा प्रवद राघवं गत्वा राघवं मम आदेशं ब्रूहि ॥ ६ ॥ ज० म०

न हि प्रेष्यवधमित्यादि। अहं प्रेष्यवधं न करवाणि। समर्थनाशिषोर्गीति आशिषि गौ। इति ते तव मतिः अस्तु। त्वं मे मम कार्य्यकर एधि भव। इतो गत्वा राघवं प्रवद। विधौ गौ। जह्येधिशाधीति हियुक्तस्यास्तेरेध्यादेशः। स्वकृष्ट इति क्रजष्टः। आनुकूल्यार्थोऽत्राभिधानात् ॥ ६ ॥ भ०

किं मया वक्तव्यमिति चेत्, तदाह

दिदृक्षुरित्यादि। हे राम ! द्रष्टुमिच्छुः मैथिली सीता अविलम्बितं द्रुतं त्वा त्वां पश्यतु। सर्वत्र प्रार्थनायां लोट्। स पवनात्मजस्तथेति यथा ज्ञापयसि इति प्रतिज्ञाय स्वीकृत्य गत्वा राघवम् उक्तवान् ॥ ७ ॥ ज० म०

दिदृक्षुरित्यादि। हे राम ! सीता त्वा त्वां द्रष्टुमिच्छुः अविलम्बितं शीघ्रं त्वां पश्यतु। प्रार्थने गौ। इति गत्वा प्रवदेत्यन्वयः ॥ ७ ॥ भ०

किमित्याह

उत्सुकेत्यादि। हे काकुत्स्थकुलनन्दन ! उत्सुका देवी आनीयतामिति। प्रार्थनायां कर्म्मणि लोट्। एवमुक्ते रावणवधे महति प्रयासे कृतेऽपि जनवादभयात् न तया सह वासः कार्य्य इत्यभिप्रायेण राघवः क्ष्माम् अङ्गुष्ठेन लिखित्वा विनिश्वस्य स्वरालोक्य आकाशं दृष्ट्वा। स्वरित्यव्ययम्। विभीषणम् उक्तवानिति वक्ष्यमाणेन सम्बन्धः ॥ ८ ॥ ज०म०

उक्तवान् राघवः सीतामानयालङ्कृतामिति ।
गत्वा प्रणम्य तेनोक्ता मैथिली मधुरं वचः ॥ ९ ॥
जहीहि शोकं वैदेहि ! प्रीतये धेहि मानसम् ।
रावणे जहिहि द्वेषं जहाहि प्रमदावनम् ॥ १० ॥
स्नाह्यनुलिम्प निवस्स्व धूपायाविध्य च स्रजम् ।

उत्थुकेत्यादि । एवमुक्ते सति राघवो जनापवादशङ्कया किं कर्त्तव्यमिति चिन्तयन् क्ष्मां लिखित्वा विनिश्वस्य खरालोक्य आकाशं दृष्ट्वा विभीषणम् उक्तवान् इत्यग्रिमश्लोकेनान्वयः । भूमिलिखनादिकं चिन्तया भवतीति जात्युक्तिः । भावस्तु अयम्—अजितेन्द्रियस्य रावणस्य वशा सीता कथं ग्राह्या ? लोको मां किं वदिष्यति ? अविचारेण त्यागेऽपि महादोषः; तस्मात् समानयतु, विचार्य्य यद् युक्तं कर्त्तव्यमिति ॥ ८ ॥ भ०

उक्तवानित्यादि । सीताम् अलङ्कृताम् आनय इति राघव उक्तवान् । विधौ लोट् । विभीषणेन तेन गत्वा प्रणम्य च मैथिली उक्ता मधुरं वचः ॥ ९ ॥ ज० म०

उक्तवानित्यादि । अलङ्कृतां सीतां त्वम् आनय । विधौ गौ । इति विभीषणम् उक्तवान् इत्यन्वयः । तदनन्तरं विभीषणेन गत्वा प्रणम्य मधुरं वाक्यं सीता प्रोक्ता ॥ ९ ॥ भ०

जहीहीत्यादि । शोकं पतिवियोगजं जहीहि । जहातेश्चेत्यन्यतरस्यामित्त्वमीत्त्वञ्च, आ च हाविव्याकारः, इति रूपत्रयम् । प्रीतये प्रीत्यर्थं पुनः मानसं धेहि घटयस्व । घ्वसादेरेद्धावभ्यासलोपश्च । रावणे रावणविषये द्वेषं जहिहि तस्य विनष्टत्वात् । प्रमदावनम् अशोकवनिकां जहाहि, पत्युः अन्तिकं याहीत्यर्थः । सर्वत्र विधौ लोट् ॥ १० ॥ ज० म०

जहीहीत्यादि । हे वैदेहि ! शोकं जहीहि त्यज । आद्यशोरिति जहातेरीः । प्रीतये प्रीत्यर्थं पुनः मानसं धेहि घटय । घ्वोर्दाधीरिति धाञो धेः । रावणविषये द्वेषं जहिहि तस्य हतत्वात् । दरिद्रो ङिइस्त इत्यादिना पचे ङिः । प्रमदावनम् अशोकवनिकां जहाहि । हौ ङा वेति पचे ङा । सर्वत्र विधौ गौ ॥ १० ॥ भ०

स्नाहीत्यादि । श्लोकद्वयं मिश्रेण व्याख्यातम् । स्नाहि स्नानं कुरु । ततः कायशुद्ध्यर्थं मदनुपहृतपञ्चगव्यम् अद्धि भक्षय । हुझल्भ्यो हेर्द्धिः । गौरेतानि गव्यानि

रत्नान्यामुञ्च सन्दीप्ते हविर्जुहुधि पावके ॥ ११ ॥
अद्धि त्वं पञ्चगव्यञ्च छिन्धि संरोधजं तमः।
आरोह शिविकां हैमीं द्विषां जहि मनोरथान् ॥ १२ ॥
हणेढु त्वद्वियोगोत्थां राजन्यानां पतिः शुचम्।

सर्वत्र गोरजादिप्रसङ्गे यत् प्रत्ययः। पञ्च गव्यानि समाहृतानीति पात्रादिदर्शनान्न ङीप्। ततः पवित्रीकृतकाया सन्दीप्ते पावके हविर्जुहुधि। ततः स्वामिनं गन्तुम् अनुष्ठितदैव-कार्या सती त्वम् आलिम्प समालभस्व। ततो निवस्स्व आच्छादय। वस आच्छादने, अदादित्वाच्छपो लुक्। धातुसकारस्य परगमनम्। ततो धूपाय धूपितम् आत्मानं कुरु धूपेरायप्रत्ययः। आविध्य च स्रजं मालां शिरसि आचिप्य। व्यध ताड़ने। ग्रहि ज्यादिना सम्प्रसारणम्। रत्नानि आमुञ्च विन्यस्य। इत्ययमर्थवशात् क्रियाक्रमो द्रष्टव्यः; यथा देवदत्तं भोजय स्नापय उद्वर्त्तयेति। किञ्च, संरोधजं तमः अस्वतन्त्री-करणजं शोकं छिन्धि अपनय। हैमीं शिविकां सौवर्णयानम् आरोह अधितिष्ठ। सर्वत्र भर्त्तुर्नियोगकरणे लोट्। त्वम् आरूढ़ा द्विषां मनोरथान् हृदये स्थितान् अभिप्रायान् जहि नाशय। ह्रौ परतो हन्तेर्जः॥ ११ ॥ १२ ॥ ज० म०

स्नाहीत्यादि। स्नाहि स्नानं कुरु, ततोऽनुलेपनं चन्दनादिना कुरु। लिपिः-मुचादिः। धूपाय आत्मानं धूपाश्रितं कुरु। धूप तापे। कम ऋतो गुपूधूपेत्यायः। निवस्स्व वस्त्रं परिधेहि। वस लङ् स्तुतौ। स्रजं मालाञ्च आविध्य परिधेहि। व्यध्यौ ताड़े, आङ्पूर्वः परिधाने। ग्रहस्वपाद्योरिति जिः। रत्नानि आमुञ्च परिधत्स्व। सन्दीप्ते पावके हविर्जुहुधि। हुझल्भ्यो हेर्धिः॥ ११ ॥ भ०

अद्धि त्वमित्यादि। शरीरशुद्ध्यर्थं पञ्चगव्यं गोघृतादिकम् अद्धि भक्षय। अद लौ भक्षे। हुझल्भ्यो हेर्धिः। गोरेतानि गव्यानि, विकारसङ्घेति यः, ओदौतोऽज्वर्दिति अज्वद्भावात् यलायवायाव इत्यव्। पञ्चानां गव्यानां समाहार इति पात्रादित्वान्न ईप्। संरोधो बन्दीकरणं तज्जनितं तमः शोकं छिन्धि अपनय। छिदि रुधादित्वात् श्नम्। हेर्धिः। हैमीं स्वर्णमयीं शिविकां नरयानम् आरोह। आरूढ़ा सती द्विषां मनोरथान् अभिलाषान् जहि नाशय। जह्येधिशाधीति ह्रियुक्तस्य हन्तेर्जह्यादेशः। सर्वत्र विधौ निमन्त्रणे वा लो॥ १२ ॥ भ०

हणेढ्वित्यादि। गतायां त्वयि राजन्यानां क्षत्रियाणां पतिः रामः शुचं शोकं त्वद्वियोगोत्थां त्वद्वियोगप्रभवाम्। सुपि स्थ इति कः। उदः स्थास्तम्भोरिति पूर्वसवर्णः

भवतादवियुक्ता त्वमत ऊर्द्धं स्ववेश्मनि ॥ १३ ॥
दीक्षस्व सह रामेण त्वरितं तुरगाध्वरे ।
हृष्यस्व पत्या प्रीतेन प्रीत्या प्रेक्षस्व राघवम् ॥ १४ ॥
अयं नियोगः पत्युस्ते कार्य्या नात्र विचारणा ।
भूषयाङ्गं प्रमाणञ्चेद्रामो गन्तुं यतस्व च ॥ १५ ॥
मुदा संयुङ्हि काकुत्स्थं स्वयञ्चाप्नुहि सम्मदम् ।
उपेह्यूर्द्ध्वं मुहूर्त्तात्त्वं देवि ! राघवसन्निधिम् ॥ १६ ॥

तृणेढु छिनत्तु । अत: अस्मात् कालात् ऊर्द्ध्वकालं स्ववेश्मनि अयोध्यायाम् अवियुक्ता त्वं भवतात् भूयाः । तुह्योरिति तातङ् ॥ १३ ॥ ज० म०

तृणेढ्वित्यादि । राजन्यानां चत्रियाणां पतिः रामः त्वद्वियोगात् उत्थितं शुचं तृणेढु हन्तु । हनजनादिति स्थो डः, उदःस: स्थास्तम्भोरिति सलोपः । अतोऽस्मात् कालात् ऊर्द्ध्वं स्ववेश्मनि अयोध्यायां त्वं पत्या अवियुक्ता भवतात् भूयाः । उभयत्राशिषि गौ । तुह्योस्तातङ् वाशिषि ॥ १३ ॥ भ०

दीक्षस्वेत्यादि । तुरगाध्वरे अश्वमेधे रामेण सह त्वरितं दीक्षस्व दीक्षिता भूयाः । आशिषि लोट् । प्रीतेन पत्या हृष्यस्व हृष्टा भव । इहापि कर्म्मणि लोट् । प्रीता च सती राघवं त्वं प्रेक्षस्व ॥ १४ ॥ ज० म०

दीक्षस्वेत्यादि । तुरगाध्वरे अश्वमेधे रामेण सह त्वरितं त्वं दीक्षस्व दीक्षिता भूयाः । प्रीतेन पत्या हृष्यस्व हृष्टा भूयाः । कर्म्मणि यक् । त्वमपि प्रीता सती राघवं प्रेक्षस्व । सर्वत्राशिषि गौ ॥ १४ ॥ भ०

अयमित्यादि । तव पत्युः अयं नियोगः, यत् कृतः स्नानादिव्यापारः । अत्र वस्तुनि विचारणा न कार्य्या, किमेवं न वेति एतत् प्रमाणं चेत् । भूषयाङ्गं स्नानादिपूर्वकम् अलङ्कुरु, रामं गन्तुं यतस्व ॥ १५ ॥ ज० म०

अयं नियोग इत्यादि । तव पत्युः अयं स्नानादौ नियोग आज्ञा । अत्रार्थे किं कर्त्तव्यमिति विचारणा न कार्य्या । यदि तव रामः प्रमाणं तदा अङ्गं भूषय स्नानादिपूर्वकम् अलङ्कुरु, रामान्तिकं गन्तुं यतस्व यत्नं कुरु ॥ १५ ॥ भ०

मुदेत्यादि । गत्वा च काकुत्स्थं मुदा हर्षेण संयुङ्हि मिश्रय । यु ल मिश्रणे । तव गमनेन स्वयञ्च सम्मदं हर्षं प्राप्नुहि । प्रमदसम्मदौ हर्षे । सर्वत्र प्रार्थनायां लोट् ।

ऊर्द्ध्वं मुहूर्त्तादङ्गोऽङ्ग ! स्वामिनी स्म भव क्षितेः।
राजपत्नीनियोगस्थमनुशाधि पुरीजनम्॥ १७॥
उत्तिष्ठस्व मते पत्युर्यतः स्वालङ्कृतौ तथा।
प्रतिष्ठस्व च तं द्रष्टुं द्रष्टव्यं त्वं महीपतिम्॥ १८॥

हे देवि! अस्मात् मुहूर्त्तात् ऊर्द्ध्वं राघवसन्निधिं राघवः सन्निधीयते यस्मिन् प्रदेशे इति कर्मण्यधिकरणे चेति किप्रत्ययः। तं त्वम् उपेहि गच्छ॥ १६॥ ज० म०

मुदेत्यादि। इतो गत्वा रामं मुदा हर्षेण संयुहि संमिश्रय। यु ल मिश्रणे। स्वयञ्च सम्मदं हर्षं प्राप्नुहि। प्रार्थनायामाशिषि वा गौ। संयुक्तमोर्हेर्लोपाभावः। हे देवि! अस्मात् मुहूर्त्तात् ऊर्द्ध्वं राघवसन्निधिं त्वम् उपेहि गमिष्यसि। विधिनिमन्त्रणेत्यादिना प्राप्तकाले गौ। राघवसन्निधिं गन्तुं प्राप्तकालासीत्यर्थः॥ १६॥ भ०

ऊर्द्ध्वमित्यादि। तथा मुहूर्त्तात् ऊर्द्ध्वं क्षितेः स्वामिनी भव स्म। अङ्गेति सम्बोधनपदम्। भव स्मे लोडित्यनेन प्रैषे लोट्, तत्र हि प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति चौर्द्ध्व-मौहूर्त्तिक इति च वर्त्तते प्राप्तकालतायां लोट्। राघवसन्निधिं गन्तुं क्षितेः स्वामिनी भवितुं प्राप्तकाला देवी, अन्यथा कालातिक्रमे मयि रामो विरज्यते। अन्यच्च, इयम् अस्माकम् आशंसा त्वं राजपत्नीनियोगस्थं महादेव्याज्ञाकरणतत्परं पुरीस्थम् अयोध्यावस्थितं जनम् अनुशाधि विधेयीकुरु। आशिषि लोट्। शा हाविति शादेशः, तस्य समानाश्रयत्वादसिद्धत्वे हुझल्भ्यो हेर्धिः॥ १७॥ ज० म०

ऊर्द्ध्वमित्यादि। अङ्गेति सानुनयसम्बोधनेऽव्ययम्। मुहूर्त्तात् ऊर्द्ध्वं त्वं क्षितेः स्वामिनी भव। पूर्ववत् प्राप्तकाले गौ। क्षितेः स्वामिनी भवितुं प्राप्तकालासीत्यर्थः। राजपत्नीनियोगस्थं महादेव्याज्ञाकरणतत्परं पुरीजनम् अयोध्यावासिनम् अनुशाधि आज्ञापय। आशिषि गौ। शास च् लु शासने। जस्तेधिशाधिहन्यस्तिशासि हिना॥१७॥भ०

उत्तिष्ठस्वेत्यादि। तस्मात् प्रार्थयेऽहं पत्युः मते अभिप्राये मत्समीपम् आगन्तव्यमिति उत्तिष्ठस्व तदर्थं घटस्व। उदोऽनूर्द्ध्वकर्म्मणीति तङ्। तथा अलङ्कृतौ अलङ्करणे यतस्व यत्नं कुरु, लज्जया कदाचिन्न उत्सहेतेति। पुनः पुनः अभिधानम् अविरुद्धं यथा स्नाहीत्यादिभूषयाङ्गमिति मन्यते, तेन वारद्वयमुक्तम्। एवम् अलङ्कृत्य त्वं महीपतिं द्रष्टव्यं दर्शनार्हम्। अर्हे कृत्यतृचश्चेति। अवश्यद्रष्टव्ये वा आवश्यके

अनुष्ठाय यथादिष्टं नियोगं जनकात्मजा ।
समारूढ़वती यानं पट्टांशुकवृतानना ॥ १९ ॥
लज्जानता विसंयोगदुःखस्मरणविह्वला ।
सास्रा गत्वान्तिकं पत्युर्दीना रुदितवत्यसौ ॥ २० ॥
प्राप्तचारित्र्यसन्देहस्ततस्तामुक्तवान्नृपः ।
इच्छा मे नाददे सीते ! त्वामहं गम्यतामतः ॥ २१ ॥

कृत्यार्थेति । संद्रष्टुं प्रतिष्ठस्व गच्छ । प्रार्थनायां लोट् । समवप्रविभ्यः स्थ इति तङ् ॥ १८ ॥ ज० म०

उत्तिष्ठस्वेत्यादि । मत्समीपे आगम्यतामिति पत्युर्मते अभिप्रेते उत्तिष्ठस्व घटस्व । उदोऽनूर्द्ध्वे इति मम् । तथा अलङ्करणे यतस्व, दर्शनार्हं महीपतिं रामं संद्रष्टुञ्च प्रतिष्ठस्व । प्रतिज्ञानिर्णयेत्यादिना मम् । सर्वत्र प्रार्थनायां गौ ॥ १८ ॥ भ०

अनुष्ठायेत्यादि । श्लोकत्रयम् । एवमुक्ता भर्त्तुः यथोद्दिष्टं नियोगं स्नानादिकम् अनुष्ठाय कृत्वा जनकात्मजा, मां कश्चित् मा द्राक्षीदिति पट्टांशुकवृतानना यानं शिविकाम् आरूढ़वती, पत्युः अन्तिकञ्च गत्वा यानात् अवतीर्य्येत्यर्थात् ॥ १९ ॥ ज०म०

अनुष्ठायेत्यादि । पत्युः यथादिष्टं नियोगं स्नानादिकम् अनुष्ठाय कृत्वा जनकात्मजा लज्जया पट्टांशुकेन आवृतानना सती यानं समारूढ़वती ॥ १९ ॥ भ०

लज्जानतेत्यादि । लज्जया आनता वियोगदुःखस्य पूर्वानुभूतस्य स्मरणेन विह्वला सास्रा दीना सा पत्युरन्तिकं गत्वा सीता रुदितवती ॥ २० ॥ ज० म०

लज्जानतेत्यादि । असौ लज्जया अवनता सीता पत्युरन्तिकं गत्वा सास्रा सती रुदितवती । यतो वियोगदुःखस्य पूर्वानुभूतस्य स्मरणेन विह्वला ; अत एव दीना विह्वलेति । ह्वल चाले । पचादित्वादन् । विक्लवेति पाठे—क्लव स्म अ च भये ॥२०॥भ०

प्राप्तेत्यादि । ततोऽनन्तरं नृपो रामः रावणः किम् अस्यां खण्डितचारित्रशीलो न वेति प्राप्तचारित्र्यसन्देहः ताम् उक्तवान् । किमित्याह,—हे सीते ! मम इयम् इच्छा, यत् त्वाम् अहं माददे न गृह्णामि । इच्छार्थेषु लिङ्लोटाविति लोट् । अतोऽनिच्छातः कारणात् यथेष्टं गम्यताम् ॥ २१ ॥ ज० म०

प्राप्तेत्यादि । तदनन्तरं रावणेन इयम् उपभुक्ता न वेति प्राप्तः सीताचारित्र-

रावणाङ्कपरिश्लिष्टा त्वं हृल्लेखकरी मम।
मतिं बधान सुग्रीवे राक्षसेन्द्रं गृहाण वा॥ २२॥
अशान भरताद्भोगान् लक्ष्मणं प्रवृणीष्व वा।
कामाद्वा याहि मुच्यन्तामाशा रामनिबन्धनाः॥ २३॥

सन्देही येन स नृपो रामः तां सीताम् उक्तवान्। चरित्रमेव चारित्रं, स्वार्थे ष्यञः, सन्देहविशेषणम्। मे मम इयम् इच्छा, त्वाम् अहं नाददे न गृह्णीयाम्। गी चेच्छार्थैरिति कामोक्तो गी विधाविति विद्यासागरः, प्रार्थनाविवक्षयेति दुर्गः। अतो हेतोर्यथेष्टं त्वया गम्यतामिति॥ २१॥ भ०

किमिति नेच्छति चेदाह

रावणेत्यादि। रावणाङ्कपरिश्लिष्टा हरणसमये रावणोत्सङ्गे स्थिता सती परिश्लिष्टा परिमृदितवती त्वं मम हृल्लेखकरी चेतःपीड़नशीला। कृञो हेतुताच्छील्येति टः। हृदयस्य हृल्लासेति हृदादेशः। कम् अहं शरणं यास्यामीति चेदाह।—सुग्रीवे मतिं बधान बध्नीयाः उत्पादय, राक्षसेन्द्रं विभीषणं वा गृहाण स्वीकुरु॥ २२॥ ज० म०

रावणाङ्केत्यादि। पूर्वोक्तो हेतुरयं, हरणसमये रावणाङ्के परिश्लिष्टा परिमृदिता त्वं मम हृल्लेखकरी चेतःपीड़ाकरी। हृदो लेखं खण्डनं करोतीति टकुष्टः। "चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरवचनं, हृच्छब्देन समासः। परे तु हृदयस्य हृल्लासादाविति सूत्रं कृत्वा लेखस्य लासादित्वात् हृदयशब्दस्य हृदादेशमाहुः। लासादौ हृच्छब्दस्य प्रयोगोऽभिधानात् हृदयशब्दस्य त्वप्रयोगोऽनभिधानादिति स्वमतं साधु लाघवात्। कुत्र गन्तव्यमित्याह—सुग्रीवे मतिं बधान कुरु। बन्धौ ग बन्धे। राक्षसेन्द्रं विभीषणं वा गृहाण। इसाभ्नानो ह्नौ॥ २२॥ भ०

अशानेत्यादि। भरताद्वा भोगान् अशान भुङ्क्ष्व। सर्वत्र हलः श्नः शानजिति शानच्। लक्ष्मणं प्रवृणीष्व वा अङ्गीकुरु। वृ ञ वरणे इत्यस्य रूपं, प्वादीनां ह्रस्वः। स्वेच्छया वा याहि भवत्यै यत्र रोचते तत्र गम्यतां, रामनिबन्धनाः पुनरपि रामो मे पतिः भूयात् इत्याशाः मुच्यन्तां त्यज्यन्ताम्॥ २३॥ ज० म०

अशानेत्यादि। भरताद्वा भोगान् अशान भुङ्क्ष्व। अश ग भोजने। इसाभ्नानो ह्नौ।

क्व च ख्यातो रघोर्वंशः क्व त्वं परगृहोषिता।
अन्यस्मै हृदयं देहि नानाभीष्टे घटामहे॥ २४॥
यथेष्टं चर वैदेहि! पन्थानः सन्तु ते शिवाः।
कामास्तेऽन्यत्र तायन्तां विशङ्कां त्यज मद्गताम्॥ २५॥
ततः प्रगदिता वाक्यं मैथिलाभिजना नृपम्।

लक्ष्मणं वा वृणीष्व। वृ गि ञ वृत्याम्। प्वादित्वात् ह्रस्वः। कामात् स्वेच्छया वा यत्र कुत्रापि याहि गच्छ। रामनिबन्धना आशाः त्वया मुच्यन्तां, पुनरपि रामो नेष्यति इत्याशाः त्यज्यन्ताम् इत्यर्थः। विधौ गौ॥ २३॥ भ०

किमिति चेदाह

क्व चेत्यादि। परिशुद्धत्वात् सर्वत्र ख्यातः लोके विदितो रघोर्वंशः क्व? क्व च त्वं परगृहोषिता? जातकलङ्कत्वात् इयमपि एतत् दूरं भिन्नम्। सर्वत्र विधौ लोट्। अतोऽन्यस्मै हृदयं देहि चित्तं परस्मै देहि, मद्विधाः अनभिमते विषये न घटामहे। निमन्त्रणे लोट्॥ २४॥ ज० म०

क्व चेत्यादि। परित्यागे हेतुरयं, ख्यातो लोकविदितो रघुवंशः क्व? परगृह-स्थिता त्वञ्च क्व? उभयं परस्परविरुद्धमिति भावः। अतोऽन्यस्मै चित्तं देहीति विधिः, अनभीष्टेऽनुचिते वस्तुनि वयं न घटामहे॥ २४॥ भ०

यथेष्टमित्यादि। यथेष्टं चर यथेष्टचारिणी भव। विधौ लोट्। तव च यथेष्टं चरन्त्याः पन्थानो मार्गाः शिवा निर्विघ्नाः सन्तु भूयासुः। आशिषि लोट्। किञ्च कामाः अभिलाषाः तव अन्यत्र तायन्तां स्फीता भवन्तु। अत्रापि आशिषि। यथेष्ट-चारित्वात् किम् अयं करिष्यतीति मद्गतां विशङ्कां भयं त्यज त्यक्ष्यसि। विधौ लोट्॥ २५॥ ज० म०

यथेष्टमित्यादि। हे वैदेहि! यथेष्टं चर यथेष्टचारिणी भव। विधौ गौ। यथेष्टं चरन्त्याः तव पन्थानः शिवा निर्विघ्ना भवन्तु। आशिषि गौ। तव कामा अभिलाषा अन्यत्र तायन्तां स्फीता भवन्तु। तायृ ङ् पालनसन्तत्योः। आशिषि गौ। मयि यथेष्टचारिण्यां रामः किं करिष्यतीति मद्गताम् आशङ्कां त्यज। विधौ गौ॥ २५॥ भ०

तत इत्यादि। ततः तद्वचनानन्तरं मैथिलाभिजना सीता नृपं वाक्यं प्रगदिता

स्त्रीसामान्येन सम्भूता शङ्का मयि विमुच्यताम्॥ २६॥
दैवाद्बिभीहि काकुत्स्थ! जिह्रीहि त्वं तथा जनात्।
मिथ्या मामभिसंक्रुध्यन्नवशां शत्रुणा हृताम्॥ २७॥
चेतसस्त्वयि वृत्तिर्मे शरीरं रक्षसा हृतम्।
विदांकुर्वन्तु सम्यञ्चो देवाः सत्यमिदं वचः॥ २८॥

गदितुं प्रवृत्ता। आदिकर्मणि क्तः। स्त्रीसामान्येन स्त्रीति कृत्वा या तव मयि शङ्का इयं सती न वेति सा विमुच्यतां, मिथ्यात्वात्। प्रार्थनायां लोट्॥ २६॥ ज० म०

तत इत्यादि। तद्वचनानन्तरं मिथिलाभिजना मिथिलदेशे सम्भूता सीता नृपं रामं प्रगदितुं प्रवृत्ता। घे चादिद्वे क्तः। जनः पचादित्वात् अन्। अभिजनः पूर्वबान्धव इति वर्द्धमानः। "कुलान्यभिजनान्वयौ" इत्यमरः। स्त्रीसामान्येन योषिदन्तरसाधारण्येन सम्भूता शङ्का मयि विमुच्यताम्। प्रार्थनायां णी॥ २६॥ भ०

दैवादित्यादि। अन्यच्च, हे काकुत्स्थ! माम् अवशां पराधीनां शत्रुणा हृतां मिथ्या अभिसंक्रुध्यन् अलीकेन। क्रुधद्रुहोरुपसृष्टयोः कर्मेति कर्मसंज्ञा। दैवात् अनिष्टफलात् बिभीहि भयं जनय भीतो भव। हेरपित्वात् कित्त्वे गुणो न भवति। इतश्च जनात् इमं जनं वीक्ष्य जिह्रीहि लज्जस्व। ल्यब्लोपे पञ्चमी। विधौ लोट्॥ २७॥ ज० म०

दैवादित्यादि। हे काकुत्स्थ! अवशां परायत्तां रावणायत्तां वा शत्रुणा हृतां माम् अभिसंक्रुध्यन् दोषं विना मह्यं कुप्यन्। दैवात् अधर्मात् बिभीहि भयं कुरु। ञि भी लि भीत्याम्। दरिद्रो ङिर्ह्रस्व इत्यादिना पक्षे ङिः। तथा जनात् लोकात् जिह्रीहि लज्जितो भव, जनं वीक्ष्येत्यर्थः। यबर्थे पञ्चमी। विधौ णी। क्रुधद्रुहोरुपसर्गे सम्प्रदानस्य कर्मत्वमिति परः। स्वमते क्रियाव्याप्यत्वं विवक्ष्यम्॥ २७॥ भ०

त्वय्यसंक्रान्तायां मम कीदृशं भयं लज्जा चेति चेत्तदाह

चेतस इत्यादि। मे चेतसो वृत्तिः आत्मव्यापारः त्वयि तिष्ठति अनन्यमनस्कत्वात्, रक्षसा हृताया मम न सर्वं हृतम्। अपि तु शरीरं हृतं, नैव इदं मिथ्या। तथा हि, हे महाभूताधिष्ठानाः! सम्यञ्चः सर्वत्र वर्त्तमानाः अञ्चन्तीति क्विन्, अञ्चतावप्रत्यये समः समीति सम्यादेशः। एते मदर्थिताः मम वचः, सत्यं विदांकुर्वन्तु अवगच्छन्तु। प्रार्थनायां लोट्। विदांकुर्वन्त्विति निपातनम्॥ २८॥ ज० म०

त्वं पुनीहि पुनीहीति पुनन् वायो जगत्त्रयम्।
चरन् देहेषु भूतानां विद्धि मे बुद्ध्यविप्लवम्॥ २९॥
खमट द्यामटाटोर्वीमित्यटन्त्योऽतिपावनाः।
यूयमापो विजानीत मनोवृत्तिं शुभां मम॥ ३०॥

चेतस इत्यादि। शङ्का विमुच्यतामिति पूर्वोक्ते हेतुरयं, रक्षसा मम चित्तं न हृतं किन्तु शरीरमेव हृतं, चेतसस्तु वृत्तिः त्वयि स्थिता ; न चेत् एवं, तदा देवाः सम्यञ्चः सर्वत्र वर्त्तमाना इदं मम सत्यं वचो विदांकुर्वन्तु जानन्तु। ञाम् वा व्यां ग्यामिति वेत्तेर्ञाम्, सममञ्चतीति क्विप्, सहसन्तिर इति सम्यादेशः॥ २८॥ भ०

प्रत्येकं प्रार्थनामाह

त्वं पुनीहीत्यादि। हे वायो! पुनीहि पुनीहीति जगत्त्रयं पुनः पुनः पुनासि भृशं वा पुनासि इत्यभिप्रायः। त्वं जगत्त्रयं पुनन् भूतानां देहेषु चरन्। मम बुद्धेरविप्लवं बुद्धेः साधुत्वं विद्धि अवगच्छ। प्रार्थनायां लोट्। पूर्वत्र क्रियासमभिहारे लोडिति लोट्, तस्य परस्मैपदसम्बन्धी हिरादेशः। क्रियासमभिहारे द्विर्वचनं, पुनन्निति यथाविध्यनुप्रयोगः, पूर्वस्मिन्नित्यनेन पुनातेरनुप्रयोगः, तत्र हि क्रियासमुच्चयाभावात्॥ ॥ २९॥ ज० म०

त्वमित्यादि। हे वायो! त्वं जगत्त्रयं पुनीहि पुनीहीति पुनन् भृशं पुनः पुनः वा पुनासीत्यर्थः। मुहुर्भृशार्थे हितस्वध्वमिति सर्वस्मिन् काले हिः, वीप्सायां द्वित्वं लोकतः सिद्धम्। पुनर्द्वित्वस्याप्रयोगोऽप्यभिधानात्, इति हेतोः जगत्पवित्रीकरणाय भूतानां प्राणिनां देहेषु चरन्। मम बुद्धेः अविप्लवम् अव्यभिचारं विद्धि जानीहि॥ २९॥ भ०

खमित्यादि। यूयमापोऽतिपावनाः अतिपवित्राः खमट द्यामट उर्वीमट इति। वदन् अन्तरीक्षम् अटाम देवलोकम् अटाम भूर्लोकम् अटाम इत्येवम् अभिप्रायः। सर्वत्र अटन्त्यो मम शुभां चित्तवृत्तिं विजानीतेति। अत्र प्रार्थनायां लोट्। पूर्वत्र तु आकाशादिकारकभेदात् अनेकाटनक्रियासमुच्चयः। ततश्च समुच्चयेऽन्यतरस्यामिति लोट्। अटेति समुच्चये, सामान्यवचनस्येत्यनुप्रयोगः। आकाशाद्युपगामिनीनाम् अटनक्रियाणां पुनः अटनक्रियायाः सामान्याया अनुप्रयोगात्॥ ३०॥ ज० म०

खमटेत्यादि। हे आपः! यूयम् अतिपावना अतिपवित्राः। खम् आकाशं,

जगन्ति धत्स्व धत्स्वेति दधती त्वं वसुन्धरे!।
अवेहि मम चारित्रं नक्तन्दिवमविच्युतम्॥ ३१॥
रसान् संहर दीप्यस्व ध्वान्तं जहि नभो भ्रम।
इतीहमानस्तिग्मांशो वृत्तं ज्ञातुं घटस्व मे॥ ३२॥
स्वर्गे विद्यस्व भूव्यास्स्व भुजङ्गनिलये भव।

द्यां स्वर्गम्, उर्वीं भूमिञ्च अटन्त्यः। अटः पूर्ववत् सदा हिः। इति हेतोः मम शुभां मनोवृत्तिं यूयं विजानीत। प्रार्थनायां गी॥ ३०॥ भ०

जगन्तीत्यादि। त्वं वसुन्धरे! धत्स्व धत्स्वेति, अहं पुनः पुनः दधे भृशं वा दध इति। एवम् अभिप्राया जगन्ति दधती मम चारित्रं नक्तन्दिवम् अविच्युतम् अस्खलितम् अवेहि। अत्र प्रार्थनायां लोट्। पूर्वत्र क्रियासमभिहारे, तस्य आत्मनेपदसम्बन्धिनः स्वादेशः॥ ३१॥ ज० म०

जगन्तीत्यादि। हे वसुन्धरे! जगन्ति धत्स्व धत्स्व त्वं दधती भृशं पुनः पुनः वा जगन्ति दधासीत्यर्थः। श्नाभ्यस्तयोरातः इति धाञ आलोप्यः। अभ्यस्तस्यादिजवामिति खेर्धत्वम्। इति हेतोः त्वं मम चारित्रं चरित्रं नक्तन्दिवम् अविच्युतं रात्रौ दिवा च अस्खलितम् अवेहि जानीहि। प्रार्थने गी। नक्तन्दिवमिति अचिभ्रुवादित्वात् साध्यम्॥ ३१॥ भ०

रसानित्यादि। हे तिग्मांशो! त्वमपि अहं रसान् भौमान् संहर संहरामि इति। दीप्यस्व दीप्ये ध्वान्तं जहि हन्मि नभो भ्रम भ्रमामि इत्येवम् अभिप्रायः। ईहमानः जगत्यर्थक्रियासु चेष्टमानः मम वृत्तं चरित्रं ज्ञातुं घटस्व यतस्व। अत्र प्रार्थनायां लोट्। पूर्वत्र समुच्चयेऽन्यतरस्यामिति तस्य च यथायोगं हिस्वादेशः। ईहमान इति समुच्चये सामान्यवचनस्येत्यनुप्रयोगः। संहरेत्यादीनामीहतेः सामान्यवचनस्यानुप्रयोगात्॥ ३२॥ ज० म०

रसानित्यादि। हे तिग्मांशो! सूर्य! त्वम् ईहमानः चेष्टमानो रसान् जलानि संहरसि दीप्यसे ध्वान्तं हंसि नभो भ्रमसि। सर्वत्र मुहुर्भृशार्थत्वविवक्षया हिस्वौ। क्रियासमुच्चये हिस्वौ क्रियासामान्यस्यानुप्रयोग इति ईहतेरनुप्रयोग इति परे। इति हेतोः मम वृत्तं चरित्रं ज्ञातुं घटस्वेति प्रार्थना॥ ३२॥ भ०

स्वर्ग इत्यादि। त्वं च आकाश! स्वर्गे विद्यस्व अहं विद्ये, भुवि आस्स्व आसे,

एवं वसन् ममाकाश संबुध्यस्व कृताकृतम् ॥ ३३ ॥
चितां कुरु च सौमित्रे ! व्यसनस्यास्य भेषजम्।
रामस्तुष्यतु मे वाद्य पापां प्लुष्णातु वानलः ॥ ३४ ॥
राघवस्य मतेनाथ लक्ष्मणेनाचितां चिताम्।
दृष्ट्वा प्रदक्षिणीकृत्य रामं प्रगदिता वचः ॥ ३५ ॥

भुजङ्गनिलये पाताले भव भवामि इत्येवम् अभिप्रायः। सर्वत्र सन्तिष्ठन् मम कृताकृतं युक्तायुक्तं बुध्यस्व अवगच्छ। अत्र प्रार्थनायां लोट्। पूर्वत्र समुच्चयेऽन्यतरस्यामिति तस्य च यथायोगं हिस्वादेशः। वसन्निति समुच्चये सामान्यवचनस्येत्यनुप्रयोगः। विद्यमानादीनां सतः सामान्यवचनस्यानुप्रयोगात् ॥ ३३ ॥ ज० म०

स्वर्गे इत्यादि। हे आकाश ! त्वमपि वसन् स्वर्गे विद्यसे भुवि तिष्ठसि भुजङ्गनिलये पाताले वससि। पूर्ववत् भृशार्थत्वविवक्षया हिस्वौ। एवं ममापि कृतमकृतञ्च कर्म्म बुध्यस्वेति प्रार्थना ॥ ३३ ॥ भ०

एवं पृथिव्यादीनि महाभूतानि कथयित्वा लक्ष्मणमाह

चितामित्यादि। हे सौमित्रे ! व्यसनस्यास्य मिथ्यादूषणस्य भेषजं प्रतिक्रियां चितां कुरु। विधौ लोट्। मम अग्नौ विशुद्धाया रामो नियोगतः तुष्यतु अनलो वा मां पापां नियोगतः प्लुष्णातु दहतु, दहन् मर्त्त्यलोकात् मोचयतु इत्यर्थः। निमन्त्रणे लोट्। प्लुष प्रुष स्नेहनमोचनपूरणेष्विति क्र्यादिः मोचने द्रष्टव्यः, अनेकार्थत्वात् दाहे ॥ ३४ ॥ ज० म०

चितामित्यादि। हे सौमित्रे ! अस्य व्यसनस्य मिथ्यादूषणस्य भेषजं प्रतिक्रियां चितां कुरु। विधौ णी। अद्य वह्नौ विशुद्धायां मयि रामः तुष्यतु अनलो वा पापां मां प्लुष्णातु दहतु। आमन्त्रणे णी। प्लुषेरनेकार्थत्वादत्र दाहार्थः; स दाहार्थस्तु भौवादिक एव। यदुक्तम्—"प्रुष ग सेकपूर्त्त्योश्च प्लुषु दाहमू" इति ॥ ३४ ॥ भ०

राघवस्येत्यादि। अथ राघवस्य मतेन अनुज्ञातेन। क्तस्य च वर्त्तमाने इति षष्ठी। मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तः। तस्य वा मतेन अनुज्ञया चिताम् आचितां रचितां दृष्ट्वा प्रदक्षिणीकृत्य सीता रामं प्रगदिता वचो गदितुं प्रवृत्ता ॥ ३५ ॥ ज० म०

राघवस्येत्यादि। अथ अनन्तरं राघवस्य मतेन अनुज्ञया अनुज्ञातेन वा लक्ष्म-

न चैनां पक्षपातो मे धर्म्मादन्यत्र राघव ! ॥ २ ॥
अपि तत्र रिपुः सीतां नार्थयिष्यत दुर्मतिः।
क्रूरं जात्ववदिष्यच्च जात्वस्तोष्यत् श्रियं स्वकाम् ॥ ३ ॥

शुद्धा नाभविष्यद् न भूता, येनैव मया रचिता तेनैव इयं शुद्धेति भावः। हेतुहेतुमतोर्लिङित्यतः हेतुर्हेतुमांश्च लिङो निमित्तं, तत्र पालनस्य परिशुद्धेश्च हेतुहेतुमत्त्वे लिङ्निमित्ते, क्रियातिपत्तौ सत्यां भूते नित्यं लृङ्, तत्र वोताप्योरिति विकल्पेनाधिक्रियते। अत्रापालनोपनिपाताद्दतिपत्तिर्गम्यते। तदतिपाताद्धेतुमतोऽपि पक्षपातात् त्वया एवम् आचरितमिति चेदाह,—हे राघव ! धर्म्मात् अन्यत्र अधर्मे न मे पक्षपातोऽनुरागः ॥ २ ॥ ज० म०

आशङ्कां व्यावर्त्तयन्नाह

नाभविष्यदित्यादि। यदि इयं सीता शुद्धा नाभविष्यत् न भूतवती, तदा अहम् एनाम् अधक्ष्यं दग्धवानस्मि। दहो दाहे। दादेर्घः, झभान्तस्येति धः। हे राघव ! धर्म्मात् अन्यत्र मे मम पक्षपातो नास्त्यत्र, अपि तु धर्म्माश्रित एव ॥ २ ॥ भ०

इदानीं सीतारावणयोः यत् चेष्टितम् आसीत् तच्च अनेनावधार्य्य प्रकाशयन्नाह

अपीत्यादि। तत्र रिपुः स भवान् रिपुः स रावणः। भवच्छब्दोऽर्थाद्गम्यते तेनेतराभ्योऽपि दृश्यन्त इति त्रल्। अपि वाढं नार्थयिष्यत दुर्मतिः यदि अदुर्मतिः अदुष्टचेता अभविष्यत् तदा सीतां वाढं नार्थयिष्यत ; भार्य्या मम भवेति न प्रार्थितवान्। उताप्योः समर्थयोरिति अत्रापिशब्दो वाढार्थः लिङ्निमित्तं, तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते नित्यं लृङ्। तच्च वोताप्योरिति अनुवर्त्तते। अत्रार्थनक्रियायाः तद्विरुद्धदुर्मतित्वोपनिपातादतिपत्तिर्गम्यते। अर्थनमर्थः याचनं तत्करोतीति णिच्। नाहम् अवकल्पयामि यदि अदुर्मतिः अभविष्यत् क्रूररूपं जातु कदाचित् नावदिष्यत् नोक्तवान् श्रियं विभूतिं स्वकाम् आत्मीयाम् ईदृशी मे विभूतिः इति नास्तोष्यत् न स्तुतवान् स्तुतवांश्च जातुयदोर्लिङ् इत्यत्र जातुशब्दोऽनवक्लृप्तिश्च लिङो निमित्तं तच्चानवक्लृप्त्यमर्षयोरिति वर्त्तते। अत्र क्रूराभिधानक्रियाया विभूत्याः स्तवनक्रियायाश्च तद्विरुद्धदुर्मतित्वोपनिपातादतिपत्तिः केचित्तु लङपि जात्वोरित्येतदुदाहरन्ति तदयुक्तं, तस्या लिङ्निमित्तत्वात् ॥ ३ ॥ ज० म०

अपि तत्रेत्यादि। तत्र लङ्कायां रिपुः रावणः सीतामपि दुर्मतित्वात् नार्थयिष्यत न प्रार्थितवान् ? अपि तु प्रार्थितवानेव। क्रूरं परुषं जातु कदाचित् नावदिष्यत्

सङ्कल्पं नाकरिष्यच्च तत्रेयं शुद्धमानसा ।
मृषाऽमर्षमवाप्स्यस्त्वं राम ! सीतानिबन्धनम् ॥ ४ ॥
त्वयाऽद्रक्ष्यत किं नास्याः शीलं संवसता चिरम् ।
अदर्शिष्यन्त वा चेष्टाः कालेन बहुना न किम् ॥ ५ ॥

नोक्तवान् ? अपि तु उक्तवान् एव । स्वकाम् आत्मीयां श्रियं न अस्तोष्यत् ? अपि तु मम ईदृशी महती सम्पत्तिरिति स्तुतवान् एव । अत्र निषिद्धस्य प्रार्थनादिधात्वर्थस्य अनिष्पत्तेस्तौ ॥ ३ ॥ भ०

सङ्कल्पमित्यादि । तत्र इयं शुद्धमानसेति न अहम् अवकल्पयामि । यदि इयं शुद्धमानसा नाभविष्यत् । तत्र तस्मिन् रावणे इत्थं प्रीयमाणेऽपि सङ्कल्पम् अभिप्रायम् अकरिष्यत् कृतवती स्यात्, न च कृतवती शुद्धमानसत्वात् सत्यामर्षमवाप्स्यस्त्वमिति । हे राम ! न मर्षयामि यदि अशुद्धमानसा अभविष्यत्, तदा सीतानिबन्धनं सीताहेतुकम् अमर्षं क्रोधं सत्यसम्भूतम् अवाप्स्यस्त्वं प्राप्तः स्याः । तत्तु सत्यं, यतः शुद्धमानसा । अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि इत्यत्र अनवक्लृप्त्यमर्षयोर्लिङ्निमित्तं, तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते वा लृङ्; तत्र वोताप्योरित्यधिक्रियते । अत्र सङ्कल्पक्रियायाः सत्यामर्षक्रियायाश्च तद्धेतुभूतशुद्धमानसत्वोपनिपातादतिपत्तिः ॥ ४ ॥ ज० म०

सङ्कल्पमित्यादि । तत्र इत्थं प्रयतमाने रावणे सङ्कल्पं सङ्गमाभिप्रायम् इयं सीता नाकरिष्यत् न कृतवती, यत इयं शुद्धमानसा । शुद्धहृदयत्वात् धात्वर्थस्यानिष्पत्तिः । हे राम ! सीतानिबन्धनम् अमर्षं क्रोधम् अवाप्स्यः अवाप्तवानसि । इदं यथा सङ्कल्पक्रियायामसत्यां क्रोधस्यानिष्पत्तिरेव वाक्यात् गम्यते ॥ ५ ॥ भ०

अन्यथा अस्मिन् वस्तुनि नाहमेवैकः प्रमाणं, भवानपि प्रमाणमेवेति दर्शयन्नाह

त्वयेत्यादि । किं नाम तत् शीलं तत् चरित्रं यत् अस्याः सीतायाः शीलं चिरं कालं संवसता त्वया नाद्रक्ष्यत नोपलब्धमेव । चेतोधर्मत्वात् नोपलब्धमिति चेत् ? किं वा नाम चेष्टाः शीलनिबन्धनाः क्रिया बहुनापि कालेन त्वया नादर्शिष्यन्त न दृष्टा अभूवन् ? अपि तु दृष्टा एव । किंवृत्ते लिङ्लृटाविति किंशब्दो विभक्त्यन्तो गर्हा च लिङ्निमित्तं, तत्र गर्हायामित्यनुवर्त्तते, तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ्, कर्मण्येव चिण्वदिट् । अत्र शीलानुपलब्धिक्रियायाश्च

यावज्जीवमशोचिष्यो नाहास्यश्चेदिदं तमः।
भानुरप्यपतिष्यत् क्ष्मामक्षोभिष्यत चेदियम् ॥ ६ ॥
समपत्स्यत राजेन्द्र! स्त्रैणं यद्यत्र चापलम्।

तद्विरुद्धचिरवासोपनिपातादतिपत्तिर्गम्यते। तथा हि—"शीलं संवसता ज्ञेयं तच्च कालेन भूयसा" इति ॥ ५ ॥ ज० म०

त्वयेत्यादि। अस्याः सीतायाः शीलं चरित्रं चिरं चिरकालं संवसता सहवासं कुर्वता त्वया किं नाद्रक्ष्यत नोपलब्धम् अभूत्? अपि तु उपलब्धमेव। चेतोधर्म्मत्वात् नोपलब्धमिति चेदाह।—अस्याः चेष्टाः क्रिया वा, किं बहुना कालेन नादर्शिष्यन्त? अपि तु दृष्टा एव। अत्र शीलचेष्टादर्शनस्य धात्वर्थस्य संवासेनानिष्पत्तिर्वाक्यात् गम्यते। इनग्रहदृशश्च इति पक्षे चिण् ॥ ५ ॥ भ०

यावदित्यादि। अन्यच्च, लोकस्य अज्ञानमूलं परगृहोषितेति, एतावतैव अपरिशुद्धा इत्यज्ञानम् उत्पन्नम्; इदं तमः अज्ञानं यदि त्वं नाहास्यः न तत्यसि, तदा अस्या वैलक्षण्येन मरणात् अवश्यं यावज्जीवमशोचिष्यः शोकमेष्यसि। अतो मया अभिधीयमानः स्वयञ्च विमृशन् परिशुद्धा हि इयम् इत्यवेहि, येन न शोचिष्यसि। अत्र भविष्यदज्ञानत्यागो हेतुः, यावज्जीवशोचनं हेतुमत्; तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते, क्रियातिपत्तौ सत्यां भविष्यति नित्यं लृङ्। अत्राज्ञानत्यागक्रियायास्तद्विरुद्धोपदेशकत्वमर्षितज्ञानोत्पादनिपातादतिपत्तिर्गम्यते। अन्यच्च, अभूतवस्तूत्पादकसूचक उत्पातो भवति। न च तथाभूतोऽस्तीति दर्शयन्नाह।—यदि इयम् अक्षोभिष्यत दुष्टचित्ताभूत् तदा भानुरपि क्ष्मां पृथ्वीम् अपतिष्यत् गतोऽभूत्। अत्रापि क्षोभो हेतुः, भानुपतनं हेतुमत्, तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते, क्रियातिपत्तौ सत्यां भूते लृङ्। अत्र क्षोभक्रियायास्तद्विरुद्धाक्षोभोपनिपातादतिपत्तिः ॥ ६ ॥ ज० म०

यावज्जीवमित्यादि। चेत् यदि इदं तमः परगृहोषिता सीता न परिशुद्धेति लोकावज्ञानं त्वं नाहास्यः न त्यक्ष्यसि, तदा यावज्जीवम् अशोचिष्यः शोकं करिष्यसि। अन्यच्च, चेत् यदि इयं सीता अक्षोभिष्यत दुश्चेष्टा अभविष्यत्, तदा भानुरपि ऊर्द्ध्वगामी अंशुमानपि क्ष्मां पृथिवीं अपतिष्यत् तत्र पतितोऽभवदित्यर्थः ॥ ६ ॥ भ०

अन्यच्च, सत्येन सविता लोकपाला अदुष्टचित्तेषु सन्निधीयन्ते, इति दर्शयन्नाह

लोकपाला इहायास्यंस्ततो नामी कलिद्रुहः॥ ७॥
आश्चर्य्यं यच्च यत्र स्त्री कृच्छ्रेऽवर्त्स्यन्मते तव।
त्रासादस्यां विनष्टायां किं किमालप्स्यथाः फलम्॥ ८॥

समेत्यादि। स्त्रीणाम् इदं स्त्रैणं चापलं चारित्रबन्धनं तदत्र सीतायाम् हे राजेन्द्र! समपत्स्यत सम्पन्नम् अभूत्। ततः कारणात् अमी लोकपालाः एवमादयो मूर्त्तिमन्तः कलिद्रुहः पापस्य द्रोग्धारः इह नायास्यन् नागता अभूवन्। चापलम् अत्र हेतुः, लोकपालागमनं हेतुमत्, ततो हेतुहेतुमत्त्वे लिङ्निमित्ते, क्रियातिपत्तौ सत्यां भूते लृङ्। अत्र चापलाचरणक्रियायास्तद्विरुद्धचापललोपनिपातादतिपत्तिः॥ ७॥ ज० म०

समेत्यादि। हे राजेन्द्र! अत्र सीतायां यदि स्त्रैणं स्त्रीसम्बन्धि चापलं चाञ्चल्यं समपत्स्यत सम्पन्नम् अभूत्, तदा अमी कलिद्रुहः पापद्रोहणशीला लोकपाला इन्द्रादयो मूर्त्तिमन्तो नायास्यन् आगता नाभूवन्॥ ७॥ भ०

अन्यच्च, योषित्सामान्येन नेयं द्रष्टव्येति दर्शयन्नाह

आश्चर्य्यमित्यादि। यच्च यत्र या भवति स्त्री यत् तव कृच्छ्रे मते सङ्कटेऽभिप्राये अवर्त्स्यत् प्रवृत्तिमती, तत् आश्चर्य्यं चित्रमेव वर्त्तते नान्येति भावः। चित्रीकरणे च इत्यत्र यच्चयत्रयोरित्यनुवर्त्तते, यच्च-यत्रशब्द उपपदे गम्यमानं चित्रीकरणं लिङ्-निमित्तं, तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ्। अत्र कृच्छ्राभिप्रायानुवर्त्तनक्रियायास्तस्यां योषिदनुवर्त्तनं सामग्र्यभावात् गम्यते। अन्यच्च, स्वभावत एवं योषित् कातरा भवति, ततश्च परगृहावस्थित्या दुष्टेति क्रोधात् अहम् अवक्षिप्तेति त्रासात् अस्यां विपन्नायां प्रच्छन्नविषयं गतायां सत्यां किं किम् आलप्स्यथाः फलं न अहम् अवकल्पयामि। किं नाम तव फलं यत् आलप्स्यसि नैव इत्यर्थः। अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीत्यत्रापिशब्दात् किंवृत्तमनवक्लृप्तिश्च लिङो निमित्तं, तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भविष्यति लृङ्। अत्र फलप्राप्तिक्रियायास्तदन्यसामग्र्यभावात् गम्यते। किंकिलालप्स्यथाः फलमिति पाठान्तरम्। तदयुक्तम्; किंकिलास्त्यर्थेष्वित्येतस्य च लिङ्निमित्ताभावात्॥ ८॥ ज० म०

आश्चर्य्यमित्यादि। तव मतेऽभिप्राये यत्र देशे काले वा स्त्री योषित् यच्च कृच्छ्रे एवंविधे व्यसनेऽवर्त्स्यत् वर्त्तमानाऽभवत्, तत् आश्चर्य्यम्। न ह्येवंविधे कर्म्मणि पतिव्रता वर्त्तत इति भावः। स्त्रीवर्त्तमानक्रियाया कृसामग्र्यात् धात्वर्थानिष्पत्तिः।

यत्र यत्नामरिष्यत् स्त्री साध्वसाद्दोषवर्जिता।
तदसूयारतौ लोके तस्या वाच्यास्पदं मृषा ॥ ९ ॥
अमंस्यत भवान् यद्वत् तथैव च पिता तव।
नागमिष्यद्विमानस्थः साक्षाद्दशरथो नृपः ॥ १० ॥

अन्यच्च, स्वस्त्री परगृहोषिता दुष्टा, इत्यसौ विचिन्तेति चेदाह। त्रासात् अस्यां विपन्नायां मृतायां सत्यां त्वं नाम किं फलम् अलप्स्यथाः नाहं दुष्टेति सीतायाः त्रासाभावेन विपत्तेरभावात् फललाभस्यानिष्पत्तिः ॥ ८ ॥ भ०

अथवा नाहं दुष्टेत्यवगच्छन्त्या योषितस्त्रास एव नास्ति, येन गर्हितं मरणमाचरेदिति दर्शयन्नाह

यत्रेत्यादि। गर्हितमेतत् यच्च यत्र या भवति स्त्री दोषवर्जिता शुद्धचरित्रापि साध्वसात् पतित्रासात् अमरिष्यत् मृताभूत्, नैव इत्यर्थः। अदुष्टायाः साध्वसाभावात्। गर्हायाम् इत्यत्र यच्च-यत्रशब्द उपपदं, गर्हा च लिङ्निमित्तं, तस्मिन् लिङ्निमित्ते, क्रियातिपत्तौ सत्यां भूते वा लृङ्। अत्र मरणक्रियायास्तद्विरुद्धसाध्वसे परनिपाताद‍तिपत्तिर्गम्यते। यदि हि त्रासात् म्रियेत, दोष एव स्यात् इत्याह।—तन्मरणं लोकेऽस्मिन् असूयारतौ सत्स्वपि गुणेषु दोषाविष्करणपरे तस्या अदुष्टाया योषितः वाच्यास्पदं वचनीयाश्रयं मृषा अलीकमेव। दुष्टैव इयं मृषा अलीकमेव येन प्रच्छन्नमृतेति। यदि मरणम् अकरिष्यत् मृषावचनीयास्पदम् अभविष्यत् इति क्रियातिपत्तौ योज्यम्। अन्यथा वाक्यम् इदम् अशरीरकं स्यात्। इदम् अवगच्छन्त्या अनया प्रच्छन्नमरणं नानुष्ठितम् ॥ ९ ॥ ज० म०

यत्रेत्यादि। यच्च यत्र दोषवर्जिता सुचरित्रा पतिव्रता स्त्री साध्वसात् अमरिष्यत् मृता भूता तस्या मृताया असूयावहे दोषाविष्करणरते लोके वाच्यास्पदं वचनीयाश्रयं तन्मरणं मृषा मिथ्या भविष्यति। पतिव्रतायाः साध्वसाभावात् मरणक्रियाया अनिष्पत्तिः ॥ ९ ॥ भ०

अमंस्यतेत्यादि। यद्वत् यथा भवान् अमंस्यत दुष्टेति ज्ञातवान् तथैतत् यदि नान्यथा, तदा तव पिता दशरथः साक्षात् प्रत्यक्षो विमानस्थः सन् नागमिष्यत् नागतवान् स्यात्। अत्र दुष्टताभवनं हेतुः, दशरथागमनञ्च हेतुमत्, तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते, क्रियातिपत्तौ सत्यां भूते लृङ्। अत्र दुष्टताभवनक्रियायास्तद्विरुद्धादुष्टत्वोपनिपाताद‍तिपत्तिः ॥ १० ॥ ज० म०

नाकल्पस्यत्सन्निधिं स्थाणुः शूली वृषभवाहनः ।
नान्वभाविष्यतान्येन मैथिली चेत् पतिव्रता ॥ ११ ॥
आनन्दयिष्यदागम्य कथं त्वामरविन्दसत् ।
राजेन्द्र ! विश्वसूर्धाता चारित्रे सीतया क्षते ॥ १२ ॥

अमंस्यतेत्यादि । भवान् यच्च अमंस्यत दुष्टा इयमिति यच्च ज्ञातवान्, तत्तथैव चेत् यदि तदा तव पिता दशरथो विमानस्थः सन् साक्षात् प्रत्यक्षं नागमिष्यत् नागतवान्, अस्या दुष्टत्वाभावात् मरणस्यानिष्पत्तिः, दुष्टत्वज्ञानेनागमनस्यानिष्पत्तिः ॥ १० ॥ भ०

नाकल्पस्यदित्यादि । मैथिली पतिव्रता सती चेत् यदि त्वत्तोऽन्येन अन्वभाविष्यत परिभुक्ताभूत् । चिण्वदिट् । तदा अयं स्थाणुः महादेवः शूली वृषभवाहनः व्यक्तचिह्नः सन् सन्निधिं सन्निधानं नाकल्पस्यत् न कृतवान् स्यात् । तासि च क्लृप इति चकारात् स्ये च परस्मैपदे नेट् । अन्यानुभवनं हेतुः, स्थाण्वागमनं हेतुमत्, पूर्ववत् क्रियातिपत्तौ लृङ् । अवान्यानुभवनक्रियायास्तद्विरुद्धानन्यानुभवनोपपत्तिपातादतिपत्तिः ॥ ११ ॥ ज० म०

नाकल्पस्यदित्यादि । पतिव्रता मैथिली चेत् यदि त्वत्तोऽन्येन न अन्वभाविष्यत अनुभूता नाभूत्, तदा अयं शूली वृषभवाहनो व्यक्तचिह्नः स स्थाणुः महादेवः सन्निधिं सन्निधानं नाकल्पस्यत् न कल्पितवान् । सीतायाः पतिव्रतात्वात् अन्यानुभवस्यानिष्पत्तिः, अनुभूतत्वे सन्निधिकल्पनस्यानिष्पत्तिः । वृद्भ्यो नेम् पे इति वचनात् क्लृपेः पम् । हनग्रहदृशश्च इति भुवो मिण् ॥ ११ ॥ भ०

आनन्दयिष्यदित्यादि । हे राजेन्द्र ! सीतया चारित्रे क्षते कुत्सिते कृते सति एष धाता ब्रह्मा विश्वसूः सर्वस्य जगतः स्रष्टा अरविन्दसत् कमलासनः सन् आगत्य त्वां कथम् आनन्दयिष्यत् दर्शनाशीर्वादादिभिः आनन्दिभिः आनन्दितवान् ? गर्हितम् एतत् युक्तमागत्यानन्दयितुमित्यर्थः । विभाषा कथमि लिङ् चेति कथंशब्दो गर्हे च लिङ्निमित्तं, तस्मिन् क्रियातिपत्तौ भूते लृङ् । अवानन्दनक्रियायास्तद्विरुद्धचारित्रक्षतोपनिपातादतिपत्तिः ॥ १२ ॥ ज० म०

आनन्दयिष्यदित्यादि । हे राजेन्द्र ! सीतया चारित्रे क्षते सति अरविन्दसत् पद्मासनो ब्रह्मा विश्वसूः स्रष्टा धाता समस्तभुवनस्य धारयिता आगत्य त्वां कथम्

प्रणमन् ब्रह्मणा प्रोक्तो राजकाधिपतिस्ततः।
नाशोत्स्यन्मैथिली लोके नाचरिष्यदिदं यदि॥ १३॥
नामोच्याम वयं शङ्कामिहाधास्यन्न चेद्भवान्।
किंवा चित्रमिदं युक्तं भवान् यदकरिष्यत॥ १४॥

आनन्दयिष्यत् दर्शनाशीर्वादादिभिः कथम् आनन्दितवान्? पतितसंसर्गो हि निन्दाम् आवहति, सीतायाः चतचरित्वे आनन्दस्यानिष्पत्तिः॥ १२॥ भ०

प्रणमन्नित्यादि। ततोऽनन्तरं राजकाधिपतिः राजसमूहानां पतिः, राजकं राजसमूहः गोत्रोचेत्यादिना वुञ्। रामः प्रणमन् ब्रह्माणम् इत्यर्थात् ब्रह्मणा प्रोक्तः मैथिली यदि इदं वह्निप्रवेशनं न आचरिष्यत् नानुष्ठितवती, तदा लोके दुराराधे नाशोत्स्यत् न शुद्धाभूत्, किन्तु शुद्धा। शुध शौचे दिवादिः। अत्र अग्निप्रवेशाचरणं हेतुः, अशोधनञ्च हेतुमत्, तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ्। अत्राग्निप्रवेशनाचरणक्रियायास्तद्विरुद्धाचरणोपनिपातादतिपत्तिः॥१३॥ ज० म०

प्रणमन्नित्यादि। प्रणमन् ब्रह्मणे प्रणामं कुर्वन्। राजकाधिपती राजसमूहाधिपो रामो ब्रह्मणा प्रोक्तः। किं तदित्याह—मैथिली यदि इदं वह्निप्रवेशनं न आचरिष्यत् नानुष्ठितवती तदा लोके नाशोत्स्यत् शुद्धा नाभूत्। शुध यौ शौचे। धात्वर्थस्यात्रानिष्पत्तिर्वाक्यात् गम्यते॥ १३॥ भ०

नेत्यादि। चेत् यदि भवान् इह सीतां नाधास्यत् न रोपितवान्। अन्तर्भावितोऽत्र ण्यर्थः। तदा वयं किं शुद्धा नेति शङ्कां नामोच्याम न मुक्तवन्तः। अस्मिन् वस्तुनि अग्निप्रमाणत्वेन लोको गृह्णीयात् इत्येवम् उक्तवान्। अन्यथा ब्रह्मणः सर्ववेदित्वात् कथं शुद्धा स्यात्। अत्राधानं हेतुः, शङ्कात्यागश्च हेतुमान्, अस्मिन् लिङ्निमित्ते. क्रियातिपत्तौ भूते लृङ्। अत्रानाधानक्रियायास्तद्विरुद्धाधानोपनिपातादतिपत्तिर्गम्यते। अथवा न अहम् अवकल्पयामि, यदिदं परगृहोषिताया अग्निप्रवेशशोधनं युक्तं न्याय्यं, तत् भवान् किं चित्रम् अकरिष्यत् विस्मयनीयं ज्ञातवान्। एवं राज्ञः कस्य व्यवस्थार्थं विशेषे प्रवर्त्तनात् अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीत्यत्रापिशब्दात् किंवृत्तमनवक्लृप्तिश्च लिङ्निमित्तं, तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ्। अत्र चित्रीकरणक्रियाया अतिपत्तिस्तद्विरुद्धस्याचित्रीकरणस्योपनिपातादतिपत्तिर्गम्यते। यदि भवान् परीक्ष्य सीतायाः परिग्रहणम् अकरिष्यत लोकोऽपि तथा अकरिष्यत॥ १४॥ ज० म०

प्रावर्त्तिष्यन्त चेष्टाश्चेदयाथातथ्यवत् तव ।
अनुशास्ये त्वया लोके रामावर्त्स्यंस्तरां ततः ॥ १५ ॥
प्रणमन्तं ततो राममुक्तवानिति शङ्करः ।
किं नारायणमात्मानं नाभोत्स्यत भवानजम् ॥ १६ ॥

---

नामीक्ष्यामित्यादि । यदि भवान् इह वह्नौ सीतां नाधास्यत् न धारितवान्, तदा तस्यां शङ्कां वितर्कं वयमपि न अमीक्ष्याम न मुक्तवन्तः । अत धात्वर्थस्यानिष्पत्तिर्वाक्यात् गम्यते । इदं किंवा चित्रं किम् आश्चर्य्यं यत् भवान् युक्तम् अकरिष्यत कृतवान्, युक्तकरणत्वेन चित्रीकरणस्यानिष्पत्तिः ॥ १४ ॥ भ०

प्रधानानुयायित्वात् लोकस्येति दर्शयन्नाह

प्रावर्त्तिष्यन्तेत्यादि । चेत् यदि तव लोकव्यवस्थाकारिणः चेष्टाः कर्म्माणि अयाथातथ्यवत् यथा अज्ञाना असमीक्ष्यकारितया प्रवर्त्तन्ते तद्वत् प्रावर्त्तिष्यन्त, तथा प्रवर्त्तनात् त्वया अनुशास्ये व्यवस्थायां स्थाप्ये लोके । हे राम ! ताः चेष्टा अवर्त्स्यंस्तराम् अतिशयेन प्रावर्त्तिष्यन्त । न च तव प्रवृत्ताः, अत्र रामचेष्टाप्रवर्त्तनं हेतुः, लोकचेष्टाप्रवर्त्तनञ्च हेतुमत्, तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते भविष्यति लृङ् । अत्रापि परीक्ष्य स्वीकरणलक्षणक्रियायास्तद्विरुद्धपरीक्षितोपादानादतिपत्तिः । अयाथातथ्यवदिति वतिप्रत्ययान्तं क्रियाविशेषणम् । यथातथा यथापुरयोः पर्य्यायेणेति नञः पर्य्यायेण वृद्धिः । अवत्स्यंस्तरामिति तिङश्चेत्यातिशयिकस्तरः, किमेत्तिङित्याम् । न छव्यप्रशानिति रुत्वं, पूर्वस्यानुस्वारः ॥ १५ ॥ ज० म०

प्रावर्त्तिष्यन्तेत्यादि । हे राम ! तव व्यवस्थाकारिणः चेत् यदि चेष्टाः कर्म्माणि अयाथातथ्यवत् प्रावर्त्तिष्यन्त, यथा अज्ञाश्च असमीक्ष्यकारितया प्रवर्त्तन्ते तद्वत् प्रवृत्ता अभूवन्, तदयाथातथ्यप्रवर्त्तनात् त्वयाऽनुशास्ये दुष्टव्यवस्थायां स्थाप्यमाने लोके एवंविधा चेष्टा अवर्त्स्यंस्तराम् अतिशयेन प्रवृत्ता अभविष्यन् । किमेत्त्याम्वेति चतराम् । अत्र धात्वर्थस्यानिष्पत्तिर्वाक्यात् गम्यते ॥ १५ ॥ भ०

प्रणमन्तमित्यादि । ततो ब्रह्मवचनानन्तरं शङ्करो महादेवः वक्ष्यमाणं वचनं रामम् उक्तवान् प्रणमन्तं तमेव शङ्करम् इत्यर्थात् । किं नाम तत् यथा आत्मानं नारायणं अजं नित्यम् अस्मिन् प्रादुर्भावे भवान् नाभोत्स्यत न बुद्धवान् । अपि तु तथाविधं कर्म्म कुर्वन् ज्ञातवानेव । अत्र नारायणावबोधक्रियायास्तद्विरुद्धबोधनीपनिपातादतिपत्तिः ॥ १६ ॥ ज० म०

कोऽन्योऽकर्त्स्यदिह प्राणान् दृप्तानाञ्च सुरद्विषाम्।
को वा विश्वजनीनेषु कर्म्मसु प्राघटिष्यत ॥ १७ ॥
दैत्यक्षये महाराज ! यच्च यत्राघटिष्यथाः।
समाप्तिं जातु तत्रापि किं नानेष्यस्त्वमीहितम् ॥ १८ ॥

प्रणमन्तमित्यादि। ततो ब्रह्मवचनानन्तरं, प्रणमन्तं शङ्कराय प्रणामं कुर्वन्तं रामं शङ्कर उक्तवान्। किं तदित्याह।—भवान् अजं नारायणस्वभावम् आत्मानं किं नाभोत्स्यत न बुद्धवान्? अपि तु तथाविधं कर्म्म कुर्वन् ज्ञातवानेव। बुध्यौ ङ वेदने। झभान्तस्येति भः। अत्र नारायणबोधस्यानिष्पत्तिः ॥ १६ ॥ भ०

तदेव दर्शयन्नाह

क इत्यादि। यदि नारायणो न भवान्, तदा तस्मात् अन्यः को नाम सुरविद्विषां राक्षसानां दृप्तानां प्राणान् अकर्त्स्यत् छिन्नवान्? कृती च्छेदने। नैव। विश्वजनीनेषु सर्वलोकहितेषु कर्म्मसु अनुग्रहलक्षणेषु को नाम प्राघटिष्यत चेष्टितवान्। अत्राच्छेदनक्रियाया अघटनक्रियायाश्च तद्विरुद्धछेदनघटनोपनिपातादतिपत्तिः। सर्वत्र किंवृत्ते लिङ्लृटाविति क्रियातिपत्तौ भूते गर्हायां लृङ् ॥ १७ ॥ ज० म०

नारायणत्वं दर्शयति

कोऽन्य इत्यादि। यदि भवान् नारायणो न स्यात्, तदा तस्मात् अन्यः क इह जगति दृप्तानां सुरद्विषां रक्षसां प्राणान् अकर्त्स्यत् भिन्नवान्? न कोऽपि इत्यर्थः। अन्यच्च, विश्वजनीनेषु सर्वलोकहितेषु कर्म्मसु वा कः प्राघटिष्यत चेष्टितवान्? न कोऽपीत्यर्थः ॥ १७ ॥ भ०

दैत्यक्षय इत्यादि। हे महाराज! नैव इदम् अवकल्पयामि दैत्यक्षयनिमित्तम्। यच्च यत्र त्वम् अघटिष्यथाः, यां पुनः आत्मनो घटनां करिष्यसि, किन्तु पुनः प्रादुर्भावे घटिष्यसे। तत्रापि प्रादुर्भावे त्वम् ईहितं चेष्टितं जातु कदाचित् समाप्तिं सिद्धिं नानेष्यः किं न नेष्यसि? जातुयदोर्लिङिति जातुयच्छब्दौ अनवक्लृप्तिश्च लिङ्निमित्तं; तस्मिन् क्रियातिपत्तौ भविष्यति नित्यं लृङ्। अत्राघटनक्रियायाश्चातिपत्तिः ज्ञानेनोपलब्धं भविष्यत्प्रादुर्भावसमाप्तिनयनयोस्तद्विरुद्धयोरुपनिपातात् ॥१८॥ ज०म०

दैत्यक्षये इत्यादि। हे महाराज! दैत्यक्षये दैत्यक्षयनिमित्तं यत्र त्वम् अघटिष्यथाः अनुष्ठितवानसि। तत्र जातु कदाचित् त्वम् ईहितम् ईप्सितं किं समाप्तिं

तातं प्रसाद्य कैकेय्या भरताय प्रपीड़ितम् ।
सहस्रचक्षुषं रामो निनंसुः परिदृष्टवान् ॥ १९ ॥

प्रेता वरेण शक्रस्य प्राणन्तः कपयस्ततः ।
सञ्जाताः फलिनानम्र-रोचिष्णुद्रुमसद्रवः ॥ २० ॥

भ्रमरकुलाकुलोल्वणसुगन्धिपुष्पतरुः
तरुणमधूकसम्भवपिशङ्गिततुङ्गशिखः ।
शिखरशिलान्तरालपरिक्लृप्तजलावसरः
सरसफलश्रियं वितताम सुवेलगिरिः ॥ २१ ॥

पूर्णतां न अनेष्ठ: न नीतवानसि ? अपि तु नीतवानेव । अत्र घटनक्रियायाः समाप्ति-क्रियायाश्च ज्ञानानुपलब्धत्वादनिष्पत्तिः ॥ १८ ॥ भ०

तातमित्यादि । तातं दशरथं कैकेय्या प्रपीड़ितं सन्तापितं भरताय भरतार्थं राज्येऽभिषिच्यतामिति प्रसाद्य तद्विषये चित्तकालुष्यं त्याजयित्वा रामः सहस्रचक्षुषम् इन्द्रं परिदृष्टवान् संदृष्टवान् । निनंसुः नन्तुमिच्छुः ॥ १९ ॥ ज० म०

तातमित्यादि । तातं दशरथं प्रसाद्य कैकेयीविषये चित्तमालिन्यं त्याजयित्वा रामः सहस्रचक्षुषम् इन्द्रं दृष्टवान् । तातम् कीदृशं ?—कैकेय्या भरतार्थं राज्येऽभिषिच्यतामिति प्रपीड़ितम् । निनंसुः प्रणामं कर्त्तुमिच्छुः ॥ १९ ॥ भ०

प्रेता इत्यादि । ततः प्रणामानन्तरं शक्रस्य प्रसन्नस्य वरेण कपयः संग्रामे प्रेताः संग्रामे मृताः प्राणन्तो जीवन्तः सञ्जाताः संवृत्ताः । कीदृशा इत्याह—फलिनाः फलवन्तः । फलवर्हाभ्यामिनच् । अत एव आनम्राः नमनशीलाः रोचिष्णव: दीपनशीलाः ये द्रुमाः तेषु सद्रवः सदनशीलाः । दा-धेट्-सीत्यादिना सदे रुः ॥ २० ॥ ज०म०

प्रेता इत्यादि । ततोऽनन्तरं प्रसन्नस्य शक्रस्य वरेण युद्धे प्रेताः कपयः प्राणन्तो जीवन्तः सञ्जाताः । कीदृशाः ?—फलिनाः फलवन्तः । अत एव फलभारेण आनम्रा आनमनशीला रोचिष्णवो रोचनशीला ये द्रुमाः तेषु सद्रवः सदनशीलाः । सद-शद-सिधेटी करिति सदे रुः ॥ २० ॥ भ०

भ्रमरेत्यादि । वरेण च, स सुवेलगिरिः सरसाम् अभिनवां फलश्रियं विभूतिं वितताम विस्तृतवान् । भ्रमरकुलैः आकुला व्याप्ता उल्वणाः सुगन्धयश्च सपुष्पाः तरवो यत्र गिरौ । तरुणानाम् अभिनवानां मधूकानां यः सम्भवः तेन पिशङ्गिताः

संवाद्भिः सकुसुमरेणुभिः समीरै-
रानम्रैर्बहुफलधारिभिर्वनान्तैः।
श्चोतद्भिर्मधुपटलैश्च वानराणा-
माप्यानो रिपुबधसम्भवः प्रमोदः॥ २२॥

आयान्त्यः स्वफलभरेण भङ्गुरत्वं
भृङ्गालीनिचयचिता लतास्तरूणाम्।
सामोदाः क्षितितलसंस्थितावलोप्या
भोक्तॄणां श्रममुदयं न नीतवत्यः॥ २३॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्प्रदर्शनो नाम
एकविंशतितमः सर्गः।

तुङ्गाः शिखाः शिखराणि यत्र। शिखरशिलानाम् अन्तरालेषु परिक्लृप्ता जलावसरा जलाधारा यत्र। जलमवसरत्येभ्य इति ऋदोरप्॥ २१॥ ज० म०

भ्रमरकुलेत्यादि। सुवेलगिरिः अचिरेण सरसानां फलानां श्रियं विततवान्। कीदृशः?—भ्रमरसमूहेन व्याप्ता उत्कटशोभनगन्धयुक्ताः पुष्पसहिता वृक्षा यत्र, अभिनवानां मधूकपुष्पाणां सम्भवोऽस्तित्वं तेन पिशङ्गिता तुङ्गा उच्चाः शिखा वृक्षशिखा यत्र, शिखरशिलान्तरालेषु परिक्लृप्ता जलावसरा जलाधारा यत्र॥ २१॥ भ०

संवाद्भिरित्यादि। सम्भवत्यस्मादिति सम्भवः। रिपुबधः सम्भवो यस्य प्रमोदस्य सः। वानराणाम् आप्यानः वृद्धिं गतः। व्यवस्थितविभाषाविज्ञानात् सोपसर्गस्य प्यायतेरिति पीभावो न भवति, ओदितश्चेति निष्ठानत्वम्। कैः आप्यानः?—समीरैः सकुसुमरेणुभिः संवाद्भिः वहद्भिः, वनान्तैः फलभरभारिभिः अत एव आनम्रैः, मधुकरपटलैश्चोतद्भिः, मध्वित्यर्थात्॥ २२॥ ज० म०

संवाद्भिरित्यादि। वानराणां रिपुबधसम्भवः प्रमोदः समीरादिभिः आप्यानो वृद्धिं गतः। कीदृशैः समीरैः?—संवाद्भिः सम्यगवैपरीत्येन वहद्भिः, पुष्पपरागसहितैः। वनान्तैः कीदृशैः?—वरफलशालिभिः उत्तमफलयुक्तैः, अत एव आनम्रैः आनमनशीलैः। मधुपटलैः कीदृशैश्च?—श्चोतद्भिः क्षरद्भिः॥ २२॥ भ०

आयान्त्य इत्यादि। तरूणां लताः स्वफलभरेण भङ्गुरत्वं स्वभेद्यत्वम् आयान्त्यः

# द्वाविंशः सर्गः ।

ततो रामो हनूमन्तमुक्तवान् हृष्टमानसम् ।
अयोध्यां श्वः प्रयातासि कपे ! भरतपालिताम् ॥ १ ॥

---

गच्छन्त्यः, सामोदाः, अत एव भृङ्गालीनिचयचिताः, क्षितितलसंस्थितैरेव अवलोप्तुं शक्याः, भोक्तॄणां कपीनां श्रमं चित्तकायक्लेशम् उदयं हर्षिं न नीतवत्यः । विनीतवत्य इति पाठान्तरम् । उत्पूर्वादयतेः कर्त्तर्य्यच् । हर्षिम् उपगच्छन्तं श्रमम् अपनीतवत्य इत्यर्थः ॥ २३ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लुङ्विलसितो नाम अष्टमः परिच्छेदः ।

काव्यस्य सीतासंशोधनं नाम एकविंशः सर्गः ।

आयान्त्य इत्यादि । तरूणां लता भोक्तॄणां श्रमम् उदयं हर्षिं न नीतवत्यः न प्रापिताः, अपनीतवत्य इत्यर्थः । विनीतवत्य इति क्वचित् पाठः । कीदृश्यः लताः ?— फलभरेण भङ्गुरत्वं स्वयमेव भेद्यत्वम् आयान्त्यः प्राप्नुवत्यः, भ्रमरश्रेणीसमूहव्याप्ताः, आमोदसहिताः, क्षितितलसंस्थितैरेव अवलोप्याः अवलोप्तुं शक्याः ॥ २३ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायामेकविंशतितमः सर्गः ।

---

इतः प्रभृति लुटमधिकृत्य विलसितमाह । तत्र भविष्यदनद्यतने लुट् ।—

तत इत्यादि । ततः सीतासंशोधनानन्तरं, रामो हनूमन्तं तुष्टमानसं स्वामिकार्य्यस्य निष्पादितत्वात् उक्तवान् । हे कपे ! श्वोदिने अयोध्यां भरतपालितां प्रयातासि गन्तासि । तासस्त्योर्लोपः ॥ १ ॥ ज० म०

अथ लुटमधिकृत्योच्यते, तस्याः परमते लुट्संज्ञा ।

तत इत्यादि । ततः सीताशुद्ध्यनन्तरं रामो हनूमन्तम् उक्तवान् । कीदृशम् ?— प्रमुदितहृदयं स्वामिकार्य्यस्य निष्पादितत्वात् । किम् उक्तवान् इत्याह ।—हे कपे ! भरतरक्षिताम् अयोध्यां रामपुरीं श्वोऽनागतेऽह्नि प्रयातासि गमिष्यसि । भवद्भूतभव्ये इति भविष्यति त्नौ । भविष्यत्सामान्ये ष्या विधानात् श्व इत्यस्य न वैयर्थ्यम् ॥ १ ॥ भ०

गाधितासे नभो भूयः स्फुटन्मेघघटावलि।
ईक्षितासेऽम्भसां पत्युः पयः शिशिरशीकरम् ॥ २ ॥
सेवितासे प्लवङ्ग ! त्वं महेन्द्राद्रेरधित्यकाः।
व्युत्क्रान्तवर्त्मनो भानोः सहज्योत्स्नाः कुमुद्वतीः ॥ ३ ॥
चन्दनद्रुमसंच्छन्ना निराकृतहिमश्रथाः।
दर्शितारस्त्वया ताश्च मलयोपत्यकाः शुभाः ॥ ४ ॥

गाधितास इत्यादि। भूयः पुनरपि नभः गाधितासे प्रस्थातासे। गाधृ प्रतिष्ठालिप्सयोरित्यनुदात्तेत्। लङ्घनवातात् स्फुटन्त्यः खण्डशो भवन्त्यः मेघघटा मेघपङ्क्तयो यत्र नभसि। अम्भसां पत्युः समुद्रस्य पयः शिशिरशीकरं ईक्षितासे द्रष्टासि ॥ २ ॥ ज० म०

गाधितासे इत्यादि। भूयः पुनरपि नभः आकाशं गाधितासे। गाधृ स्यात् प्रतिष्ठायन्ययोः। कीदृशं नभः ?—स्फुटन्त्यः खण्डशो भवन्त्यः मेघघटा मेघावल्यो यत्र। अम्भसां पत्युः समुद्रस्य शीतल-कणकं जलम् ईक्षितासे ॥ २ ॥ भ०

सेवितास इत्यादि। हे प्लवङ्ग ! भानोः आदित्यस्य व्युत्क्रान्तवर्त्मनः अत्युच्चत्वात् अतिक्रान्तमार्गस्य महेन्द्राद्रेः अधित्यकाः उपरिभागान् कुमुद्वतीः विद्यमानकुमुदाः सह ज्योत्स्नाया पश्चात् विशेषणसमासः, सज्योत्स्ना वा कुमुद्वत्यः कुमुदाकरा यासु अधित्यकासु ताः त्वं सेवितासे अनुभवितासि। प्लवं गच्छतीति खच्, प्लवङ्गतीति कर्त्तरि अच् वा। उख उखीत्यत्र वर्गिः पठ्यते ॥ ३ ॥ ज० म०

सेवितासे इत्यादि। हे प्लवङ्ग ! हनुमन् ! महेन्द्रपर्वतस्य ऊर्द्धभूमीः सेवितासे। महेन्द्राद्रेः कीदृशस्य ?—भानोः सूर्य्यस्य उल्लङ्घितमार्गस्य उच्चत्वात्। अधित्यकाः कीदृशीः ?—ज्योत्स्नाकुमुद्वतीभ्यां सह वर्त्तमानाः ॥ ३ ॥ भ०

चन्दनेत्यादि। ताश्च पूर्वं दृष्टाः मलयोपत्यकाः मलयासन्ना भुवः। शुभाः चन्दनद्रुमसंच्छन्नत्वात् निराकृतहिमश्रथाः तिरस्कृतचन्द्राः त्वया दर्शितारः श्वो द्रष्टव्याः। कर्म्मणि लुट्। चिण्वदिट् च इति चेति सकारलोपः। हिमं श्रथ्नाति मुञ्चतीति हिमश्रथः चन्द्रः। श्रथ मोचनप्रतिहर्षयोरिति कर्म्मण्यण्। अचो ढ़ेत्यादिना अनुनासिकलोपो निपात्यते ॥ ४ ॥ ज० म०

चन्दनद्रुमेत्यादि। त्वया ताः पूर्वं दृष्टा मलयाद्रेः आसन्नभूमयो द्रष्टव्याः।

प्रतन्व्यः कोमला विन्ध्ये सहितारः स्यदं न ते ।
लताः स्तवकशालिन्यो मधुलेहिकुलाकुलाः ॥ ५ ॥
द्रष्टासि प्रीतिमानारात् सखिभिः सह सेविताम् ।
सपक्षपातं किष्किन्ध्यां पूर्वक्रीड़ां स्मरन् मुहुः ॥ ६ ॥
त्वया सन्दर्शितारौ ते माल्यवद्दण्डकावने ।
उपद्रुतश्चिरं द्वन्द्वैर्ययोः क्लिशितवानहम् ॥ ७ ॥

---

हनग्रहदृश्चश्च इति णिच्। कीदृश्यः ?—चन्दनदृश्चव्याप्ताः अत एव शुभाः सुखद-त्वात्। निराकृतो हिमश्रथः चन्द्रो याभिः। हिमं श्रथ्नाति मुञ्चति इति हिमश्रथः। श्रन्थ ग मोचे इत्यस्य घञन्तस्य स्यदेधावोदेत्यादिना निपातनाद्रूपम् ॥ ४ ॥ भ०

प्रतन्व्य इत्यादि। विन्ध्ये लताः स्तवकशालिन्यः कुसुमस्तवकोपेताः मधुलेहि-कुलाकुलाः भ्रमरकुलसङ्कुलाः प्रतनुत्वात् कोमलत्वाच्च गच्छतः ते तव स्यदं जवं न सहितारः न सहिष्यन्ते। स्यदो जव इत्यनुनासिकलोपो निपात्यते ॥ ५ ॥ ज० म०

प्रतन्व्य इत्यादि। विन्ध्यपर्वते लताः ते तव स्यदं वेगं न सहिष्यन्ते। कीदृश्यः ?—प्रतन्व्यः अतिकृशाः, कोमला मृद्व्यः, स्तवकयुक्ताः अत एव भ्रमरसमूहव्याप्ताः ॥५॥ भ०

द्रष्टासीत्यादि। किष्किन्ध्याञ्च आरात् नातिदूरे द्रष्टासि। प्रीतिमान् जात-प्रीतिः सन्। सखिभिः मित्रैः सह सेविताम् अनुभूताम्। एवञ्च कृत्वा पूर्वक्रीडां स्मरन् मुहुः। शेषत्वेन विवक्षितत्वात् षष्ठी न भवति। सपक्षपातं सानुरागमिति क्रियाविशेषणम् ॥ ६ ॥ ज० म०

द्रष्टासीत्यादि। आरात् दूरे मित्रैः सहानुभूतां किष्किन्ध्यां सपक्षपातं सानु-रागं यथा स्यात् तथा त्वं पूर्वक्रीड़ां मुहुः वारंवारं स्मरन् प्रीतियुक्तः सन् द्रष्टासि। वर्त्तोऽकिदिति रः ॥ ६ ॥ भ०

त्वयेत्यादि। माल्यवान् पर्वतः दण्डकावनं दण्डकेति नाम अरण्यं ते त्वया सन्दर्शितारौ। कर्मणि लुट्। ययोः माल्यवद्दण्डकावनयोः व्यवस्थितैः द्वन्द्वैः सीतावियोगदुःखैः चिरम् उपद्रुतोऽभिभूतः सन् अहं क्लिशितवान् पीड़ाम् अनुभूत-वान्। क्लिशः क्त्वानिष्ठयोरितीट्। मृड-मृदेत्यादिना कित्त्वम् ॥ ७ ॥ ज० म०

त्वयेत्यादि। माल्यवान् पर्वतो दण्डकावनञ्च ते त्वया द्रष्टव्ये। हनग्रहदृश्चश्च इति णिच्। ययोः माल्यवद्दण्डकावनयोः चिरं चिरकालं द्वन्द्वैः सीतावियोगजैः दुःखैः उपद्रुतः सन् अहं क्लिशितवान्। पूक्लिशेति पक्षे इम् ॥ ७ ॥ भ०

आसारौ भवता रम्यावाश्रमौ हरिणाकुलौ।
पुण्योदकद्विजाकीर्णौ सुतीक्ष्णशरभङ्गयोः॥ ८॥
अतिक्रान्ता त्वया रम्यं दुःखमत्रेस्तपोवनम्।
पवित्रचित्रकूटेऽद्रौ त्वं स्नातासि कुतूहलात्॥ ९॥
ततः परं भरद्वाजो भवता दर्शिता मुनिः।
द्रष्टारश्च जनाः पुण्या यामुनाम्बुक्षतांहसः॥ १०॥
स्यन्त्वा स्यन्त्वा दिवः शम्भोर्मूर्ध्नि स्कन्त्वा भुवं गताम्।
गाहितासेऽथ पुण्यस्य गङ्गां मूर्त्तिमिव द्रुताम्॥ ११॥

आप्तारावित्यादि। सुतीक्ष्णशरभङ्गयोः रम्यौ आश्रमौ हरिणाकुलौ पुण्यैः उदकैः द्विजैः पक्षिभिश्च आकीर्णौ भवता आप्तारौ प्राप्तव्यौ॥ ८॥ ज० म०

आप्तारावित्यादि। भवता सुतीक्ष्णशरभङ्गयोः मुन्योः आश्रमौ प्राप्तव्यौ। कीदृशौ?—रमणीयौ, मृगव्याप्तौ, पुण्यजलविप्रव्याप्तौ॥ ८॥ भ०

अतिक्रान्तेत्यादि। अत्रेश्च तपोवनं रम्यत्वात् त्वया दुःखम् अतिक्रान्ता अतिक्रमितव्यम्। चित्रकूटे च अद्रौ पवित्रे पुण्ये कुतूहलात् त्वं स्नातासि॥ ९॥ ज० म०

अतिक्रान्तेत्यादि। अत्रेः मुने रम्यं तपोवनं त्वया दुःखं यथा स्यात् तथा अतिक्रान्ता अतिरमणीयत्वात् कष्टेन त्वं त्यक्ष्यसीति भावः। पवित्रे चित्रकूटपर्वते च त्वं कुतूहलात् स्नातासि इत्यर्थः॥ ९॥ भ०

तत इत्यादि। ततः चित्रकूटात् परं गच्छता भवता भरद्वाजो मुनिः दर्शिता द्रष्टव्यः। जनाश्च पुण्याः यमुनाम्बुक्षतांहसः यमुनाजलस्य स्नानात्पानाच्च क्षयितपापाः द्रष्टारो द्रष्टव्या वा। चिण्वदिट् च॥ १०॥ ज० म०

तत इत्यादि। ततः चित्रकूटगमनात् परं भरद्वाजो मुनिः त्वया द्रष्टव्यः। तत्र पुण्ययुक्ता जनाश्च द्रष्टारो द्रष्टव्याः। यमुनाजलविनाशितपापाः॥ १०॥ भ०

स्यन्त्वेत्यादि। अथ अनन्तरं या गङ्गा दिवः स्यन्त्वा स्यन्त्वा स्रुत्वा स्रुत्वा आभीक्ष्ण्येन स्रुत्वेति चकारात् क्त्वाच्। आभीक्ष्ण्ये च द्वे भवतः। शम्भोः मूर्ध्नि स्कन्त्वा गत्वा क्षितिं गताम्। क्त्वि स्कन्दस्यन्दोरित्यनुनासिकलोपप्रतिषेधः। तां पुण्यस्य मूर्त्तिमिव द्रुतां गाहितासे स्नातुं विलोभितासि॥ ११॥ ज० म०

स्यन्त्वेत्यादि। अथ अनन्तरं गङ्गां गाहितासे तस्याम् अवगाहं करिष्यसि।

तमसाया महानीलपाषाणसदृशत्विषः ।
वनान्तान् बहु मन्तासे नागराक्रीड़शाखिनः ॥ १२ ॥
नगरस्त्रीस्तनन्यस्तधौतकुङ्कुमपिञ्जराम् ।
विलोक्य सरयूं रम्यां गन्ताऽयोध्या त्वया पुरी ॥ १३ ॥
आनन्दितारस्त्वां दृष्ट्वा प्रष्टारश्चावयोः शिवम् ।
मातरः सह मैथिल्यास्तोष्टा च भरतः परम् ॥ १४ ॥

कीदृशीम् ?—दिवः स्वर्गात् स्यन्त्वा स्यन्त्वा स्नुत्वा स्नुत्वा शम्भोः शिरसि मूर्ध्नि स्कन्त्वा गत्वा क्षितिं गतां, पुण्यस्य द्रवीभूतां मूर्त्तिमिव। न क्त्वा सेट् इति कित्त्वनिषेधात् नलोपाभावः ॥ ११ ॥ भ०

तमसाया इत्यादि। तमसायाश्च नद्याः वनान्तान् वनोपकण्ठान् महानील-मणेस्तुल्यत्विषोऽतिनीलत्वात् नागराणाम् आक्रीड़ो रन्तव्यं तस्माच्चिण: बहु मन्तासि ज्ञापितासि ॥ १२ ॥ ज०म०

तमसाया इत्यादि। त्वं तमसाया नद्याः वनान्तान् वनप्रदेशान् बहु मन्तासि ज्ञापितासि। कीदृशान् ?—अतिनीलत्वात् महानीलप्रस्तरतुल्यकान्तीन्, नागराणाम् आक्रीड़ाः शाखिन उद्यानवृक्षा यत्र। साक्षिण इति पाठे—नागराणाम् आक्रीडे रमण साक्षिणः ॥ १२ ॥ भ०

नगरेत्यादि। नगरस्त्रियः अयोध्यास्त्रियः तासां स्तनेषु यत् पूर्वन्यस्तं पश्चात् धौत कुङ्कुमं तेन पिञ्जरां कपिशाम्। अत एव रम्यां सरयूं विलोक्य अयोध्या पुरी त्वया गन्ता गन्तव्या ॥ १३ ॥ ज० म०

नगरेत्यादि। नगरस्त्रीणाम् अयोध्यास्त्रीणां स्तनेषु पूर्वं न्यस्तं पश्चात् धौतं यत् कुङ्कुमं तेन पिञ्जरां रमणीयां सरयूं नदीं विलोक्य त्वया अयोध्या पुरी गन्तव्या ॥ १३ ॥ भ०

आनन्दितार इत्यादि। अयोध्यायाञ्च त्वां दृष्ट्वा मातरः कौसल्याद्याः आनन्दि-तारः आनन्दिष्यन्ति। आवयोश्च रामलक्ष्मणयोः सह मैथिल्याः शिवं कल्याणं प्रष्टारः प्रश्नं करिष्यन्ति। भरतश्च श्रुत्वा परम् अत्यर्थं तोष्टा प्रीतिं कर्त्ता। आन-न्दितायामनित्यण्यन्ता इति दर्शनं तेषां णिज् न भवति। अन्यथा णेरनिटीति णिलोपो न प्राप्नोति ; ततश्च आनन्दयितार इति स्यात्। अथवा आमन्त्रणमामन्त्रः

आख्यातासि हतं शत्रुमभिषिक्तं विभीषणम्।
सुग्रीवञ्चार्जितं मित्रं सर्वांश्चागामुकान् द्रुतम्॥ १५॥
गन्तारः परमां प्रीतिं पौराः श्रुत्वा वचस्तव।
श्रात्वैतत् सम्मुखीनश्च समेता भरतो ध्रुवम्॥ १६॥
गते त्वयि पथानेन वयमप्यंहितास्महे।
लब्धाहेऽहं धृतिं प्राप्ते भूयो भवति सम्मुखे॥ १७॥

इति घञन्तादाचारे सर्वप्रातिपदिकेभ्य इति क्विप्, तदन्तात्तारसेरिट् अतो लोपे च रूपम्। सह मैथिल्योरिति पाठान्तरम्। तत्रापि बहुव्रीहौ नद्यृतश्चेति कब्न भवति समासान्तविधिरनित्य इति कृत्वा॥ १४॥ ज० म०

आनन्दितार इत्यादि। तव अयोध्यायां त्वां दृष्ट्वा मातरः कौसल्याद्या आनन्दितारः आनन्दिता भविष्यन्ति। मैथिल्या सहितयोः आवयो रामलक्ष्मणयोः शिवं कल्याणं प्रष्टारः। प्रच्छौ श इत्तीषे। भरतः परम् अत्यर्थं तोष्टा तोक्ष्यति॥ १४॥ भ०

आख्यातासीत्यादि। हतं शत्रुं रावणं लङ्कायाम् अभिषिक्तं विभीषणम्, अर्जितं मित्रञ्च सुग्रीवं विशिष्टम् आख्यातासि कथयितासि। सर्वांश्च अस्मान् द्रुतम् आगामुकान् आगमनशीलान्॥ १५॥ ज० म०

आख्यातासीत्यादि। एतानि आख्यातासि वक्ष्यसि। सर्वान् अस्मान् द्रुतं शीघ्रम् आगमनशीलांश्च॥ १५॥ भ०

गन्तार इत्यादि। तव वचनं श्रुत्वा पौराः पौरजनाः परमां प्रीतिं गन्तारो गमिष्यन्ति। एतत् मदागमनवृत्तान्तं श्रुत्वा सम्मुखीनः प्रतिबिम्बाश्रय एव सम्मुखो भूत्वा मामेव आगमिष्यति भरतो ध्रुवम् असंशयम्॥ १६॥ ज० म०

गन्तार इत्यादि। तव एतद्वचनं श्रुत्वा पौराः पुरवासिजनाः परमां प्रीतिं गन्तारः गमिष्यन्ति। एतत् मदागमनं श्रुत्वा भरतोऽपि सम्मुखीनः सन् समेता समागमिष्यति॥ १६॥ भ०

गत इत्यादि। त्वयि पथा अनेन मया अभिहिते गते वयमपि अंहितास्महे प्रयातास्म। अहि गतौ। भूयश्च पुनरपि भवति त्वयि सम्मुखे प्राप्ते धृतिम् अहं लब्धाहे प्राप्तास्मि। एतीति तासि सकारस्य हकारः॥ १७॥ ज० म०

गते त्वयीत्यादि। त्वयि गते सति अनेन ख्यातेन पथा वयमपि अंहितास्महे

गते तस्मिन् गृहीतार्थे रामः सुग्रीवराक्षसौ ।
उक्तवान् श्वोऽभिगन्तास्थो युवां सह मया पुरम् ॥ १८ ॥
द्रष्टास्थस्तत्र तिस्रो नो मातॄस्तुष्टान्तरात्मनः ।
आत्यन्तीनं सखित्वञ्च प्राप्तास्थो भरताश्रयम् ॥ १९ ॥
नैवं विरहदुःखेन वयं व्याघानितास्महे ।
श्रमोऽनुभविता नैवं भवद्भ्याञ्च वियोगजः ॥ २० ॥
एवं युवां मम प्रीत्यै कल्प्तास्थः कपिराक्षसौ ।
गन्तुं प्रयतितासाथे प्रातः सह मया यदि ॥ २१ ॥

गमिष्यामः । अहि ङ गतौ । भूयः पुनरपि भवति त्वयि सम्मुखे प्राप्ते सति अहं धृतिं लब्धाहे प्राप्स्यामि ॥ १७ ॥ भ०

गते तस्मिन्नित्यादि । तस्मिन् हनूमति गृहीतार्थे अवगतसन्देशार्थे गते सति रामः सुग्रीवराक्षसौ उक्तवान् । युवां मया सह श्वोदिने अभिगन्तास्थः पुरम् अयोध्यां गमिष्यथः ॥ १८ ॥ ज० म०

गते तस्मिन्नित्यादि । तस्मिन् गृहीतप्रयोजने हनूमति गते सति रामः सुग्रीव-विभीषणौ उक्तवान् । किं तदित्याह—श्वः प्रातः मया सह युवां पुरम् अयोध्यां गन्तास्थः गमिष्यथः ॥ १८ ॥ भ०

द्रष्टास्थ इत्यादि । तत्र च पुनः पुर्य्यां नोऽस्माकं तिस्रो मातॄः कौसल्याद्याः । स्वस्रादित्वान्न ङीप् । शसि प्रथमयोः पूर्वसवर्णदीर्घत्वम् । तुष्टान्तरात्मनः हृष्टमानसाः द्रष्टास्थः । भरताश्रयञ्च भरतनिबन्धनञ्च सखित्वं मित्रत्वम् आत्यन्तीनम् । अत्यन्तं गामीति अस्मिन्नर्थे अवारपारेत्यादिना खः । प्राप्तास्थः लब्धासाथे ॥ १९ ॥ ज० म०

द्रष्टास्थ इत्यादि । तत्र अयोध्यायां नोऽस्माकं हृष्टमानसाः तिस्रो मातॄः युवां द्रष्टास्थः द्रक्ष्यथः । अत्यन्तगं भरताश्रयं सखित्वं मित्रत्वञ्च प्राप्तास्थः प्राप्स्यथः ॥ १९ ॥ भ०

नैवमित्यादि श्लोकद्वयम् । हे कपिराक्षसौ ! प्रातः मया सह गन्तुं यदि प्रयतितासाथे यत्नं कर्त्तास्थः । एवं सति युष्मद्विरहदुःखेन वयं न व्याघानितास्महे न पीड़िता भवितास्मः । कर्म्मणि लुट् । चिण्वदिट् च । संयोजितास्मह इति पाठान्तरम् । न संयोजितास्महे न भवितास्मः । युजेर्ण्यन्तस्य चिण्वदिट्, इटोऽसिद्धत्वात् नेडन्ति, णेरनिटीति णिलोपः । भवद्भ्याञ्च वियोगजः श्रमः खेदो न

उक्तवन्तौ ततो रामं वचः पौलस्त्यवानरौ।
अनुग्रहोऽयं काकुत्स्थ! गन्तास्वो यत्त्वया सह ॥ २२॥
अनुमन्तास्वहे नावां भवन्तं विरहं त्वया।
अपि प्राप्य सुरेन्द्रत्वं किं नु प्रत्तं त्वयास्पदम्॥ २३ ॥

अनुभविता। अत्रापि चिरणदिट्। एवं मम प्रीत्यै युवां कल्प्तास्थः सम्पादितास्थः। लुटि च क्लृप इति तङभावपक्षः। तासि च क्लृप इतीट्प्रतिषेधः। क्लृपिसम्पद्यमाने चतुर्थी॥ २०॥ २१॥ ज० म०

नैवमित्यादि श्लोकद्वयम्। हे कपिराक्षसौ! सुग्रीवविभीषणौ! प्रातः मया सह गन्तुं प्रयतितासाथे प्रयत्नं करिष्यथ इति वक्ष्यमाणश्लोकेनान्वयः। एवं सति तदा विरहदुःखेन युष्मद्वियोगकष्टेन वयं न व्याघानितास्महे न पीड़ितास्महे। कर्म्मणि ण्वी। हनग्रहदृशश्च इति मिण्, खेर्ह्रौ घञ् णिति चेति घः। इण् वर्जनेन मिणो वर्जनात् न हनस्तङ्। संयोजितास्महे इति क्वचित् पाठः। भवद्भ्यां मद्विरहजातः श्रमो नैव अनुभविता नानुभविष्यते। पूर्ववन्मिण्। एवं सति युवां मम प्रीत्यै कल्प्तास्थः। नेम् पे ड्याः इति क्लृपो ड्याः पे इम्निषेधात् ड्यामुभयपदित्वं गम्यते॥ २०॥ २१ ॥ भ०

उक्तवन्तावित्यादि। ततोऽनन्तरं पौलस्त्यवानरौ विभीषणसुग्रीवौ रामं वच उक्तवन्तौ। हे काकुत्स्थ! त्वया सह यत् आवां गन्तास्वः गमिष्यावः, अयम् अनुग्रहः प्रसादः इति॥ २२॥ ज० म०

उक्तवन्तावित्यादि। ततो रामवचनानन्तरं पौलस्त्यवानरौ रामं वच उक्तवन्तौ। किं तदित्याह,—हे काकुत्स्थ! आवां त्वया सह गन्तास्वः गमिष्यावः। अयं तव अनुग्रहः प्रसादः॥ २२॥ भ०

अनुमन्तास्वहे इत्यादि। किञ्च, सुरेन्द्रत्वञ्च इन्द्रत्वं प्राप्तौ अपि आवां त्वया सह भवन्तम् उत्पद्यमानं विरहं वियोगं न अनुमन्तास्वहे। किं पुनः त्वया प्रत्तं दत्तम्। अच उपसर्गात्तः। आस्पदं राज्यं प्राप्तवन्तौ। अत्र सुतरामेव त्वया सह वियोगो न युज्यते। भवन्तं विरहमिति वर्त्तमानकालः नानुमन्तास्वह इति भविष्यत्कालेन सम्बध्यमानः साधुर्भवति, धातुसम्बन्धे प्रत्यया इति। एतावच्छुद्विलसितम्॥२३॥ज०म०

अनुमन्तास्वहे इत्यादि। सुरेन्द्रत्वं प्राप्यापि आवां त्वया सह भवन्तम् उत्पत्स्यमानं विरहं न अनुमन्तास्वहे। प्राप्येत्यत्र प्राप्ताविति क्वचित् पाठः। त्वया किम् आस्पदं प्रभुत्वम् आवाभ्यां न प्रत्तं न दत्तम्? राज्यं प्राप्तवन्तावेव॥ २३॥ भ०

ततः कथाभिः समतीत्य दोषामारुह्य सैन्यैः सह पुष्पकं ते ।
सम्प्रस्थिता वेगवशादगाधं प्रक्षोभयन्तः सलिलं पयोधेः ॥ २४ ॥
सेतुं महेन्द्रं मलयं सविन्ध्यं समाल्यवन्तं गिरिमृष्यमूकम् ।
सदण्डकारण्यवतीञ्च पम्पां रामः प्रियायाः कथयन् जगाम ॥२५॥

एते ते मुनिजनमण्डिता दिगन्ताः
शैलोऽयं लुलितवनः स-चित्रकूटः ।
गङ्गेयं सुतनु ! विशालतीररम्या
मैथिल्या रघुतनयो दिशन् ननन्द ॥ २६ ॥

अथ सर्गभङ्गार्थं छन्दोऽन्तरेण प्रकीर्णमाह,

तच्छेषभूतमर्थवशात् प्रकीर्णकक्रियाविलसितं दर्शयन्नाह

तत इत्यादि । कथाभिः अवान्तरोक्ताभिः दोषां रात्रिं समतीत्य यापयित्वा । ततोऽनन्तरं ते रामादयः पुष्पकं विमानम् आरुह्य सैन्यैः सह अयोध्यां यातुं प्रस्थिताः । पयोधेः सलिलम् अगाधम् अक्षोभ्यमपि वेगवशात् प्रक्षोभयन्तः ॥ २४ ॥ ज० म०

तत इत्यादि । ततोऽनन्तरं कथाभिः वाक्यैः दोषां रात्रिं समतीत्य गमयित्वा ते श्रीरामविभीषणादयः सैन्यैः सह पुष्पकं विमानम् आरुह्य वेगवशात् समुद्रस्य अगाधम् अतिविस्तरं जलं प्रक्षोभयन्तः अयोध्यां सम्प्रस्थिताः सम्यक् प्रस्थानं कृतवन्तः ॥ २४ ॥ भ०

सेतुमित्यादि । एष सेतुः त्वदर्थे मया कारितः । एते च महेन्द्रादयः इत्यादि प्रियायाः सीतायाः कथयन् जगाम अयोध्याभिमुखं गतवान् ॥ २५ ॥ ज० म०

सेतुमित्यादि । रामः प्रियाया निकटे तानि कथयन् जगाम ॥ २५ ॥ भ०

एते इत्यादि । शोभना तनुः शरीरं यस्याः सा त्वम् । हे सुतनु ! क्वचित् उकारान्तमपि स्त्रियाः प्रोक्तमिति वचनात् नदीसंज्ञकत्वात् सम्बुद्धिह्रस्वत्वम् । कृषिचमितनिसर्जिमज्जिभ्य इत्यौणादिकस्तनुशब्दः । एते दिगन्ताः मुनिजनैः तन्निवासिभिः मण्डिताः भूषिताः, अयं स चित्रकूटः, यत्र भरतेन आगम्य दृष्टोऽस्मि । लुलितवनोऽस्मद्वेगवशात्, इयञ्च गङ्गा विशालतीर्थतया रम्या, एवं मैथिल्या दिशन् कथयन् ननन्द मुदितः ॥ २६ ॥ ज० म०

एते इत्यादि । रघुतनयौ रामौ मैथिल्या इति दिशन् कथयन् ननन्द । किम्

शिञ्जानभ्रमरकुलाकुलाग्रपुष्पाः
शीताम्भःप्रविलयसंप्लवातिलीनाः।
एते ते सुतनु! पुरीजनोपभोग्या
दृश्यन्ते नयनमनोरमा वनान्ताः॥ २७॥

स्थानं नः पूर्वजानामियमधिकमसौ प्रेयसी पूरयोध्या
दूरादालोक्यते या हुतविविधहविःप्रीणिताशेषदेवा।
सोऽयं देशो रुदन्तं पुरजनमखिलं यत्र हित्वा प्रयातौ
आवां सीते! वनान्तं सह धृतधृतिना लक्ष्मणेन क्षपान्ते॥ २८॥

इत्याह,—हे सुतनु! ते पूर्वम् अनुभूता मुनिजनैः शोभिता दिगन्ताः, सोऽयं मनोहरः चित्रकूटपर्वतः। सा इयं महातीरेण रमणीया गङ्गा। तीरेत्यत्र तीर्थेति पाठे— महातीर्थैः रमणीया इत्यर्थः॥ २६॥ भ०

शिञ्जानेत्यादि। हे सुतनु! एते वनान्ताः पुर्य्यां दृश्यन्ते। शिञ्जानैः कूजद्भिः भ्रमरकुलैः आकुलाग्राणि पुष्पाणि येषां वनान्तानां, प्रविलीयतेऽस्मिन्निति प्रविलयः एरच्, मिमीलियां खलचौः प्रतिषेधो वक्तव्यः, विभाषा लीयतेरित्यात्त्वं न भवति। शीताम्भसः प्रविलयः कुल्या, तेन यः संप्लवः स्नापना, तेन अभिलीनाः, कुल्यया सिच्यमानमूलत्वात्। अत एव नयनमनोरमाः। रमयतीति कर्त्तर्य्यच्, पश्चात् षष्ठीसमासः। एवञ्च पुरीजनानाम् अयोध्यानिवासिनाम् उपभोग्याः तथा॥ २७॥ ज० म०

शिञ्जानेत्यादि। हे सुतनु! एते ते वनान्ता दृश्यन्ते। कीदृशाः?—शिञ्जानैः कलं ध्वनद्भिः भ्रमरसमूहैः व्याप्तानि अग्रपुष्पाणि येषां; प्रविलीयन्ते संश्लिष्यन्ते यत्र स प्रविलयः कुल्या, शीताम्भाश्च असौ प्रविलयश्चेति तेन यः संप्लव आप्यायनं तेन अतिलीनाः कुल्यया अभिषिच्यमानमूलत्वात् पुरीजनोपभोग्याः, सौन्दर्य्यात् नयनमनोरमाः॥ २७॥ भ०

स्थानं न इत्यादि। हे सीते! असौ पुरी नोऽस्माकं पूर्वजानां स्थानम्, अधिकं अत एव च प्रेयसी प्रियतमा दूरादालोक्यते, उच्चप्रासादयोगात्। या हुतैः विविधैः हविर्भिः आज्यादिभिः प्रीणिता अशेषदेवा यत्र। यत्र देशे पुरजनम् अखिलं समस्तं रुदन्तं क्षपान्ते उषसि हित्वा त्यक्त्वा छलेन आवां वनान्तं प्रयातौ सोऽयं देशः। सह लक्ष्मणेन धृतधृतिना धृतसौमनस्येन॥ २८॥ ज० म०

तूर्य्याणामथ निस्वनेन सकलं लोकं समापूरयन्
विक्रान्तैः करिणां गिरीन्द्रसदृशां क्ष्मां कम्पयन् सर्वतः ।
सानन्दाश्रुविलोचनः प्रकृतिभिः सार्द्धं सहान्तःपुरः
सम्प्राप्तो भरतः समारुतिरलं नम्रः समं मातृभिः ॥ २९ ॥
अथ ससम्भ्रमपौरजनावृतो भरतपाणिधृतोज्ज्वलचामरः ।
गुरुजनद्विजवन्द्यभिनन्दितः प्रविशति स्म पुरं रघुनन्दनः ॥३०॥

स्थानं न इत्यादि । हे सुतनु ! सा इयं पुरी दूरादालोक्यते । असौ अयोध्या नोऽस्माकं पूर्वजानाञ्च पितृपितामहादीनाञ्च स्थानम् । अतिशयं प्रेयसी प्रियतमा याऽयोध्या हुतैः विविधैः हविर्भिः आज्यादिभिः प्रीणिता तर्पिता अशेषा देवा यत्र तादृशी । हे सीते ! सोऽयं देशः,—यत्र रुदन्तम् अखिलं पुरजनं हित्वा त्यक्त्वा क्षपाया रात्रेः अन्ते धृतधृतिना लक्ष्मणेन सह आवां वनान्ते प्रयातौ गतौ ॥ २८ ॥ भ०

तूर्य्याणामित्यादि । अथ अनन्तरं भरतो हनूमतः समुपलब्धरामवृत्तान्तत्वात् सानन्दाश्रुविलोचनः सानन्दाश्रुणी विलोचने यस्य तथाभूतः, प्रकृतिभिः अमात्यादिभिः सार्द्धं, सहान्तःपुरः अन्तःपुरेण समं, मातृभिः कौसल्यादिभिः सह, हनूमता च सह अयं नम्रः अनुद्धतः समीपं मे नाथ आगत इति । तूर्य्याणां निस्वनेन सकलं लोकं मार्गप्राप्तं समापूरयन् व्याप्नुवन् । करिणाञ्च गिरीन्द्रसदृशां त्यदादिषु दृश इति चकारात् क्विन् । विक्रान्तैः पादन्यासैः क्ष्मां कम्पयन् सर्वतो विधूनयन् । सम्प्राप्तः रामसमीपम् इत्यर्थः ॥ २९ ॥ ज० म०

तूर्य्याणामित्यादि । अथ अनन्तरं रामवार्त्तां प्राप्य प्रकृतिभिः अमात्यैः सार्द्धम्, अन्तःपुरेण सहितो मारुतिना हनूमता सहितः, मातृभिः सह भरतः सम्प्राप्तः आगतः । कीदृशः ?—तूर्य्याणां चतुर्विधवाद्यानां निस्वनेन ध्वनिना सकलं लोकं भुवनं समापूरयन् । गिरीन्द्रसदृशां कुलपर्वततुल्यानां करिणां हस्तिनां विक्रान्तैः विक्रमैः पादविक्षेपैः वा, क्ष्मां पृथिवीं सर्वतः सर्वां कम्पयन् चालयन्, तस् क्षेरिति द्वितीयायास्तस् । आनन्दाश्रुसहिते विलोचने यस्य तादृशः, नमनशीलः ॥ २९ ॥ भ०

अथेत्यादि । अथ भरतसम्प्राप्त्यनन्तरं रघुनन्दनो रामः ससम्भ्रमेण सादरेण सहर्षेण पौरजनेन आवृतः भरतपाणिना धृतम् उज्ज्वलं चामरं यस्य गुरुजनेन

प्रविधाय धृतिं पुरौजनानां युवराजं भरतं ततोऽभिषिच्य।
जघटे तुरगाध्वरेण यष्टुं कृतसम्भारविधिः पतिः प्रजानाम् ॥२१॥
इदमधिगतमुक्तिमार्गमित्थं
विवदिषतां वदताञ्च सन्निबन्धात्।

द्विजैः वन्दिभिश्च स्तुतिपाठकैः अभिपूजितः अभिष्टुतः सन् पुरम् अयोध्यां प्रविशति स्म प्रविष्टः ॥ ३० ॥ ज० म०

अथेत्यादि। अथ अनन्तरं रघुनन्दनो रामः पुरम् अयोध्यां प्रविष्टवान्। कीदृशः?—ससम्भ्रमेण सादरेण पौरजनेन आवृतो वेष्टितः। ससम्भ्रमेत्यत्र ससम्मर्देति क्वचित् पाठः। सम्मर्दो हर्षः। पुनः कीदृशः?—भरतपाणिना धृतम् उज्ज्वलं चामरं यस्य, गुरुजनैः द्विजैः वन्दिभिः स्तुतिपाठकैश्च अभिनन्दितः श्लाघितः ॥ ३० ॥ भ०

प्रविधायेत्यादि। प्रविश्य च पुरं प्रजानां पती रामः जनानां धृतिं प्रीतिरूपचेतोवृत्तिं पराम् उत्कृष्टां प्रविधाय कृत्वा भरतञ्च युवराजम् अभिषिच्य। ततोऽनन्तरं तुरगाध्वरेण अश्वमेधेन यष्टुं जघटे चेष्टितवान्। कृतसम्भारविधिः, संभ्रियत इति सम्भारः द्रव्यगण इत्यर्थः। कृतोऽनुष्ठितः सम्भारस्य विधिरितिकर्त्तव्यतालक्षणो येन स इति ॥ २१ ॥ ज० म०

प्रविधायेत्यादि। ततोऽनन्तरं प्रजानां पती रामः पुरौजनानां धृतिं प्रविधाय दानसंवादनादिभिः प्रकृष्टां कृत्वा युवराजं भरतम् अभिषिच्य यौवराज्ये भरतस्य अभिषेकं कृत्वा कृतसम्भारविधिः कृतयज्ञोचितसामग्रीकः सन् तुरगाध्वरेण अश्वमेधेन यज्ञेन यष्टुं यागं कर्त्तुं जघटे चेष्टितवान् ॥ २१ ॥ भ०

कुलवितरणविद्यावैभवाम्बष्ठगोष्ठीवरहरिहरखानख्यातवंशाम्बुधीन्दोः।
भुवनविदितकीर्त्तिः सेनगौराङ्गतो योऽजनि स भरतसेनो भट्टिटीकाञ्चकार ॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां पुरप्रवेशो नाम द्वाविंशतितमः सर्गः।

समाप्तश्चायं भट्टिग्रन्थः।

---

नायकाभ्युदयान्तं महाकाव्यमिति परिसमापय्य तत्र जयमिच्छता अखिन्नादरः कर्त्तव्य इति दर्शयन्नाह

इदमित्यादि। इदं महाकाव्यम् उक्तेः वचनस्य यो मार्गः पन्थाः सुसंस्कृत-

जनयति विजयं सदा जनानां
युधि सुसमाहितमैश्वरं यथास्त्रम् ॥ ३२ ॥
दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम्।
हस्तामर्ष इवान्धानां भवेद् व्याकरणादृते ॥ ३३ ॥
व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम्।
हता दुर्मेधसश्चास्मिन् विदुषां प्रीतये मया ॥ ३४ ॥

शब्दलक्षणः प्रपञ्चितः, तेन चित्रं विस्मयनीयं, सुसमाहितम् अलङ्कारयुक्तम्, अधिगतं परिज्ञातं, सज्जनानां विवदिषतां वक्तुम् इच्छतां वदताञ्च वक्तुं प्रवर्त्तमानानां सदा विजयं जनयति सन्निबन्धनात् शोभनबन्धात् कारणात्, यथास्त्रम् ऐश्वरं पाशुपतम्, अधिगतमुक्तिमार्गम् अधिगतः प्राप्तः प्रज्ञातो मोचनमार्गः क्षेपणमार्गो येन चित्रं नानावर्णकेन चित्रितत्वात् सुसमाहितं युधि संग्रामे विजयं विदधाति तद्वत् ॥ ३२ ॥ ज० म०

तस्मात् आदरः कर्त्तव्य इति तत्रापि य एव व्याकरणम् अधीतवान् तस्यैव अत्र आदरो युक्त इति दर्शयन्नाह

दीपतुल्य इत्यादि। अयं प्रबन्धो महाकाव्यसंज्ञकः प्रबध्यते विरच्यत इति कृत्वा शब्दलक्षणमेव चक्षुः येषां तेषां, दीपतुल्यः अत एव एतत् काव्याधिगमात् स्वातन्त्र्येण अन्यानपि शब्दान् प्रयोक्तुं क्षमत्वात् व्याकरणादृते विना हस्तामर्ष इव अन्धाना हस्तामर्ष इवावबोधः, यथा अन्धानां हस्तेन घटपटादिवत् स्वापराह्नस्थसंस्थानमात्र-परिज्ञानं यथावस्थितस्वरूप-परिज्ञानम् एवम् अनधीतव्याकरणाना न शब्दस्वरूपपरि-ज्ञानम्, अन्यत्र शब्दश्रवणात् ततश्च तत्स्वरूपापरिज्ञानात् कुतोऽपि अन्यशब्दप्रयोग इति ॥ ३३ ॥ ज० म०

एवञ्च कृत्वा विद्वद्भिः अनुबध्यमानेन मया इदं काव्यं कृतमिति दर्शयन्नाह

व्याख्यागम्यमित्यादि। व्याख्यागम्यं व्याख्यानात् विना बोद्धुं न शक्यते। किमर्थम् ईदृशं कृतमिति चेत्? उत्सवः सुधियाम् अलं शास्त्रेऽक्षुण्णबुद्धीनां परं प्रमोदो जायते। एवञ्च सति अस्मिन् काव्ये विषयभूतदुर्मेधसो व्याकरणवाह्याः मया हताः न अनुगृहीताः, तस्मात् विद्वत्प्रियतया विद्वांसः प्रिया यस्य मम विद्वत्प्रियः तस्य तया तया हेतुभूतयेति ॥ ३४ ॥ ज० म०

काव्यमिदं विहितं मया वलभ्यां
श्रीधरसूनुनरेन्द्रपालितायाम् ।
कीर्त्तिरतो भवतान्नृपस्य तस्य
क्षेमकरः क्षितिपो यतः प्रजानाम् ॥ ३५ ॥

इति भट्टिकाव्ये द्वाविंशतितमः सर्गः ।

समाप्तश्चायं भट्टिग्रन्थः ।

यत्रेदं काव्यं कृतं तत् दर्शयन्नाह

काव्यमित्यादि । मया इदं काव्यं विहितं कृतं श्रीधरसूनुना नरेन्द्रनाम्ना नृपेण पालितायां रक्षितायां वलभ्यां वलभीनामपुर्य्याम्, अत एव काव्यविधानाय या कीर्त्तिः सा तस्यैव राज्ञी भवतात्, आशिषि तातङ् । यतः प्रजानां क्षेमकरः प्रेमानुकूलः । आनुलोम्ये टः ॥ ३५ ॥ ज० म०

इति वलभीवास्तव्यस्य श्रीस्वामिसूनोर्भट्टमहाब्राह्मणस्य महावैयाकरणस्य कृतौ
रावणवधे महातिङन्तकाण्डे लङ्विलसितनाम्नो नवमपरिच्छेदस्य
जटीश्वरी जयदेवी जयमङ्गल इति च नामभिस्त्रिभिः
सुप्रसिद्धस्य अनेकशास्त्रव्याख्यानुकृतौ टीकायां
काव्यस्य अयोध्याप्रत्यागमनं नाम
द्वाविंशः सर्गः ।
जयमङ्गलकृता टीका समाप्ता ।

———